## आर्॰ टी॰ एच्॰ ग्रिफ़िथ महोदयः ( १८६१-१८७८ ख्रि॰ )

महाविद्यालयस्येतिहासविषये १८६१ वत्सरादारभ्य १८८० पर्यन्तं न खलु काचिन्निश्चिता सामग्री लिखितं साक्ष्यं वा समुपलभ्यते। अतश्च विभिन्नस्थलेभ्यो यथासंभवं संगृह्यैव वर्णनमत्र किञ्चिल्लिख्यते। एतत्कालाभ्यन्तरे १८६१तः १८७८ पर्यन्तम् **आर्॰ टी॰ एच्॰ ग्रिफ़िथ** ( R. T. H. Griffith ) महोदयः, तदनन्तरं १८७६ पर्यन्तं च **जे॰ सी॰ नेसफ़ील्ड** ( J. C. Nesfield ) महोदयोऽध्यक्षपदमलंचक्रतुः। एनयोर्मध्ये प्रथमः खलु संस्कृतभाषाया अतीव लब्धप्रतिष्ठो विद्वानासीत्। तेन निर्मितानि ग्रन्थरत्नान्यद्यत्वेऽपि तत्कीर्त्तिं दिगन्तेषु प्रसारयन्ति। तेन कृतो वैदिकसंहितानामिंग्लिशभाषायामनुवादः केन श्रुतो न भवेत्। वैलन्टाइनमहोदयस्येव तस्यापि प्रभावो महाविद्यालयीयाध्यापकेषु साहित्यिककार्यकरणाय नितरां समुत्साहकरो बभूव। अयमेव प्रभावो मूर्त्तिमानिव 'पण्डित'-( अथवा 'काशीविद्यासुधानिधि'- ) नामकस्य मासिकस्य संस्कृतमहाविद्यालयमुखपत्रस्य रूपेण १८६६ वत्सरे आविरासीत्। प्राचीन-दुर्लभसंस्कृतग्रन्थरत्नानां यथासंभवमिंग्लिशभाषानुवादेन सह प्रकाशनमेवासीत्तस्य मुख्यमुद्देश्यम्। महाविद्यालयस्याश्रयेण तदध्यापकानां सहयोगेन चास्य प्रकाशनं १९१७ वत्सरपर्यन्तं प्रावर्तत।

## द्वितीयकालवैशिष्ट्यम्।

सोऽयं द्वितीयः कालः सर्वस्मिन्नपि विद्यालयीयेतिहासेऽतितरां वैशिष्ट्यमावहति। अस्मिन्नेव काले विद्यालयेन स्थिरता, महती प्रतिष्ठा, लोकप्रियता च प्रथमवारमासादिताः। अस्मिन्नेव काले न केवलं संस्कृतपाठ्यक्रमस्य व्यवस्थामुद्दिश्य, किन्तु संस्कृतपण्डितेषु नूतनपाश्चात्यभाषाविद्ययोः प्रचारार्थम्, उत्कृष्टसाहित्यिककार्यकरणाय समुचितवातावरणसमुत्पत्तये च विशेषतः प्रयत्नपरा अभूवन्नधिकारिणः।

एतत्कालिकवृत्तावबोधकसाक्ष्यस्यापर्याप्तत्वं पूर्वमेव निदर्शितमस्माभिः। तथापि दिष्ट्या १७७८ वत्सरात्प्रभृति विद्यालयेऽध्ययनसमाप्त्यवसरे छात्रेभ्यो वितीर्णानां प्रमाणपत्राणां काश्चित्प्रतिलिपय एकस्मिन् प्राचीनवृत्तपुस्तके अद्याप्यवशिष्टा द्वितीयकालेऽनुस्त्रियमाणस्य पठनपाठनक्रमस्य सामान्येन प्रकारं सूचयन्ति। न केवलं तत्तच्छास्त्रीयाध्ययनाध्यापनपद्धतेरेवोत्कृष्टता, किन्तु कस्मिन्नपि शास्त्रे विशिष्टपाण्डित्यसंपादनात् प्राक् छात्रैरन्येष्वपि उपयोगिविषयेषु योग्यतासंपत्तये तदा प्रयत्यते स्मेत्यपि तत एव प्रतीयते। अत एव तस्मिन् काले विद्यालयात् म॰ म॰ पं॰ गङ्गाधरशास्त्रि, म॰ म॰ पं॰ दामोदरशास्त्रिसदृशा दिगन्तविश्रान्तकीर्त्तयो विशिष्टा विद्वांसः प्रादुरभवन्। महामहो॰ पं॰ शिवकुमारशास्त्रि, म॰ म॰ पं॰ कैलासचन्द्रशिरोमणि, पं॰ बालशास्त्रि, म॰ म॰ पं॰ गङ्गाधरशास्त्रिसदृशा विश्वविश्रुता विद्वांसश्च तदा विद्यालयीयगुणगरिम्णाकृष्टहृदया अध्यापकपदान्यलमकार्षुः। विदुषां मनोऽनुरञ्जनाय काश्चित् प्रमाणपत्रप्रतिलिपयोऽत्र समुद्ध्रियन्ते :—



पं० श्रीराजाराम शास्त्री कार्लेकर,
अध्यापक, १८५६—१८७५



डाक्टर जी० थीबो,
प्रिंसिपल, १८७६—१८८८



प्रोफ़ेसर ए० ई० गफ़,
ऐंग्लो संस्कृत विभाग, १८६८—



रायबहादुर बाबू प्रमदादास मित्र,
असिस्टैंट प्रोफ़ेसर, ऐंगलो-संस्कृत-विभाग,
१८६२



१ म० म० पं० गङ्गाधर शास्त्री तैलंग (अध्यापक, १८७६—१६०६)
२ म० म० पं० कैलासचन्द्र शिरोमणि (अध्यापक, १८६८—१६०७)
३ म० म० पं० दामोदर शास्त्री भारद्वाज (अध्यापक, १८७६—१६०८)
४ म० म० पं० शिवकुमारमिश्र शास्त्री (अध्यापक, १८७५—१८७६)
५ म० म० पं० तात्याशास्त्री पटवर्द्धन (अध्यापक, १८८०—१६१६)



म० म० पं० सुधाकर द्विवेदी,
अध्यापक, १८८८—१६१०



म० म० पं० रामशास्त्री तैलंग,
अध्यापक, १८८८—१६२२

( ३ )

गङ्गाधरशास्त्री मानवल्ल्युपनामक आन्ध्रः पण्डितवरनरसिंहशास्त्रिपुत्रो नगर एव रघुवंशप्रभृतीनि काव्यानि सिद्धान्तकौमुदीं चाधीत्यैकोनसप्तत्यधिकाष्टादशशततमे खीष्टवर्षे काशिकराजकीयपाठशालायां प्रविष्टो मनोरमाशेखरादिमहाभाष्यान्तान् व्याकरणग्रन्थान्, मनुस्मृतिमिताक्षरावीरमित्रोदयदायभागदत्तकमीमांसा धर्मशास्त्रे, साहित्ये च कुवलयानन्दसाहित्यदर्पणकाव्यप्रकाशादिकं, न्यायप्रकरणग्रन्थान् मुक्तावल्यादीन्, व्युत्पत्तिवादशक्तिवादौ शब्दखण्डे, सांख्ये तत्त्वकौमुदीसांख्यप्रवचनभाष्यादि, परिभाषापञ्चदश्यादीन् वेदान्तप्रकरणग्रन्थाँश्चाधीत्याधीतशास्त्रेषु प्रतिवर्षं दत्तोत्तमपरीक्षो लब्धबृहन्मासिकविविधोत्तमपारितोषिकः साम्प्रतमधीतानधीतग्रन्थाध्यापनाद्यशेषपाण्डित्यकार्यनिर्वाहक्षमः सम्पन्नो वर्णनीया चास्य काव्यादिनिबन्धरचना प्रागल्भ्योद्रेकश्च व्याकरणधर्मशास्त्रशब्दखण्डेषु प्रशंसनीयतम इत्येतदर्थबोधकमिदं पत्रं सुशीलाय कुलीनाय मेधाविनेऽस्मै वितरन्ति ।

बालशास्त्री
वापूदेव शास्त्री
पण्डित वस्तीराम शर्म्मा
वामनाचार्याः
पं० वेङ्कटेश शर्म्मा
देवकृष्ण शर्मा
पं० शीतलाप्रसाद शर्म्मा
शिवकुमार शर्म्मा
कालीप्रसाद शर्मा
कैलासचन्द्र शर्म्मा
राममिश्र शास्त्री

John C. Nesfield
Principal,
Benares College,
The 15th January, 1879

## तृतीयः कालः

(१८८०—१९१८)

### डाक्टर जी० थीबो महोदयः ( १८७९-१८८८ ख्रि० )

जर्मनीदेशाभिजनो डा० जी० थीबो ( Dr. G. Thibaut ) महोदयः १८७९ प्रभृति १८८८ पर्यन्तमध्यक्षपदमलंचकार । ग्रिफिथमहाशयवदसावपि संस्कृतभाषायां निष्णातः । तेनापि निर्मिता ज्यौतिषदर्शनादिविषयका ग्रन्था अतिप्रसिद्धाः । तदाचरणेन तत्प्रेरणया चापि लब्धोत्साहा म० म० पं० गङ्गाधरशास्त्रि, म० म० पं० बापूदेवशास्त्रि म० म० पं० सुधाकरद्विवेदि-सदृशाः प्रसिद्धतमा अध्यापकाः साहित्यसम्पत्तिसमृद्धये एकचित्ताः प्रायतन्त ।

परन्तु तदीयकार्यकालस्य मुख्यं वैशिष्ट्यं तु १८८० वत्सरे जायमानो राजकीयसंस्कृतपरीक्षाणां प्राथमिकः प्रारम्भ एव । तत्कालपर्यन्तं प्रचलितानां 'वार्षिकपरीक्षाणां' स्थान एवैतासां

'पदवीपरीक्षाणां' स्थापना समजनि। एतासां पदवीपरीक्षाणां पाठ्यक्रमस्तु नैव नितरां नूतन आसीत्। प्रायेण किञ्चित्कालात्प्रभृति परम्पराप्राप्त एव पाठ्यक्रमः किञ्चित्परिशोध्य तदर्थं परिगृहीतोऽधिकारिभिः। तदेवमङ्गीकृतस्य पाठ्यक्रमस्य विशेषास्त्वेवं संग्रहीतुं शक्यन्ते—

( १ ) गणितस्य, इतिहासस्य ( रामायणमहाभारतयोराधारेण ), अनुवादस्य च प्रथम-मध्यमपरीक्षयोः सन्निवेशः।

( २ ) प्रायेण सर्वविषयसामान्या एकैव मध्यमा परीक्षा।

( ३ ) तस्यां च मध्यमपरीक्षायां व्याकरणस्य, धर्मशास्त्रस्य, न्यायस्य, सांख्यस्य, मीमांसायाः, योगस्य, वेदान्तस्य, साहित्यस्य, काव्यस्य, इतिहासस्य, गणितस्य, अनुवादस्य निबन्धस्य च ज्यौतिषच्छात्रवर्जं सर्वेषां कृते आवश्यकत्वेन सन्निवेशः।

( ४ ) मध्यमायां सिद्धान्तकौमुदीविषये एकमेव प्रश्नपत्रम्।

( ५ ) उत्तमपरीक्षायां तत्तच्छास्त्रीयपाठ्यक्रमस्य यथासंभवं सर्वाङ्गीणा पूर्णता।

उदाहरणार्थं तस्यैव पाठ्यक्रमस्य प्रथममध्यमपरीक्षाग्रन्था वेदाचार्यव्याकरणाचार्य-परीक्षाग्रन्थाश्चाधो निर्दिश्यन्ते—

## प्रथमापरीक्षाग्रन्थाः।

१—**प्रथमदिने,** व्याकरणे क ख ग घेतिचिह्नितानामेकतमो ग्रन्थः परीक्षोपयोगी।

( क ) समासचक्रम्, धातुरूपावली, सुबन्तरूपावली च।

( ख ) लघुकौमुदी।

( ग ) सारस्वतचन्द्रिके।

( घ ) मुग्धबोधः।

२—**द्वितीयदिने,** न्याये गणिते च—

तर्कसंग्रहो भाषापरिच्छेदो वा। संकलनव्यवकलनगुणनभाजनानि।

३—**तृतीयदिने,** काव्येतिहासयोः—

रघुवंशस्य सर्गचतुष्टयम् २–५। वाल्मीकिरामायणे प्रथमसर्गः।

महाभारतस्य शीलनिरूपणाध्यायः।

४—**चतुर्थदिने,** अनुवादे—

सरलसंस्कृतवाक्यानां भाषासु देशभाषीयवाक्यानां संस्कृतेऽवतारश्च।

## मध्यमपरीक्षाग्रन्थाः।

१—**प्रथमदिवसे,** व्याकरणे धर्मशास्त्रे च—

सिद्धान्तकौमुदी कृदन्तान्ता।

तिथिनिर्णयो, नन्दपण्डितकृता तत्त्वमुक्तावली वा।

२—**द्वितीयदिवसे,** न्याये सांख्ये च—

सिद्धान्तमुक्तावली सम्पूर्णा। सांख्यचन्द्रिका।

३—**तृतीयदिवसे,** मीमांसायां योगे वेदान्ते साहित्ये च—

लौगाक्षिभास्करः, मीमांसापरिभाषा वा। योगचन्द्रिका।

वेदान्तसारः। श्रीमद्भगवद्गीता श्रीधरस्वामिकृतटीकासहिता वा।

चन्द्रालोकः।

४—**चतुर्थदिवसे,** काव्येतिहासयोः—

किरातार्जुनीयं सर्गत्रयम् १–३। माघस्य सर्गद्वयम् १–२। शाकुन्तलनाटकम्। वाल्मीकिरामायणस्य सुन्दरकाण्डम्, तस्य स्थाने शाश्वतधर्मदीपिका गङ्गाधरशास्त्रि-संकलिता वा।

५—**पञ्चमदिवसे,** अनुवादे, गणिते च—

संस्कृतस्य भाषासु भाषीयवाक्यानां च संस्कृतेऽवतारः।

संस्कृतेन यथावत् शास्त्रीयस्य व्यावहारिकस्य च स्वाभिप्रायस्य प्रकाशनम्।

लीलावत्याः परिकर्माष्टकम्।

## वेदाचार्य्यपरीक्षायां परीक्षणीयग्रन्थाः।

१—**प्रथमदिवसे।**

संहिता। ऋग्वेदादीनामेकतमशाखीया भाष्यसहिता सम्पूर्णा।

२—**द्वितीयदिवसे।**

ब्राह्मणम्। स्वपरिगृहीतशाखीयं सव्याख्यं सम्पूर्णम्।

३—**तृतीयदिवसे।**

आरण्यकम्। स्वपरिगृहीतशाखीयं सव्याख्यं सम्पूर्णम्।

श्रौतसूत्रम्। तथा

स्मृतिसूत्रम्। तथा

४—**चतुर्थदिवसे।**

प्रातिशाख्यम्।

पाणिनिव्याकरणम्। स्वरवैदिक्योः कौमुदी च।

५—**पञ्चमदिवसे।**

निघण्टुः सभाष्यः। शिक्षा सभाष्या।

पिङ्गलच्छन्दो भाष्यसहितम्। निरुक्तं तथा।

## व्याकरणाचार्यपरीक्षायां परीक्षणीयग्रन्थाः ।

**१—प्रथमदिवसे ।**

सिद्धान्तकौमुदी । सम्पूर्णा ।

परिभाषेन्दुशेखरः । तथा

**२—द्वितीयदिवसे ।**

मनोरमा अव्ययीभावान्ता ।

शब्दरत्नं तथा ।

**३—तृतीयदिवसे ।**

लघुशब्देन्दुशेखरः । सम्पूर्णः ।

**४—चतुर्थदिवसे ।**

भूषणम् । तथा

मञ्जूषा । तथा

**५—पञ्चमदिवसे ।**

महाभाष्यम् । नवाह्निकमङ्गाधिकारश्च ।

भाष्यप्रदीपः । तथा

विवरणम् । तथा

परं १८८७ वत्सरे पुनरपि परीक्षाणां पाठ्यक्रमस्य परिवर्तनमक्रियत । स एव पाठ्यक्रम एकेनैव रूपेण १९१८ पर्यन्तमन्ववर्तत । तदीयवैशिष्ट्यं त्वेवं संग्रहीतुं शक्यते—

( १ ) सर्वविषयसामान्याया एकस्या मध्यमपरीक्षायाः स्थाने व्याकरणन्यायज्यौतिष-विषयभेदेन विभिन्नमध्यमपरीक्षाणां संप्रवृत्तिः ।

( २ ) मध्यमपरीक्षायां सिद्धान्तकौमुदीविषयकस्यैकस्य पत्रस्य स्थाने षट् पत्राणि, अन्येषां धर्मशास्त्रादिविषयाणां बहिष्कारश्च ।

( ३ ) गणितस्य प्रथममध्यमपरीक्षाभ्यामितिहासस्य च मध्यमातो बहिष्कारः ।

( ४ ) उत्तमपरीक्षायां ग्रन्थानां ग्रन्थभागानां च पूर्वापेक्षया परिमाणदृष्ट्याल्पीयस्त्वम् ।

( ५ ) उत्तमपरीक्षाविषयेभ्यो वेदस्य निष्कासनम् ।

## डाक्टर ए० वेनिसमहोदयः ( १८८८-१९१८ ख्रि० )

डाक्टरथीबोमहोदयस्योत्तराधिकारी **डाक्टर ए० वेनिस** ( Dr. A. Venis ) महोदयो १८८८तः प्रभृति १९१८ पर्यन्तमध्यक्षपदमध्यतिष्ठत् । संस्कृतभाषायां विशेषतश्च दर्शनविषये निष्णातधीरसौ विदुषां वरेण्यो महाविद्यालये नानाविधां समुन्नतिं विदधच्चिरस्थायिनं



डाक्टर ए० वेनिस,
प्रिंसिपल, १८८८— १९१८

स्वप्रभावमजनयत्। तस्यैव प्रेरणया राजा मुंशी माधोलाल महोदयेन १९०५ वत्सरे संस्कृतछात्रेष्वनुसन्धानबुद्धेरुदयार्थे 'माधोलालच्छात्रवृत्तयः' स्थापिताः। मनोरमस्य सरस्वतीभवनपुस्तकालयस्थानस्य निर्माणेऽपि तस्यैव प्रभावो निदानमासीत्। १८९० वत्सरादारभ्य तन्निरीक्षणे प्रकाश्यमाना सुप्रसिद्धा 'विजयनगरसंस्कृतग्रन्थमाला' अपि तस्यैव प्रेरणया जनिमग्रहीत्। तत्प्रेरणयैव च सरस्वतीभवनपुस्तकालयाध्यक्षस्य नूतनमेकं पदमपि १९१४ वत्सरे शासकैः संस्थापितमासीत्।

तस्य खलु कार्यकाले विद्यालयः परमाम्प्रतिष्ठाकोटिमवाप्तवान्। एतस्मिन्हि समये तत्कार्यकालाच्चिराय पूर्वं विद्यालये नियुक्ताः, कालक्रमेणातितरां परिणतप्रज्ञाः, महाम० पं० सुधाकर द्विवेदि, म० म० पं० गङ्गाधरशास्त्रिप्रभृतयः सुगृहीतनामानो विद्वद्धौरेया अध्यापकाः पण्डितपत्रे विजयनगरसंस्कृतग्रन्थमालायां च दुर्लभानि नानाग्रन्थरत्नानि सम्पाद्य प्रकाशयन्तः स्वप्रतिष्ठाशिखरमारूढाः स्वयशोडिण्डिमैर्विद्यालयगौरवं चतुर्दिक्षु अघोषयन्। तस्यैव च कार्यकाले संस्कृतराजकीयपरीक्षाणां गौरवं लोकप्रियत्वं च दैनन्दिनीं वृद्धिमवाप्नोत्। अत एव १९०९ वत्सरे परीक्षाणां कृते नूतनस्य परीक्षासंचालक ( Registrar ) पदस्य स्थापनावश्यकी संजाता।

## चतुर्थः कालः।

( १९१८ तः प्रभृति अद्यापि प्रवर्तते )

१८८७ प्रभृति १९१८ पर्यन्तं परीक्षाणां पाठ्यक्रमः किञ्चित्परिवर्तनं विना एकरूपेणैवान्ववर्त्ततेति पुरस्तात्प्रतिपादितम्। परं तदनन्तरागामिनि अद्यापि प्रवर्तमाने च चतुर्थे कालेऽनेकपरिवर्तनान्युपगच्छतः पाठ्यक्रमस्य तद्विपरीतैवावस्था दृष्टिगोचरतामागच्छति। किञ्च राजकीयसंस्कृतपरीक्षाणां गौरवस्य लोकप्रियतायाश्च दैनन्दिनी वृद्धिः, डा० वेनिस समयादारब्धा, अद्यापि तथैव प्रवर्तते। ततश्च पाठ्यक्रमस्य परिवर्तनं परीक्षाणां लोकप्रियताया वृद्धिश्चैवास्य चतुर्थकालस्य प्रधानं वैशिष्ट्यम्।

### म० म० डाक्टर गङ्गानाथझामहोदयः ( १९१८-१९२३ ख्रि० )

अस्मिन्हि चतुर्थे काले १९१८तः १९२३पर्यन्तं महामहोपाध्यायो डा० गङ्गानाथझामहोदयोऽध्यक्षपदमलमकार्षीत्। विभिन्नविषयेषु अनेकोपयोगिनिबन्धानां निर्माणेन अनेकेषां दुरूहसंस्कृतग्रन्थानामिंग्लिशभाषायामनुवादेन च प्रख्यातवैदुष्यप्रकर्षो ह्यसौ महानुभावः। तत्कार्यकालस्य वै परीक्षापाठ्यक्रमे समुचितपरिवर्तनैर्विद्यालयसम्बन्धिभिरन्यैश्च परिष्कारैर्महद्वैशिष्ट्यं वर्तते। तच्चाधस्तात्प्रपञ्च्यते—

( १ ) प्रतिवर्षमुत्तीर्णाचार्यपरीक्षेभ्यः षड्भ्यश्छात्रेभ्यस्तत्तद्विषयेषु प्रौढपाण्डित्यसम्पादनाभिप्रायेण वर्षत्रयं यावद्दीयमानानां प्रत्येकं विंशतिरूप्यकपरिमितानां **विशिष्टाचार्यच्छात्रवृत्तीनां** १६२० वत्सरे समुपक्रमः ।

( २ ) १६२२ वत्सरे शुक्लयजुर्वेदाध्यापकपदस्य विद्यालये संस्थापना, अत एव च १६२४ वत्सरादारभ्य परीक्षासु तद्विषयस्य संनिवेशः ।

( ३ ) अमुद्रितानां प्राचीनसंस्कृतग्रन्थानां प्रकाशनार्थं **सरस्वतीभवनग्रन्थमालायाः** ( Sarasvati Bhavana Texts Series ) अनुसन्धानसम्बन्धिनिबन्धानां च प्रकाशनार्थं **सरस्वतीभवनानुशीलनपत्रिकायाः** ( Sarasvati Bhavana Studies ) १६२० वत्सरादारभ्य विद्यालयतः प्रवर्तनम् ।

( ४ ) दैनन्दिनं विस्तारमापद्यमानानां राजकीयपरीक्षाणां कार्यस्य सौष्ठवेन संचालनार्थं प्रान्तीयसंस्कृतपठनपाठनव्यवस्थासमितेः ( Board of Sanskrit Studies, U. P. ) प्रारम्भः ।

( ५ ) १६२२ वत्सरे तत्कालपर्यन्तं लब्धाङ्कानां किञ्चिदपकर्षे आचार्यपरीक्षार्थिभ्यो दीयमानाया उपाध्यायपदव्या निरासः, षड्भिर्वर्षैः सम्पाद्यमानाया आचार्यपरीक्षायाः प्रत्येकं वर्षत्रयेण पूर्यमाणयोः शास्त्र्याचार्यपरीक्षयोर्विभाजनं चाक्रियत । अस्मिन्नेव वत्सरे **चोत्तमपरीक्षापाठ्यक्रमसंशोधनसमितिरेका** शासकैरस्थाप्यत । तस्याश्च प्रस्तावानामनुसारेणाधोनिर्दिष्टानि परिवर्तनानि १६२५ वत्सरादारभ्य प्रावर्तन्त—

( १ ) यथाक्रममेकैकशश्च खण्डपरीक्षासु परीक्षार्थिनां प्रवेशस्य नियमः ।

( २ ) शुक्लयजुर्वेदस्य शास्त्र्याचार्यपरीक्षयोर्विषयत्वेन स्वीकृतिः ।

( ३ ) शास्त्र्याचार्यपरीक्षयोर्नियतस्य पाठ्यक्रमस्य परिशोधनेन नवीना व्यवस्था । एतद्व्यवस्थानुसारं च पाठ्यक्रमेऽनेकेषामुत्कृष्टप्राचीनग्रन्थानां समावेशः प्रथमवारमक्रियत । तद्यथा वाक्यपदीयस्य व्याकरणे, किरणावल्या न्याये, तत्त्वबिन्दु-तन्त्रवार्त्तिक-विधिविवेक-भावनाविवेकानां मीमांसायाम्, धर्मसूत्रगृह्यसूत्राणां च धर्मशास्त्रे ।

तदात्वे प्रचलितपाठ्यक्रमस्यैकदेशिताम्, अपेक्षितशास्त्रान्तरज्ञानमनपेक्ष्यैव एकान्तेन तत्तच्छास्त्रेषु वैशिष्ट्यसम्पादनप्रवृत्तिं च सन्नियन्तुम्, तत्तद्विषयेषु प्रौढतरस्य व्यापकतरस्य च पाण्डित्यस्य समवाप्तये आवश्यकानां ग्रन्थान्तराणां समावेशोऽपि तदैव पाठ्यक्रमे विहितः । तद्यथा व्युत्पत्तिवादस्य व्याकरणे, मुहूर्तचिन्तामणेर्बृहज्जातकस्य च ज्यौतिषे । सांख्यविषयकपाठ्यक्रमपरिवर्तनमप्येतदभिप्रायमूलकमेवासीत् ।

एवं च डा० झामहोदयसम्बन्धिकार्यकालस्य मुख्यं वैशिष्ट्यं १८८७ वत्सरात्प्रभृति एकरूपेणैव स्थितस्य पाठक्रमस्य प्रथमवारं परिवर्तनमेव । प्रान्तीयसंस्कृतपठनपाठनसमितेः संस्था-



म० म० डाक्टर गङ्गानाथ झा,
प्रिंसिपल, १९१८—१९२३



म० म० पं० राममिश्र शास्त्री,
अध्यापक, १८८०—१९०२



म० म० पं० गोपीनाथ कविराज,
प्रिंसिपल, १६२३– १६३७



सरस्वतीभवन पुस्तकालय

पनापि अपरा महती घटना। अस्याः समितेः प्रभावादेवातः प्रभृति नूतनायाः समुन्नतिभावनायाः प्रवेशः पदमलभत राजकीयसंस्कृतपरीक्षासु।

## म० म० पं० गोपीनाथकविराजमहोदयः ( १९२३-१९३७ ख्रि० )

डा० झामहोदयानन्तरं म० म० पं० गोपीनाथकविराजमहोदयः १९२३ प्रभृति १९३७ पर्यन्तमध्यक्षपदमध्यास्त। तस्यापि कार्यकाले विद्यालये परीक्षाविभागे चानेकविधं परिवर्तनं परिशोधनं परिवर्धनं च दृष्टिपथमवतरति। तद्यथा—

१९३०, १९३३ वत्सरयोः क्रमेण पुराणेतिहासाध्यापकस्य माध्ववेदान्ताध्यापकस्य च पदं विद्यानुरागिणः श्रेष्ठिवरस्य श्रीगौरीशंकरगोयेनकामहोदयस्य, वर्तमानप्रधानमध्वाचार्याणां च धनसाहाय्येन स्थापनामलभत।

पाठ्यक्रमसम्बन्धिनस्तु विशेषाः १९३१-१९३२ वत्सरयोः प्रवर्तिता अधो निर्दिश्यन्ते—

( १ ) प्रारम्भिकगणितस्य हिन्दीपाठ्यपुस्तकस्य च समावेशः प्रथमपरीक्षायाम्।

( २ ) हिन्दीभाषातः संस्कृते संस्कृताच्च हिन्दीभाषायामनुवादस्य, पञ्चतन्त्रभागानां च मध्यमाद्यखण्डत्रयेषु सन्निवेशः।

( ३ ) भक्तिविषयकमध्यमायाः स्थाने साहित्यमध्यमायाः स्थापना।

( ४ ) न्यायमध्यमायाः स्थाने दर्शनमध्यमायाः स्थापना।

( ५ ) कृष्णयजुर्वेदविषयस्य परीक्षासु, विद्यालये तदध्यापनप्रबन्धाभावेऽपि, प्रवेशः।

( ६ ) शास्त्र्याचार्यपरीक्षयोर्नियतस्य ज्यौतिषविषयस्य फलितगणितभेदेन विभागद्वयम्।

( ७ ) प्राचीनन्यायस्य स्वतन्त्रतया शास्त्र्याचार्यपरीक्ष्यविषयत्वेन स्वीकारः।

( ८ ) रामानुजवेदान्तस्य पुराणेतिहासस्य च परीक्ष्यविषयेषु सन्निवेशः।

## डा० मङ्गलदेवशास्त्री—परीक्षासंचालकः ( १९३२– )

१९३२ वत्सर एव तत्कालपर्यन्तमध्यक्षेणैव क्रियमाणस्य दैनन्दिनीं वृद्धिमुपगच्छतः परीक्षासंचालनकार्यस्य संपादनार्थं परीक्षासंचालकस्य ( Registrar, Sanskrit College Examinations, U. P., Benares ) पृथगेव पदमस्थाप्यत शासकैः। तस्मिन्पदे च डाक्टर मङ्गलदेवशास्त्री एव न्ययुज्यत। एतत्प्रबन्धानन्तरमेव प्रचलितपाठ्यक्रमविषये विद्यालयेतिहासे प्रायेण प्रथमवारमेव तदर्थं प्रार्थिता वाराणसीस्थास्तद्बहिःस्थाश्च विद्वांसः स्वाभिप्रायान् प्रकटीकृतवन्तः। तत्साहाय्येन सर्वासामपि परीक्षाणां पाठ्यक्रमो विशेषतः क्रमिकपरीक्षानियमानुकूल्येन परिष्कारमगच्छत्। परिष्कृतश्च सः १९३४ वत्सरीयपरीक्षाणां कृते प्रवर्तित आसीत्। तस्मिन्नेव वर्षे व्याकरणशास्त्रे प्राचीनाध्ययनाध्यापनशैल्याः पुनरुज्जीवनाभिप्रायेण प्राचीनव्याकरणविषयस्य शास्त्र्याचार्यपरीक्षयोः समावेशः समजनि।

पुराणेतिहासविषयकपाठ्यक्रमस्य तदध्ययनाध्यापनपरम्परानुसारेण परिशोधनमपि तस्मिन्नेव वत्सरेऽजायत। १९३६ वत्सरे जैनदर्शनम्, १९३७ वत्सरे च तुलनात्मकदृष्ट्या दर्शनानामध्ययनप्रवृत्तेः प्रोत्साहनार्थं सर्वदर्शनविषयः शास्त्र्याचार्यपरीक्षयोः प्रवेशमवाप्नुताम्।

तदेवं विद्यालयेतिहासस्यातितरां विशिष्टे कालेऽध्यक्षपदमधितिष्ठन् नैकशास्त्रानुशीलननिरतः प्रगाढपाण्डित्यः प्रशान्तधीरसौ कविराजमहोदयो सरस्वतीभवनग्रन्थमालायाः सरस्वतीभवनानुशीलनपत्रिकायाश्च संपादकत्वमाचरन् स्वयमपि प्राचीनानेकग्रन्थान् अनुसन्धानमूलकनिबन्धांश्च प्रकाशयन् विदुषां शासकानां च समर्हणायाः पात्रं १९३७ वत्सरे स्वाधिकाराद्विरतिमग्रहीत्।

१९३७ वत्सरादारभ्य तु अस्येतिवृत्तस्य लेखक एव महाविद्यालयस्याध्यक्षपदमधितिष्ठन्नास्ते। ततःप्रभृत्येव शासकानां विशेषाशया परीक्षासंचालनकार्यमपि रजिस्ट्रारपदभाजानेनैव निर्वर्त्यते। एतत्कालिकं वृत्तं वर्तमानकालकोटिपतितत्वेन नास्येतिवृत्तस्य विषयतामवगाहत इत्यत्रैव विरम्यतेऽस्माभिः। स एष

कालराहुसमाक्रान्त इतिहाससुधाकरः।
विबुधानां मुदे भूयाद् भूयो यत्नेन रक्षितः॥

---

# काशिक-राजकीय-संस्कृत-महाविद्यालयीय-परीक्षाणां विस्तारः

अद्यत्वे प्रचलितानां काशिकराजकीयसंस्कृतमहाविद्यालयीयपरीक्षाणां स्थापनाविषये तत्सम्बन्धिपरम्पराणां विकासविषये च यद्वक्तव्यमासीत् तन्महाविद्यालयेतिहासप्रसङ्गेनैव विस्तरेण पुरस्तात्प्रतिपादितमस्माभिः। तत एवैतदवगन्तुं शक्यते यत्कथं तत्कालपर्यन्तं प्रचलितानां 'वार्षिकपरीक्षाणां' स्थान एवैतासां 'पदवीपरीक्षाणां' स्थापना १८८० तमेऽब्दे कृताऽध्यक्षथीबोमहोदयैः, कथं द्वादशवर्षपरिमिताध्ययनकालस्य परम्परा समुत्पन्ना, कथं च च्छात्राणां प्रथमद्वितीयतृतीयवर्गव्यवस्थापरम्परातः क्रमेण प्रथममध्यमोत्तमपरीक्षाणां समुद्भवस्तदनन्तरं चोत्तमपरीक्षाया एव शास्त्र्याचार्यपरीक्षयोर्विभागः समजनि, इत्यादि।

एतासां परीक्षाणां पाठ्यक्रमस्य विकासोऽपि निर्दिष्ट एव पुरस्तात्।

आसां परीक्षाणां स्थापनायाः किञ्चित्कालानन्तरमेव क्रमेणोत्तरोत्तरमाधिक्येन विस्तारः समजायत। तथाहि—

१८८० तमेऽब्दे केवलमेकोनविंशतिश्छात्रा आचार्यपरीक्षायां प्रथमवारं प्रविष्टाः, तेषां च केवलं त्रय एव समुत्तीर्णाः, द्वौ व्याकरणे, एकश्च साहित्ये। एवं १८८१ तमेऽब्दे प्रथमवारमेव प्रथममध्यमपरीक्षयोः प्रविष्टानां छात्राणां मध्ये केवलं षट्त्रिंशदेव सफलतामासादयन्, पञ्चविंशतिः प्रथमायामेकादश च मध्यमपरीक्षायाम्। तदेवं स्वल्पपरिणाहेनोपक्रान्तानां परीक्षाणां क्रमश उत्तरोत्तरं प्रवर्धमानो विस्तारो लोकप्रियता चाधोनिर्दिष्टसारण्यामुद्धृताभिः परीक्षार्थिच्छात्राणां संख्याभिः सुतरां हृदयङ्गमौ भविष्यतः।

## महाविद्यालयीयपरीक्षासु प्रविष्टानां छात्राणां संख्यानिर्देशः।

| वत्सरः | प्रथमपरीक्षा | मध्यमपरीक्षा | शास्त्रिपरीक्षा (१९२५ वत्सरादेवारब्धा) | आचार्यपरीक्षा | समष्टिः |
|---|---|---|---|---|---|
| १८९० | १०७ | १२४ | | ५३ | २८४ |
| १९०० | १८५ | २५० | | १२१ | ५५६ |
| १९१० | ६४२ | ५४० | | १३० | १३१२ |
| १९२० | १६१९ | १७४९ | | ७०८ | ४०७६ |
| १९३० | ३८२३ | ४५२५ | ९९६ | ३१५ | ९६५९ |
| १९४० | ५४२५ | ७१३५ | २१९१ | ७०२ | १५४५३ |
| १९४२ | ५८९७ | ७८७७ | २१९२ | ८४८ | १६७८४ |

प्रारम्भिकावस्थायां सर्वासामपि परीक्षाणां कृते राजकीयमहाविद्यालय एव केन्द्रत्वेन निरधार्यत। अन्यपाठशालीयाश्छात्राः परीक्षासु प्रवेशार्थमनुमता अपि तस्मिन्नेव केन्द्रे परीक्षार्थमुपातिष्ठन्।

१८८८ वत्सरे शासकानामादेशपत्रेण सर्वाभिरपि राजकीयमर्थसाहाय्यमाप्नुवतीभिः पाठशालाभिः राजकीयपरीक्षाणां पाठ्यक्रम एवानुसर्तव्य इत्येष नियमो व्यधायि।

१८८९ वत्सरे प्रथमाया मध्यमाया आदिखण्डत्रयस्य च परीक्षायाः कृते अन्यान्यपि केन्द्राणि प्रथमवारं स्वीकृतान्यधिकारिभिः। परं मध्यमाचतुर्थखण्डस्य तु परीक्षार्थं पूर्वोक्तमेव केन्द्रं यथापूर्वमवर्तिष्ट। तत्कारणं च व्युत्पत्तिविषये मौखिक-परीक्षैव। १९१८ वत्सरात् प्रभृति तु मौखिकपरीक्षाया अपाकरणात्तुर्यखण्डस्यापि परीक्षान्यकेन्द्रेष्वपि प्रवृत्ता।

चिरकालपर्यन्तं राजकीयविद्यालयेऽधीयानाश्छात्रा एवोत्तम (आचार्य) परीक्षायां प्रवेशस्याधिकारिणो बभूवुः। १९११ पर्यन्तमेवैष नियमः प्रावर्ततेति प्रतीयते, तदनन्तरं तु अन्या अपि पाठशाला आचार्यपरीक्षार्थमपि स्वकीय-च्छात्रान् प्रेषयितुमधिकारमलभन्त। परमद्य यावदपि

शास्त्र्याचार्यपरीक्षयोः केन्द्रं तु केवलं राजकीयविद्यालय एव विद्यते, यद्यपि प्रतिवर्षं वर्धमानया तयोश्छात्रसंख्यया छात्रसौलभ्यदृष्ट्यावश्यकमेतत्संजातं यदन्यान्यपि केन्द्राणि स्थाप्येरन्।

तासामेतासां परीक्षाणामतीव लोकप्रियत्वे प्रमाणं न केवलमुपरिनिर्दिष्टा प्रतिवर्षं प्रवर्धमाना परीक्षार्थिनां संख्यैव, किन्तु परीक्षाकेन्द्राणां परीक्षाभिः संबद्धानां संयुक्तप्रान्तान्तर्गतानां तदन्यप्रान्तान्तर्वर्त्तनीनां पाठशालानां चोत्तरोत्तरं वृद्धिमुपगच्छन्ती संख्यापि। तच्चैतदधोनिर्दिष्टसारण्या सुस्पष्टं भविष्यति—

| वत्सरः | केन्द्रसंख्या | परीक्षाभिः संबद्धानां संयुक्तप्रान्तीयपाठशालानां संख्या | परीक्षाभिः संबद्धानामन्यप्रान्तीयपाठशालानां संख्या | संबद्धानां पाठशालानां समष्टिः |
|---|---|---|---|---|
| १९०९ | १३ | ४२ | ११ | ५३ |
| १९१८ | २३ | ३९६ | १२० | ५१६ |
| १९३२ | ३९ | ७४६ | २०२ | ९४८ |
| १९३८ | ४६ | ९२६ | ३२० | १२४६ |

एतासां परीक्षाणां लोकप्रियताया गौरवस्य च वृद्धिमुपलक्ष्य परीक्षाकार्यनिर्वाहार्थं 'परीक्षासंचालक'(Registrar) पदस्य स्थापना १९०९ वत्सरे आवश्यकी संजातेत्युपरिष्टात् प्रतिपादितम्। सत्यप्येवं तत्पदमध्यक्ष( Principal )पदेन सहैकस्मिन्नेवाधिकारिणि चिराय संसक्तमवर्तत। १८८० प्रभृति १९०८ वत्सरपर्यन्तं तु महाविद्यालयाध्यक्ष एव परीक्षाप्रबन्धकार्यभारमुवाह। परं १९३२ वत्सरे उभे अपि पदे पृथक्कृते अधिकारिभिः, नूतनश्च परीक्षासंचालकपदाधिकारी न्ययुज्यतेत्यपि प्रतिपादितं पूर्वम्।

१९२३ वत्सरे **प्रान्तीयसंस्कृतपठनपाठनव्यवस्थासमितेः** संस्थापना संजातेत्यप्युक्तं पुरस्तात्। तस्या एव समितेः १९२७ वत्सरे पुनः संघटनमक्रियत, तदैव चैकस्याः **परीक्षासमिते**रपि प्रथमतो निर्माणमक्रियताधिकारिभिः।

——

# काशिकराजकीयसंस्कृतमहाविद्यालयस्येतिवृत्तम्

( खिस्ताब्द १९३७ प्रभृति अनुस्यूतस्य चतुर्थकालस्य परिशिष्टम् )

लेखकः—पं० नारायणशास्त्री खिस्ते

महाविद्यालयीयेतिहासे १९३७ खिस्ताब्दतः प्रवृत्तस्य वर्त्तमानकालस्यापि सातिशयं वैशिष्ट्यमस्तीति प्रायेण जानन्त्येव विद्वांसः।

१४ मार्च १९३७ प्रभृति महामहोपाध्यायकविराजमहोदयैः शारीरास्वास्थ्यवशादवकाशे गृहीते १ सितम्बर १९३२ प्रभृति परीक्षाप्रधानाध्यक्षकार्यं कुर्वाणा डॉ० मङ्गलदेवशास्त्रिमहोदया एव प्रथममस्थायिरूपेण ततः १२ अक्टोबर १९३८ प्रभृति च स्थायिरूपेण प्रधानाध्यक्षपदमलङ्कुर्वन्ति।

अस्मिन् हि अल्पीयस्यपि समये महाविद्यालये तत्सम्बद्धसंस्थासु च छात्राणां हितबुद्ध्या, तेषु मिथः सौहार्दबुद्धिदार्ढ्याय, वर्तमाने छात्रजीवन आगामिनि व्यावहारिकजीवने च तेषां सर्वतोमुखीमुन्नतिं सम्पादयितुं च नैकविधा नूतना व्यवस्थाः प्रवर्त्तिता दृष्टिपथमायान्ति। ताश्च सङ्क्षेपेण अधस्तादुपन्यस्यन्ते—

( १ ) महाविद्यालये मिथः सम्भूय कार्यकरणपद्धतेर्विरहात् परम्पराप्राप्तक्रमानुसारं छात्रस्य स्वगुरुणैव सह सविशेषं सम्पर्को भवति, सतीर्थ्यैश्च सह यथाकथञ्चित् सम्बन्धे भवत्यपि अन्यैरध्यापकैस्तच्छात्रैश्च सह सर्वथा सम्पर्काभावश्छात्राणां मनसि महाविद्यालयस्य विषयेऽभिमानभावं जनयितुमवसरमेव न ददाति। तामेतां परिस्थितिं समालोच्यैव च्छात्राणां विभिन्नवर्गेषु तथा विभागाः कृताः, यथा कस्मिन्नपि विषये नियतग्रन्थान्यतमं पाठयितुं विशेषाज्ञया नियुक्तादेवाध्यापकादुक्तग्रन्थं सर्वे च्छात्राः पठेयुः। एवं कृते प्रायेण सर्वेष्वध्यापकेषु च्छात्राणां हृदि गुरुबुद्धिरुदेति, समयलाघवं, पुनरुक्तिपरिहारः, परिमितकालेऽपि पाठ्यग्रन्थानां साकल्येनाध्ययनाध्यापनसौकर्यं च भवति। निरुक्ता समयविभागपूर्वकं वर्गीकरणव्यवस्था न केवलं साधारणविषयेष्वेव, अपि तु तत्तद्विशिष्टविषयेऽपि यथासम्भवं प्रवर्त्तते।

( २ ) छात्रेषु शैथिल्यपरिहारपुरःसरं कर्तव्यपरिपालनबुद्धेरुदयार्थं, विशेषतो वृत्तिभाजां विशिष्टाचार्यवर्गीयाणामन्येषां च तथाविधानां छात्राणां विषये, तेषां नियमेन समुपस्थितिरावश्यकीति नियमः, सत्यामावश्यकतायामध्यक्षाज्ञापूर्वकमेवावकाशग्रहणपद्धतिश्च प्रवर्त्तते। किञ्च पूर्वोक्तकक्षान्तर्गतानां छात्राणां विशेषविषयाध्ययने गवेषणाकार्ये च सविशेषमवधानं दीयते। गवेषणादिकार्येषु प्रसक्तानां साधोलालवृत्तिभाजां छात्राणां विशेषानुसन्धानकार्याणि श्रीमद्भिरध्यक्षमहोदयैः स्वयं निरीक्ष्यन्ते। विशिष्टाचार्यच्छात्राणां कृते प्रतिसप्ताहं दिनद्वयं भाषाविज्ञाननिरुक्त-वैदिक-वाङ्मयादिविषयानधिकृत्य प्रवचनं च क्रियते।

साधोलालच्छात्रवृत्तेः प्राचीनं लक्ष्यमनुसृत्यैवैकः साधोलालच्छात्रो महाकविबिह्लणकृत-विक्रमाङ्कदेवचरिताख्यैतिहासिकमहाकाव्यस्य सम्यक् पाठशोधनपुरःसरं सम्पादनाय प्रवर्त्तितः।

( ३ ) महाविद्यालये छात्राणां षाण्मासिकी परीक्षा प्रवर्त्तिता। तदेतत् षाण्मासिक-परीक्षाप्रवर्त्तनं महाविद्यालयेतिहासे इदम्प्रथममेव।

( ४ ) अध्यक्षमहोदयानां निरीक्षणे, अध्यापकानां सहयोगेन महाविद्यालये प्रथममेव छात्रपरिषदेका स्थापिताऽस्ति। यद्द्वारा छात्राणां गीर्वाणभाषायां स्वविचारप्रकटने पाटवं समुल्लसति। छात्रपरिषदः समाश्रयेण विशिष्टाचार्यच्छात्राणामन्येषां च तथाविधानां सहयोगेन महाविद्यालयत एका हस्तलिखिता संस्कृतपत्रिका च सञ्चाल्यते, यया छात्रेषु लेखपाटवमुदेति।

( ५ ) विवेचनात्मकप्रवृत्तेः प्रोत्साहनार्थं महाविद्यालयाध्यापकास्तथाऽन्येऽधिकारिणश्च विवेचनात्मकं साहित्यिकं कार्यं कर्तुं प्रोत्साह्यन्ते। तथाविधायाः प्रोत्साहनायाः फलस्वरूपे अध्यक्षमहोदयद्वारा सम्पादिते 'सरस्वतीभवनस्टडीज़्' नामकपत्रस्य १०मभागे बहवो गवेषणा-त्मका गीर्वाणवाणीनिबन्धाः प्राकाश्यन्त। महाविद्यालयाध्यापकानां 'सरस्वतीभवनस्टडीज़्' नामके पत्रे गवेषणात्मकगीर्वाणवाणीनिबन्धलेखनमिदम्प्रथममेव।

( ६ ) अस्मिन्नेव काले शिक्षासचिवैर्महाविद्यालयीयपरीक्षापाठ्यक्रमपरिष्काराय विशिष्टानां विदुषां समितिरेका संस्थापिता। यया विदुषामत्यन्तैकदेशिकतानिवारणपुरःसरं व्यापकचतुरस्र-पाण्डित्यसम्पादनं जीविकाक्षेत्रविस्तारं च लक्ष्यीकृत्य पाठ्यक्रमो निर्द्धारितः। चिराय विलुप्तप्रा-याणां शास्त्राणामुद्धाराय तुलनात्मकदृष्ट्या तेषामध्ययनाय च राजशास्त्र-सर्वन्याय-सर्वदर्शनादिवि-षयाः पाठ्यक्रमे स्थापिताः। आकरग्रन्थप्रचारार्थं च प्राचीनव्याकरण-जैन-बौद्धदर्शनान्यपि पाठ्यक्रमेऽन्तर्भावितानि। अर्थप्रधानदृष्ट्या वेदाभ्यासाय वेदनैरुक्तप्रक्रियाऽपि पाठ्यक्रमे सत्कृता। पुराणाध्ययनं पूर्वं दार्शनिक्या साम्प्रदायिक्या वा दृष्ट्याऽऽसीत्, इदानीमैतिहासिकदृष्ट्या तदध्ययनं सविशेषं प्रवर्त्तते।

अस्मिन्नेव काले महाविद्यालये हिन्दीभाषाध्यापकनियुक्तिः प्रथममेव जाता। यद्यपि सम्प्रति साऽस्थायिरूपेण वर्त्तते तथाऽपि तस्या उपयोगितां विचार्य सा स्थायिरूपापि सम्पत्स्यत इति सम्भाव्यते।

( ७ ) विषयविशेषे कृतविशेषपरिश्रमान् विशिष्टान् बाह्यान् विदुषः सादरं समाहूय विदुषां छात्राणां च समक्षमवसरेऽवसरे तेषां प्रवचनं कार्यते, येन चिरकालाभ्यासार्जितेन तेषां विशेषज्ञानेनाल्पीयसि काले सर्वेषां लाभो भवति।

( ८ ) महाविद्यालयीयविद्वत्सु अनुसन्धानकार्यस्य प्रोत्साहनार्थं, तद्द्वारा च संस्कृतज्ञेषु अनुसन्धानप्रवृत्तेरुत्पादनार्थं शासकैः "**सारस्वती सुषमा**" इति नाम्नी महाविद्यालयादेका संस्कृत-पत्रिका प्रकाशनीयेति स्वीकृतमेवाचिरात्। महाविद्यालयस्य सार्द्धशताब्दीपूर्तिमनुलक्ष्य, तस्या

एव विशिष्टाङ्कोऽयं प्रकाश्यते। यद्यपि पूर्वं 'सरस्वतीभवन स्टडीज्' नाम्ना प्रचलितायाः पत्रिकाया एवेदं रूपान्तरमस्ति, तथाऽपि पूर्वोत्तरयोरनयोः पत्रिकयोः कियदन्तरं, किञ्चास्यां वैशिष्ट्यमित्यत्र तद्विदामनुभव एव प्रमाणम्।

( ९ ) महाविद्यालयसंसृष्टे सरस्वतीभवने 'विद्वद्गोष्ठी' नाम्ना विदुषां सभा प्रवर्त्तते, यत्र महाविद्यालयीयानां बाह्यानां च विशिष्टानां विदुषां तत्तद्विषयेषु साङ्गोपाङ्गविवेचनात्मकानि गम्भीराणि प्रवचनानि भवन्ति। यैर्विदुषामन्योन्यज्ञानविनिमयविधया महान् लाभः सम्भाव्यते।

( १० ) सर्वसाधारणजनोपकारायावसरेऽवसरे सरस्वतीभवने सुलभव्याख्यानमालाया आयोजनमपीदम्प्रथममेव प्रवर्त्तते।

---

# विदुषां चरितानि

श्रीमत्याः सरस्वतीदेव्या मातृगृह्यमाणे काशिकराजकीयसंस्कृतमहाविद्यालये प्रथमतश्चिरमधीत्य योग्यताधिक्यवशादत्रैवाध्यापकपदं प्राप्य चिरमध्यापितवतां महाविदुषां, तथैव पाठशालायामधीत्य योग्यताविशेषवशाद् बहिर्जगति परां ख्यातिमुपगतानां विद्वत्तमानां सङ्क्षिप्तान्यपि चरितानि वर्तमानानां विदुषां छात्राणां च कृते नूनं परमोपकारीणि भवेयुरित्यत्र न कस्यापि वैमत्यं भवेत्सहृदयस्य। एतादृशानि चरितान्यपि भूयांसि सन्ति—यथावसरं प्रायस्तानि सर्वाण्यपि संग्रहीष्यन्ते। अस्मिन् विशिष्टाङ्के यथोपलब्धानि २३ चरितानि क्रमशः प्रकाश्यन्ते।

तेषां क्रमः—१ म० म० बापूदेवशास्त्रिणां चरितम्।

२ श्रीयुतराजारामशास्त्रिणां ,,

३ पं० श्रीबालशास्त्रिणां ,,

४ म० म० कैलासचन्द्रशिरोमणीनां ,,

५ म० म० राममिश्रशास्त्रिणां ,,

६ म० म० सुधाकरद्विवेदमहोदयानां ,,

७ म० म० गङ्गाधरशास्त्रिणां ,,

८ म० म० शिवकुमारशास्त्रिणां ,,

९ म० म० दामोदरशास्त्रिणां ,,

१० म० म० तात्याशास्त्रिणां ,,

११ म० म० रामशास्त्रिणां ,,

१२ म० म० केशवशास्त्रिणां ,,

१३ पं० श्री मोहनलालोदासीनानां ,,

१४ म० म० नित्यानन्दपन्तानां ,,

१५ श्रीमत्पण्डिताम्बिकादत्तव्यासानां ,,

१६ धर्मप्राणलक्ष्मणशास्त्रिद्राविडानां ,,

१७ श्रीमत्पञ्चाननतर्करत्नानां ,,

---

## श्रीपण्डितबापूदेवशास्त्री

महामहोपाध्यायः, सी० आई० ई०

( ई० सन् १८४२—१८८९ पर्यन्तं ४७वर्षात्मकः कार्यकालः )

( लेखकः—पं० अनन्तशास्त्री फडके )

अस्ति दाक्षिणात्यानां पश्चिमसमुद्रोपकण्ठे रत्नगिरिप्रान्तविभागे श्रीनीलकण्ठेन वेलणेश्वर-संज्ञकेनालङ्कृतो वेलणेश्वरसंज्ञको ग्रामः। तत्र वेदपाठपरायणाः सदा सदाशिवसेवारताः 'पराञ्जपे' इत्युपनामकाः शीलसम्पन्ना दाक्षिणात्यान्तर्गतचित्तपावनाख्या विष्णुवृद्धगोत्रिणो ब्राह्मणाः प्रतिवसन्ति स्म। तेषां देवतानामिव महादेवसेवारतत्वमवेत्य तत्रत्याः सर्वेऽपि तान् 'देव पराञ्जपे' इत्युपाख्ययाऽऽख्यापयन्ति स्म। तदनु गच्छति काले तद्गोत्रजाश्चिन्तामणिसंज्ञकाः परमपावन्या गौतम्यास्तटाधिष्ठिताहमदमण्डलान्तर्गते 'कायगांवटोका'संज्ञके ग्राम आगत्योषुः। श्रीचिन्ता-मणेः श्रीसदाशिवो जन्म लेभे। ततश्च सीतारामस्य जनिः समजनि। अस्मादेव सकलसौभा-ग्यवत्यां स्थाणाविव पत्युर्धर्मे स्थितिमत्यां सत्यभामासंज्ञकपाणिगृहीत्यां राक्षसनाशकस्य देवस्य नृसिंहस्येव तत्प्रसादाज्ज्यौतिषाज्ञानराक्षसनाशकस्य देवस्य नृसिंहशास्त्रिणो जन्म रसाश्ववसु-भूमिते, १८७६ वैक्रमाब्दे समभूत्। सर्वेषां प्रियत्वादस्य बालकस्य सत्यपि नृसिंहेति यथार्थनाम्नि जना एनं बापूसंज्ञयाऽऽह्वयन्।

बाल्ये सर्वदा दारुणरोगरुग्णोऽयं प्राचीनदाक्षिणात्यदाक्षिण्यप्रथामनुसृत्याष्टाध्यायी-शिक्षा·पिङ्गलसूत्र-रूपावल्यमरकोशादिग्रन्थान्, आयुर्वेदशास्त्रीयमाधवनिदानं चोपनयनोत्तर-मृग्वेदसंहितादिकञ्चाधिजगे। शरीरस्यातिरोगग्रस्तत्वात्तत्सर्वमपि विसस्मार। तदा पित्रा-

ऽध्ययनविषये परीक्षितोऽनाघ्रातविद्यागन्धमिवैनं ज्ञात्वा स्वेन सह नागपुरं नीत्वा शास्त्राध्ययनेऽयमयोजि। तत्र साहित्ये रघुवंशादि काव्यं व्याकरणे सिद्धान्तकौमुद्यादिकमधीत्य पित्रा साकं पुनः पुण्यपत्तने प्रत्यावर्तत। तत्र पं० श्रीपाण्डुरङ्गतात्यादिवेकरस्य पाठशालायां गणितविषयमध्येतुं प्रारमत। गणिते त्वस्य महाभागस्य मतिः सर्वप्राथम्येनाप्रथत। पुण्यपत्तने कञ्चित्कालमधीत्य पित्रा सह नागपुरं प्रत्यावृत्य कान्यकुब्जपण्डितढुण्ढिराजमहोदयनिकटे भास्करीयलीलावतीं बीजगणितादिकञ्चाध्यैत।

कदाचिद्दैवसंयोगात्पितुः सुसखिना विद्यारसिकेन सिहोरनगरपोलिटिकलएजण्टपदाधिपेन 'एल्० विल्किन्सन्' संज्ञकेनाङ्ग्लमहोदयेनास्य विशिष्टां प्रशस्तिं ज्ञात्वा श्रीमान् बापूदेवशास्त्री सिद्धान्तगणितेऽप्रच्छि। परन्तु सिद्धान्तेऽवागयं व्यक्तगणितबीजगणितयोः पृष्टमात्र एव तथा सोपपत्तिकं व्याख्याद् यथा स एव महोदयोऽतिचकितमना अवाक् तस्थौ। व्यजानाच्चास्य विलक्षणं बुद्धिपाटवम्। निश्चिक्ये चायं सिद्धान्तगणितेऽध्यापितश्चेदपरभास्कर इव समुज्ज्वलयेद् भारतीयमुखसरोजानीति यथार्थं सम्भाव्य महताऽऽग्रहेण सिहोरनगरे स्वेन साकं ब्राह्मणभृत्यविशिष्टोऽयं १८४० ईशवीयाब्देऽनायि। तत्र पण्डितसेवारामनिकटे सिद्धान्तशिरोमण्यादिकं स्वोपजीव्य विल्किन्सन् महोदयसमीपे रेखागणितपदार्थविज्ञानादिकं चाध्येतुं प्रारमत।

तत्र स सतीर्थ्येषु तदनु सामान्यविद्वत्सु ततश्च सुमहत्सु विपश्चिदपश्चिमेषु विशिष्टां ख्यातिं लब्ध्वा महता समादरेण स्वोपजीव्य विल्किन्सन् महोदयेन बहुत्र बहुवारं प्रशस्तो वाराणसेयसंस्कृतपाठशालायां नूतननिर्मितगणिताध्यापकपदे निश्चितां स्वकीयां नियोजनां सफलयितुं तत्र गमनमभ्यलषत्। तस्मिन्नेव समये दैवदुर्विपाकेन स्वोपजीव्य-विल्किन्सन्-महोदयस्य वयसः पञ्चत्रिंशत्तमे वर्षे संजातेनाकालमृत्युनोद्विग्नमना नागपुरस्थ रेज़िडेण्टपदभाजस्तद्बन्धुमेजर टी० विल्किन्सन् महोदयस्य निकटे पुरातनाक्षरोत्कीर्णबीजकयुतमागतप्रस्तरं प्रतिलिपिरूपेण विन्यासयितुं नागपुरनृपप्रेषितस्तत्र गत्वा तथा सुन्दरं तद्बीजकं समुल्लिलेख, यथा सन्तुष्टमनसानेन पूर्वपरिचितेन गुणग्राहिणा मेजर टी० विल्किन्सन् महोदयेन भूयो भूयः प्रशस्य शतरूप्यकद्वयपारितोषिकभाग् व्यधायि।

ततश्च सन्तुष्टमनाः काश्यामागत्य राजकीयपाठशालायां गणिताध्यापकपदं १८४२ नेत्रवेदवसुभूमित ईशवीये हायने फरवरीमासस्य पञ्चदशदिनेऽलमकृत। तदात्वे तु पाठनार्थं छात्रसौकर्यार्थं च सिद्धान्ते गणिते चानेकान् ग्रन्थान् अनूद्य निर्माय संशोध्य च गणितादिविषयं सुसरलं व्यदधात्। तस्मिन्नेव समयेऽन्यशास्त्राध्ययनैमाङ्ग्लभाषाध्ययनं चाकरोत्। यदा पाठशालाया अध्यक्षपदवीं डाक्टर जेम्स् आर० बैलेन्टाइन्, एल्-एल्० डी०, महोदयोऽलङ्कृत्य १८४६ ईशवीये स्वीयं कार्यं संपादयति स्म, तदा स श्री पं० बापूदेवशास्त्रिमहोदयस्य सर्वातिशायि विशिष्टं पाण्डित्यं सहजसुन्दरसंरलताञ्चावलोक्य सन्तुष्टस्तया श्रीपण्डित-

बापूदेवशास्त्रिणो विशिष्टां बुद्धिं पाण्डित्यं गणितादिविषये नैपुण्यं च युरोपदेशीयगणितज्ञेषु भूयोभूयः प्रशशंस, यथा तत्रत्यास्तेऽपि विद्वांसः स्वीया विशिष्टाः शङ्काः श्रीपण्डितबापूदेवशास्त्रिसविध एव पप्रच्छुस्तत्समाधानं च प्रापुः।

ततश्च गच्छति काले १८५० ईशवीये काशिकशासनाध्यक्षपद( मजिस्ट्रेट् ) मलंकुर्वता 'मेक्लोड' महोदयस्याज्ञया हिन्दीभाषायां बीजगणितं निर्ममे। तद् दृष्ट्वा सन्तुष्टान्तःकरणेन पश्चिमोत्तरदेशाधिपतिना श्रीमता डोम्यासनमहोदयेन द्विसहस्ररूप्यकपरिमितं पारितोषिकं महता समादरेणास्मै विलक्षणविचक्षणाय प्रादायि। तदनु चन्द्रस्वाङ्कभ्रमविषये 'इंग्लिश जर्नल् ऑफ् एज्युकेशन'संज्ञके पत्रे मुद्रितमेकं लेखं प्रिन्सिपल बैलएटाइनमहोदयद्वारा ज्ञात्वा तल्लेखलेखकेन सार्क लेखप्रतिलेखद्वारा संवृत्ते वादे शास्त्रिमहोदयः तं पराजिग्ये। १८६१ ईशवीये हायने वङ्गएशियाटिकसोसाइटिद्वारा प्रकाश्यमानायां 'बिब्लियोथेका इंडिका'-नामकग्रन्थमालायां सूर्यसिद्धान्तं श्रीलान् मिलट् विल्किन्सन् महोदयकृताङ्ग्लानुवादयुतं सोपपत्तिकं सटिप्पणञ्च मुद्राप्य प्राकाशयत्। अस्य गणितविषये सर्वातिशायि पाण्डित्यं श्रावं श्रावं लण्डनराजधानीस्थैर्विज्ञजनैः १८६४ ईशवीये रायल्एशियाटिकसंज्ञिकायाः सभायाः मान्यः सभ्योऽयं ( आनररी मेंबर ) निरवाचि। ततश्चैतत्प्रकाशितसूर्यसिद्धान्तवृत्तं डाक्टर बैलेएटाइनमहोदय-द्वारानुभूय पञ्चनददेशाधिपतिना श्रीमता मेक्लोड्महोदयेन पत्रलेखनद्वारा भूरि भूरि शास्त्रिप्रवरः प्राशंसि।

ततश्च बीजगणितस्य द्वितीयावृत्तिर्बहुपरिष्कारयुतानेन शास्त्रिमहोदयेन समपादि। तां दृष्ट्वा विशेषविज्ञेन तदानींतनेन पश्चिमोत्तरदेशाधिपेन श्रीमता सर विलियम् म्यौरमहोदयेन राजप्रतिनिधिना क्षेत्रराजे प्रयागे ज्योतिर्विज्ञराजोऽयं महाराज्ञीजन्मोत्सवे महावस्त्रयुतेन रूप्यक-सहस्रेण सममानि। १८७० खिस्ताब्दे भारतशासनाध्यक्षमहोदयेन शास्त्रिमहोदयः कलिकाता-युनिवर्सिटीसंज्ञकसंस्थायाः सन्मान्यसभ्यः ( फेलो ) समस्थापि। १८७३ आंग्लहायने चन्द्र-सूर्यग्रहणं तथा निरचैषीद् यथा क्षणार्धमपि तेन न व्यभ्यचारि। तेन परितुष्टान्तःकरणेन काश्मीर-देशाधिपेन पञ्चशतमूल्यपरिमितराङ्कवयुतं रूप्यकैकसहस्रं पारितोषिकं शास्त्रिवरायास्मै प्रादायि।

१८७५ युरोपीयहायने काशीनरेशाज्ञया सर्वशुद्धं नूतनपञ्चाङ्गं निरमायि। यन्निमित्तं प्रतिवर्षं रूप्यकशतकद्वयप्रदानमभ्युपायि तेन नृपवरेण। १८७७ ईशवीयाब्दप्रथममासप्रथमदिने श्रीमती महाराज्ञी विक्टोरिया राजराजेश्वरीपदं संदधार, तदा सन्मान्यभारतीयपञ्चाशत्पुरुषेषु 'स्टार' पदकेनायं महात्मापि संमानितः। १८७८ ईशवीयहायनप्रथममासप्रथमदिने राजराजेश्व-रीपदसंधारणनिमित्तकोत्सवे सी० आई० ई० संज्ञकेनोपाधिनायं शास्त्रिमहोदय उपाधायि। १८८७ खिस्ताब्दे महाराज्ञ्याः पञ्चाशत्तमे राज्याधिकारप्राप्तिवर्षे संप्राप्ते महोत्सवनिमित्तम-वलम्ब्य पण्डितार्थं निर्मितया महामहोपाध्यायपदव्या महामनाः शास्त्रिप्रवरः सममानि। ततश्च

वङ्गप्रान्तीयैशियाटिक्सोसायटीसंज्ञकसंसदि मेजर ईल आङ्ग्लमहोदयेन प्राप्तताम्रपत्रमवलम्ब्य महाभारतरचनासमयनिर्धारणचेष्टाऽकारि। तत्पत्रोट्टङ्कितेन 'श्रीमता जनमेजयनृपतिना खग्रास-ग्रहणसमये ब्राह्मणाय भूमिदानं व्यधायि' इत्याकारकेण लेखेन गणितद्वारा श्रीमेजर ईल महोदयेन स्वीयसिद्धान्तः समधायि। परन्तु तदीयाशुद्धगणितं दृष्ट्वा शास्त्रिवरेण महान्तं प्रयत्नमाधाय तत्संशोध्यानेकयुक्तिभिः तादृशं निर्धारणं कर्तुं न सुशकमिति प्रत्यपादि।

ततश्च महता समादरेणानालस्येन १८८६वर्षे सप्तचत्वारिंशद्वर्षाणि यावद् राजकीय-पाठशालाकार्यं संपाद्य पण्डितसुधाकरमहोदय-पण्डितविनायकशास्त्रि-पण्डितचन्द्रदेवप्रभृतीन् जगन्मान्यान् शिष्यान्निर्माय ,चावकाशं लेभे। ततश्च १८९० ईशवीयहायनस्य जूनसंज्ञक-मासस्य ७मे दिने रात्रौ द्वादशवादनवेलायां जगत्पितुर्विश्वेशस्य चरणौ निध्यायन् सकन्यक-पुत्रद्वयेन साकं चतुराशाप्रकाशिनीं सर्वदा विकाशिनीं स्वच्छधवलां कीर्तिं निधाय विश्वेशतनौ निलिलाय।

## एतेन निर्मिता ग्रन्थाः—

(१) बीजगणितम् (हिन्दीभाषायाम्) सन् १८५०

(२) व्यक्तगणितम् " " १८५६

(३) भूगोलवर्णनम् " " "

(४) खगोलसारः " " "

(५) सिद्धान्तशिरोमणिस्थोदाहरणद्वारा चलगणितविषये भारतीयानां ज्ञानम्। सन् १८५८

(६) सूर्यसिद्धान्तः सोपपत्तिकः सन् १८६१

(७) फलितविचारः " १८६२

(८) सायनवादः " "

(९) मानमन्दिरवर्णनम् " "

(१०) प्राचीनज्योतिषाचार्याशयवर्णनम् " "

(११) तत्त्वविवेकपरीक्षा " "

(१२) विचित्रप्रश्नसंग्रहः सोत्तरः " १८६२

(१३) अतुलयन्त्रम् " १८६५ पर्यन्तम्

(१४) पञ्चक्रोशीयात्रानिर्णयः सन् १८७२ बाबू श्री हरिश्चन्द्रद्वारा प्रकाशितः

(१५) नूतनपञ्चाङ्गनिर्माणम् " १८७५

(१६) पञ्चाङ्गोपपादनम् " "

इत्यादयोऽनेकेग्रन्थाः सन्ति ।

---

# श्रीयुतराजारामशास्त्रिणां जीवनवृत्तान्तः ।

( अनुमानतः ई० सन् १८५६–१८७६ पर्यन्तं कार्यकालः )

[ म० म० श्रीगुरुवर गङ्गाधरशास्त्रिणां 'पण्डित'पत्रे ( Vol. X ) प्रकाशितलेखानुसारम् ]

लेखकः—पं० नारायणशास्त्री खिस्ते ।

काश्यां श्रौतविद्याधुरन्धरस्तपस्वी दाक्षिणात्यश्चित्तपावनजातीयो गोविन्दशर्मा नाम ब्राह्मण आसीत् । तस्य त्रिषु तनयेषु कनिष्ठोऽपि गुणैर्वरिष्ठः श्रीराजारामः समजायत । श्रीमति राजारामे दशवर्षवयस्क एव पिता गोविन्दः कैलासातिथिर्बभूव । तदनु पितुरौर्ध्वदेहिकं कर्म समाप्य भविष्णुः पण्डितमण्डलाखण्डलो राजारामः काश्यां त्रिलोचनघट्टे निवसतां तपोमूर्तीनां रानडोपाख्यहरिशास्त्रिणां सविधे समधीयानो नातिबहुलेनैव कालेन सकलेषु काव्येषु कौमुद्यां च व्युदपद्यत । ततः परं सकलदर्शनपारदृश्वनां श्रीदामोदरशास्त्रिणां सकाशाच्छ्रीमता राजारामेण तर्कशास्त्रं सम्यगधीतम् । वर्षीयांसः श्रीदामोदरशास्त्रिणः प्रतिक्षणमुपचीयमानप्रतिभावैभवस्य तथाविधस्यान्तेवासिनो राजारामस्य पाठने भूयांसमसह्यं परिश्रमं समालोच्य, तात्कालिककाशिकविद्वन्मण्डलाखण्डलस्य श्रीकाशीनाथशर्मशास्त्रिणः सविधमिममुपनीय सादरमिदमूचिरे :—

यः सिक्त्वा श्रमवारिभिः कुसुमयन् नानाविधैर्हेतुभिः
सिद्धान्तैः फलितं विधाय बहुलैर्विद्वद्द्विजानन्ददम् ।
विद्याकल्पतरुं चिरं स्थिरतरं कुर्याद्भवन्मूलकं
रत्नं नूत्नमिदं ददामि भवते यत्नादयं पाल्यताम् ।

( म० म० श्रीगङ्गाधरशास्त्री )

अथ राजारामशास्त्री श्रीमतः काशीनाथशास्त्रिणः सकाशान्नानाविधानि व्याकरणादीनि शास्त्राण्यभ्यस्तचराणीव समासाद्य तदानीं चित्रकूटमधितिष्ठतो विद्वद्वृन्दसुरपादपस्य श्रीविनायकरावपेशवानृपतेर्वार्षिक्यां दिगन्तरागतपरःशतविपश्चित्सभास्तारसभाजितायां सभायां विविधशास्त्रसम्बन्धिनीषु विप्रतिपत्तिषु परमां प्रतिष्ठां भृशं परितुष्यतो नृपतेश्च परमं संमानं च प्रापत्। चित्रं चैतत्—यतः,

प्रागाश्रीयत रामेण चित्रकूटगिरिस्थितिः।
खण्डिता वादिनां तेन चित्रकूटगिरि स्थितिः।

(म० म० श्री गङ्गाधरशास्त्री)

अथ लब्धप्रतिष्ठः काश्यां समागतोऽसौ यथापूर्वं पाठशालायां श्रीकाशीनाथशास्त्रिणां सविधे समध्यैष्ट। ततः परमचिरेणैव काशिकराजकीयविद्यालये प्रधानतमविद्वत्कल्पसकलान्तेवासिजनपरीक्षां कृतवता संस्कृतादिविविधविद्याविशेषनिपुणेन जॉन म्यूरसाहिबेन श्रीमतो राजारामशास्त्रिणो नानाविधेषु दर्शनेषु दृढतमां व्युत्पत्तिमलौकिकीं च प्रतिभां निभाल्य प्रमुदितवता 'प्राड्विवाकपदवीसमारूढस्य स्वस्य भारतदेशीयधर्मशास्त्रसंमतिसम्पादनादौ केवलमीदृशोत्तमपण्डितरत्नसाहाय्यं भवेदतीव यशस्करम्' इति विचार्य सखिनिर्विशेषं संमान्य नीतः श्रीमान् राजारामशास्त्री आजमगढाभिधं नगरम्, किञ्चिन्न्यूनाधिकमवात्सीत्तत्रैव वर्षपञ्चकम्।

ततः परं ग्वालियरनगरं गतोऽसौ तत्रत्येन महीपतिना सबहुमानमादृतो राजसभायां राजाश्रितान् पण्डितान् वादाहवे निर्जित्य गुणग्राह्यमतिना भूपतिना महार्हवस्त्रालङ्कारादिभिः पूजितस्तत्रत्यजनानुरोधेन कतिचिन्मासांस्तत्रैव निनाय।

१९१२ वैक्रमे वर्षे काशीं प्रत्यावृत्तोऽसौ स्वगृह एव विद्यार्थिनः पाठयन् सर्वतः प्रसृमरसुयशाः सुखमेधते स्म।

अत्रान्तरे श्रीकाशीनाथशास्त्रिगुरूपदिष्टपथेन (मिथो गुरुशिष्ययोः कोटिप्रकोटिपरिष्कारसंग्रहरूपो) विधवोद्वाहशङ्कासमाधिरनेन निर्माय श्रीगुरुचरणयोः समर्पितः। भृशं प्रीतैः श्रीगुरुवरैः प्रसादरूपेण शिष्यनाम्नैव तत्प्रकाशनमाज्ञप्तम्।

तदुत्तर एव वत्सरे काशिकराजकीयमहाविद्यालये तदानीन्तनाध्यक्ष श्रीयुत वालन्टाईनमहोदयेन सादरमाहूय साङ्ख्यशास्त्राध्यापनेऽसौ न्ययुज्यत।

असङ्ख्येष्वपि सङ्ख्यावत्त्वाद्यसंख्याश्रयो ह्यसौ।
सांख्याध्यापनकार्येऽतो नियुक्त इति युज्यते॥

(म० म० श्री गङ्गाधरशास्त्री)

ततो १९२० वैक्रमवत्सरे श्रीमता ग्रिफ्रियमहोदयेन धर्मशास्त्रप्रधानाध्यापकपदेऽसौ न्ययुज्यत।

इत्थमसौ चिराय विद्यार्थिनः पाठयन् लोकोत्तरां कीर्तिं प्रापत्। 'बालसरस्वती'त्युपपदधारिणः श्रीबालशास्त्रिसदृशान् शिष्यान् निष्पाद्य तांश्च स्वकीयाखिलपाण्डित्यकार्यनिर्वहणाक्षमान् समालोच्य राजकीयकार्याद् गृहीतावकाशो वार्धके प्रवृद्धवैराग्यस्त्रिदशापगातटगते मठे योगमभ्यस्यन्नुवास—

अर्जित्वा प्रथमे वयस्यनुपमां विद्यामवद्यापहां,
सन्मानं धनमाप्य मध्यमवयस्यध्याप्य विद्यार्थिनः।
कैलासोदरसोदरेण यशसा सम्भूष्य भूमिं ततो,
वैराग्यात्त्रिदशापगातटमठे योगं श्रयन् सोऽवसत्॥

(म० म० श्री गङ्गाधरशास्त्री)

इत्थं पञ्चषान् वत्सरानतिवाह्य १९३२ विक्रमवर्षे संन्यस्य विहाय जीवनहेतुभूतमाहारं देहान्तं यावद्यथापूर्वमवहितचेता भाद्रपदकृष्णतृतीयायां गुरुवासरे प्रातः प्रविहाय पाञ्चभौतिकं वपुर्योगिजनैकगम्यं परमं पदमसावाससाद।

गङ्गावारिविसृष्टनश्वरतनुः कीर्त्या वितत्यावनिं,
गायत्र्याद्यपदार्थचिन्तनभवद्भूरिप्रमोदः सदा।
धर्माधर्मसुखासुखादि सकलं सन्त्यज्य वाह्यं भ्रमं,
रम्यं प्रापदतीव तत्पदमसौ यत्प्राप्य नाप्यं परम्॥

(म० म० श्री गङ्गाधरशास्त्री)

---

# श्रीपण्डितवरबालशास्त्रिणो रानडे-इत्युपाह्वाः

## बालसरस्वतीत्युपाधयः

(ई० सन् १८६२—१८७७ पर्यन्तं कार्यकालः)

लेखकः—पं० अनन्तशास्त्री फडके

कस्को न जानात्यल्पमपि श्रीबालसरस्वतीमहोदयचरितम्। यस्य सम्पूर्णमपि भारतवर्षीयवैयाकरणविद्वत्कुलं साक्षात्परम्परया वाऽधमर्णम्। येन च पाणिनिनेव प्राचीनव्याकरणप्रणालीतो नूतनमिवोद्भावितं सपरिष्कारं न्यायघटितं व्याकरणम्।

वेदपाठिषु प्रवरतमो वेदपाठी, कर्मकाण्डिषु श्रेष्ठः कर्मकाण्डी, धर्मशास्त्रप्रवीणेषु साक्षान्मनुरिव धर्मप्रतिपादनतत्परः प्रवरो मुनिः, धर्माचारचणेषु साक्षाद्धर्म एव, वैयाकरण-

कुलेषु पाणिनिरिव, संस्कृतगद्यलेखकेषु द्वितीयो बाण इव, संस्कृतगीःप्रवक्तृषु परो गीर्वाण-गुरुर्वाचस्पतिरिव, सभासु सभ्येषु वादकुशलेषु च साक्षात्तत्तच्छास्त्रीयोऽचलः सिद्धान्त इव यः समस्तविद्वत्सु तदात्वे राजानति स्म।

अयं पञ्चद्राविडान्तर्गतचित्तपावनजातीयस्य कृष्णयजुर्वेदान्तर्गततैत्तिरीयशाखाध्यायिनो वेद-विदोऽकिञ्चनस्यापि धर्मलक्ष्मीकस्य श्रीगोविन्दभट्टस्य कुलं स्वजनुषा मण्डयामास। श्रीगोविन्दभट्टेन बहोः कालात्पुत्रालाभदुःखितेन श्रीशरभानुष्ठानं पुत्रलाभार्थं विहितम्, तदनुष्ठानस्यैवेदं फलम्, यत् श्रौतस्मार्तकर्मपारदृश्वा सकलशास्त्रनिष्णातोऽपरश्चतुर्मुख इव बालः बालसरस्वती ऋतुनन्द-वसुभूमिते वैक्रमाब्दे (१८९६) पौषवद्यदशम्यां सोमवासरे प्रादुर्बभूव। अस्य बालकस्य विश्वेषां शास्त्राणां रक्षकत्वात् पित्रा यथार्थं नाम विश्वनाथ इति व्यधायि। सर्वेषां प्रियत्वादयं बालो बालेत्याख्यया प्रख्यातो बभूव। अलौकिकस्यास्य बालकस्य विशिष्टप्रतिभाया इत्थं प्रसिद्धिरासी-द्यदयं वर्षात्पूर्वमेव स्वीयां महाराष्ट्रभाषां सम्यक्तया वक्तुं प्रभुर्बभूव। तृतीयवर्षेऽस्य पिता श्रीगोविन्द-भट्ट एनं स्वसुहृदे विद्वत्तमाय श्रौतादिविद्यानिपुणाय धारपेत्युपनामकश्रीरामकृष्णदीक्षिताय समर्प्य यमालयं सनाथीचकार। तेनापि स्वसुहृत्तमवाक्यपालनतत्परेण स्वसुतनिर्विशेषं पञ्चमे हायनेऽय-मुपनिन्ये। जातमात्र उपनयने गुरुणा रामकृष्णभट्टेनैकवारं कथितमात्रे कृष्णयजुर्वेदे प्राक्तन-विद्याजातं सुप्तोत्थितज्ञानवत्सहसाऽस्य हृदि पुस्फोर।

तदनु स्वगुरुभिः सह राज्यच्युतेन ब्रह्मावर्तवास्तव्येन द्वितीयबाजीरावपेशवासंज्ञकेन महाराष्ट्रनृपतिना साकं ब्रह्मावर्तं गत्वा परिमिमेल। तत्रत्यैर्वृद्धैर्वेदविद्भिर्बटुर्वामन इव बटुरयं बालो वेदावतारत्वेन संमानितो बभूव। ततः श्रीबाजीरावनृपप्रेरितः चित्रकूटस्थेन श्रीविना-यकरावपेशवानृपेण मकरसंक्रान्तिमहोत्सवे महता समारोहेण साक्षाच्चक्रे। तेन राज्ञा कठिनतमं बालखिल्यं शस्त्रं पृष्टः तथा तत्कथयामास, यथा तत्रत्याः सर्वेऽपि वृद्धा विद्वांसः धन्यवादपुरःसरं स्वीयकण्ठनालानि दोलारूढानीव चक्रिरे। अहो अस्य बुद्धेः पाटवम्; यत्र शस्त्रपठनकर्मणि महान्तोऽप्यनेकवारमभ्यासं कुर्वन्तोऽपि विद्वांसो द्वादशान्यिकाः संजायन्ते तत्रायमैकान्यिकोऽपि न संवृत्त इति महदाश्चर्यं दृष्ट्वा श्रुत्वा च तच्छस्त्रं तेन राज्ञा ससंतोषं सधन्यवादं सानेकभूषणमस्मै बटुप्रवरायाष्टवर्षदेशीयाय बालसरस्वतीत्युपदा प्रादायि, सम-मानि च विद्यावृद्धोऽयं तत्रत्यैर्वृद्धैरपि वेदज्ञैः। अनन्तरं ग्वालियरनगरगतोऽयं विलक्षण-विचक्षणस्तन्न्यायाधीशेन षट्शास्त्रपारावारपारीणेन परिडतकुप्पाशास्त्रिणा परीक्षितो महतादरेण शास्त्राध्ययने प्रावर्तत। तत्रत्यपण्डितबाबाशास्त्रिबापटमहोदयेभ्यो मासषट्केन समग्रां वैया-करणसिद्धान्तकौमुदीमधीत्य श्रीपण्डितकुप्पाशास्त्रिनैकटिको भूत्वा समग्रां पूर्वां मीमांसाममीमांसत। पुण्यपत्तन(पूना)स्थेभ्यः कार्यार्थे ग्वालियरनगरमागच्छद्भ्यो मोरशास्त्रिभ्यः सम्पूर्णमहाभाष्यपाददर्शनं साक्षाच्चक्रे।

तत्र तत्र तदा तदा सभासु विलक्षणविचक्षणस्यास्य परां कोटिमारूढं पाण्डित्यं दर्शं दर्शं सर्वेऽपि मान्या विद्वांस आश्चर्यचकितास्सन्तो रदनान्तरेऽङ्गुलिं दधिरे। १९१२ विक्रमाब्दे तत्रत्य-पण्डितवरबच्चाशास्त्रिणः सतीतुल्यां सतीं कन्यां परिणिन्ये। ततश्च हरप्रियां प्रियां वाराणसीमागत्य पण्डितेन्द्रादपरपाणिनेः श्रीकाशीनाथशास्त्रिणः परमगुरुवरात्किञ्चिद्व्याकरणमधीत्य श्रीसहस्रवदनपत-ञ्जल्यवतारभूतराजारामशास्त्रिचरणयोरन्ते वसन् सर्वमपि पन्नगगवीसारं कर्णपुटेन हृत्पात्रे समग्रहीत्। १९२१ वैक्रमेऽब्दे काशिकराजकीयपाठशालायां प्रिन्सिपलग्रिफ्रिथमहोदयेन महता सन्मानेन साङ्ख्यशास्त्रीयाध्यापकपदे न्ययोजि। श्रीराजादिनकररावराजवाडेत्युपनामकेन महामात्येन पूज्यया मात्रा च प्रेरितोऽनिच्छयाप्याङ्गलभाषाविषये किञ्चिज्ज्ञानमधिजगे। संस्कृतपाठशालायां पारितोषिकवितरणसमयेऽनेनानेकवारं सरससरलया मधुमधुरया भावभूषितया गैर्वाण्या वाण्या स्वीयं वक्तृत्वं प्राकाशि। पाठशालाध्यक्षग्रिफ्रिथमहोदयस्य तथाध्यक्षस्थानापन्नगफ्महाशयस्य च प्रेरणया काशीविद्यासुधानिधिपत्रेऽनेके ग्रन्था अनेन पण्डितवरेण समशोधिषत। तदात्वे वङ्गीयै-शियाटिकसोसायटिप्रार्थनया सकलं सभामति शारीरकसूत्र-भाष्यं सटिप्पणं प्रकाशेन समुदधारि। भूमण्डनभूतमण्डीनरेन्द्रकृतानेकप्रार्थनयाकृष्टहृदयः स्वेन गुरुणा सह १९२४ वैक्रमे वर्षे मण्डी-राजधान्यां सुरेन्द्रेण पूजितो बृहस्पतिरिव मण्डीनरेन्द्रेण सम्पूजितो विरेजे। तन्नृपतेर्महता प्रेम्णाऽऽ-कृष्टस्तस्मै गणेशमन्त्रं प्रादात्।

ततः काश्यां श्रीविनायकशास्त्रिण आप्तोर्यामयज्ञ औद्गात्रं पदमलङ्कृत्य तथा सामागासीत्, यथाऽद्यतनत्वेऽपि केचनातिवृद्धास्तादृशं सामगानं नाद्यावधि श्रूयत इति कथयन्ति। यजमानो भूत्वा स्वयमप्यनेकान् यज्ञान् संविधाय यज्ञरूपं विष्णुं संतोष्य १९२६ वैक्रमे हायनेऽनेकतीर्थानि तत्रत्या देवताश्च द्रष्टुं स्वगुरुणा साकमयात्। १९३१ वैक्रमीये वर्षे स्वीयगुरुषु श्रीराजारामशास्त्रिषु तुर्याश्रमेण स्वीयं कलेवरं पवित्रीकृत्य श्रीशिवतनावर्पितवत्सु तदातनीयाध्यक्षप्रार्थनया महता शोकभरेण साकं पाठशालीयधर्मशास्त्राध्यापकपदमलमकृत। १९३४ वैक्रमे हायने तदानींतनेन पाठशालाध्यक्षनेस्फील्डमहोदयेन बहुनात्याग्रहेण वारं वारं घण्टाद्वयविलम्बेनाप्यागत्य पाठशालां भूषयतेति प्रार्थितोऽप्यसारं संसारं संत्यक्तुमनाः पाठशालीयं पदं समत्याक्षीत्। पाठशालाध्यक्षेणासमयेऽवकाशे गृहीतेपि विशेषाज्ञयाऽव-काशनिमित्तार्धवेतनप्रदानमभ्यलाषि। परन्तु शास्त्रिवरेण तदपि नाङ्ग्यकारि। श्रीमातुः श्रीरामकृष्णदीक्षितगुरोश्चात्याग्रहेण यज्ञार्थं तृतीयं विवाहं वयसः ३३ त्रयस्त्रिंशत्तमे वर्षे विधाय १९३७ वैक्रमार्केऽब्दे माघशुक्लपूर्णिमायां ज्योतिष्टोमं यज्ञं विधातुमियेष।

तत्रत्ये यज्ञेऽशीत्यधिकवयसः स्वश्रौतगुरवो रामकृष्णदीक्षिता अध्वर्यवः, स्वीयव्याकरणगुरो राजारामशास्त्रिणो ज्येष्ठभ्रातरः श्रीसखारामभट्टा ब्रह्माणः, साक्षाच्छ्रद्धेवात्यल्पवया यजमानपत्नी स्वयं स्वोपयुक्तवेदमन्त्रपाठकर्त्री, सकलवेदशास्त्रमर्मज्ञो विशिष्टकर्मज्ञोऽपरधर्म इव धर्मज्ञो यजमानो बाल-

शास्त्रीत्यलौकिकं सर्वमप्यभूतपूर्वमिव संबभूव। अवभृथस्नानसमये स महान् समुत्सवः सूर्यग्रहण इव ग्रामाद् ग्रामान्नगरान्नगरादागत्याहमहमिकया संबाधं मिलितैर्हर्म्योपरिस्थैः पथिस्थैर्वृक्षस्थैश्च जनैः समवालोकि। १९३९ वैक्रमहायने स्वीयामर्शोरोगेण रुग्णामवस्थां स्वस्त्रियोऽपि तादृशीं स्थितिं पुत्राहित्यं च दृष्ट्वा चतुर्वर्षदेशीयं ब्राह्मणकुमारं दत्तकपुत्रविधिना पुत्रीकृत्य तं च विष्णुदीक्षित-नाम्ना समबोधि। ततश्च १९३९ ज्येष्ठशुद्धद्वितीयायां सत्या सकलसौभाग्यवत्या शास्त्रिचरणपत्न्या भविष्यं पतिविरहं योगकलया ज्ञात्वेव प्रादुर्भूतेऽपि यौवने किञ्चिदिव विरुज्य स्वीयः कायोऽत्याजि। तदनु १९३९ आषाढमासे दशम्यां तिथौ श्रीगणेशरुद्रादिदेवतास्थापनं यज्ञभूमौ विधाय तदनु श्रावणवद्यत्रयोदश्यां शिवतिथौ स्वीययशसा धवलिताः सर्वा दिशः संपादयन् स्वीयमलौकिकं धार्मिकं पवित्रं चरित्रमुपसंहरन् संसारस्यास्थिरतां समवबोधयन् श्रीविश्वनाथः कैलासमिव कैलासवासमङ्गी-चकार श्रीपण्डितेन्द्रो विश्वनाथशास्त्री बालसरस्वती।

अनेन निर्मिता ग्रन्था :—

(१) वेदान्तसूत्रभाष्यभामतीटिप्पणम्।

(२) स्वगुरुनिर्मितविधवोद्वाहशङ्कासमाधिग्रन्थस्य दोषाभासनिरासनाम्नी टीका (१९२६ वैक्रमे)।

(३) व्याकरणमहाभाष्यटिप्पणम्।

(४) परिभाषेन्दुटिप्पणी सारासारविवेकनामिका।

(५) बृहज्ज्योतिष्टोमपद्धतिः।

इत्यादयोऽनेके।

—·—

# श्री म० म० कैलासचन्द्रशिरोमणिचरितम्

(ई० सन् १८६८–१९०७ पर्यन्तं कार्यकालः)

लेखकः—पं० नारायणशास्त्री खिस्ते

वङ्गेषु वर्द्धमानमण्डले धात्रीग्रामे श्रीभवनाथतर्कपञ्चानननामा द्विजो न्यवसत्। तत्सूनु-र्घनश्यामसार्वभौमो नाम महान् पण्डितोऽभूत्। तत्पत्नी श्रीमत्यादरमणिदेवी सत्कुलजा सती-शिरोमणिरासीत्। अथ श्रीमान् घनश्यामसार्वभौममहाशयः सुचिरं भगवन्तमाशुतोषं महेश्वर-माराध्य तत्प्रसादात्पुञ्जीभूतमिव पुण्यं पुत्रमवाप। स एवास्मच्चरितनायकः पण्डितवरः कैलास-

चन्द्रशिरोमणिमहाशयः। अस्य महात्मनो जन्मकालः १७५२ शकाब्दात्मकः। बाल्यकालत एव प्रस्फुरत्प्रतिभाप्रकर्षोऽयं दशाब्दावस्थ एव पण्डितवरस्य निजपितृव्यस्य श्रीजनार्दनतर्कवागीशमहोदयस्य सविधे व्याकरणकोशकाव्यादि समधीत्य प्ररूढप्रौढव्युत्पत्तिर्न्यायवैशेषिकदर्शनमधिजिगमिषुः स्वग्रामसमीपवर्तिं देवीपुरं प्रातिष्ठत। तत्र ग्रामे मूर्तिमतः कणादस्येव जराजर्जरस्याशीतिवर्षाधिकवयसः श्रीमतो हरचन्द्रन्यायवागीशमहोदयस्य सविधे समारब्धन्यायशास्त्राध्ययनः कियतैव कालेन सामान्यनिरुक्तिपर्यन्तं समाप्य गृहं प्रतिनिवृत्तः। अथ पित्रोरनुरोधात् सुवंशमुक्तायमानया श्रीमत्या तरङ्गिणीदेव्या साकं कृतोद्वाहः सविशेषं व्यराजत। नवोद्वाहमहोत्सवे कतिपयान्यहान्यतिवाह्य, "असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः" ॥ इति मनस्विमुख्यानामध्वानमनुसरन्निव प्रबलपिपठिषाकुलचेता विशेषाधिजिगमिषया गीर्वाणवाणीमातृगृहायमाणं पुरातनं विद्यापीठं नवद्वीपमाससाद।

अथ तत्र विश्वविख्यातवैदुष्यवैभवं प्रधानपण्डितं श्रीमद्गोलोकनाथन्यायरत्नमहाशयमुपगम्य तदन्तिकेऽध्येतुमारभत। मासचतुष्टयमात्रमेवाध्ययने जातेऽकस्मादेव गोलोकनाथमहाशयः पञ्चत्वं जगाम। भृशं खिन्नः कैलासचन्द्रोऽगत्या पुनरपि गृहं प्रत्यावर्त्तत। कतिपयदिनैः प्रकृतिस्थो भूत्वा पुनरपि नवद्वीपं गत्वा तत्रैव पण्डितवरात् प्रसन्नचन्द्रतर्करत्नमहाशयादवशिष्टं तर्कशास्त्रमधीत्य वादाहवेषु तत्रत्यैः पण्डितैः सम्यक् परीक्षितो लब्धबहुमानः शिरोमणिरित्युपाधिना विभूषितः पुनरपि स्वग्रामं प्रतिनिवृत्तः।

ततः स्वगृह एव चतुष्पाठीं निर्माय छात्रानध्यापयितुमारभत। नानादिगन्तागता अन्तेवासिनोऽस्याध्यापनोद्भवसुयशःसौरभेण समाकृष्टाः सन्त एतत्सविधेऽध्येतुमुपागमन्। अयमपि सर्वाणि शास्त्राणि निर्विशङ्कं तथाऽध्यापयति स्म, यथैतदन्तिकाधीतविद्यश्छात्रो नान्यत्र गन्तुमैहत। इत्थं सुखेन त्रीणि वर्षाण्यतीतानि। अथ दुर्दैवेनास्य ज्येष्ठो भ्राता प्रसन्नचन्द्रः, यः खलु मुनसिफ़पदस्थ आसीत्, असमय एव पञ्चत्वं गतः, तच्छोकातुरा जनन्यप्यचिरेणैव जाह्नवीतीरे वपुस्तत्याज। कृत्यविच्छ्रीमान् कैलासचन्द्रशिरोमणिमहाशयो ज्यायसो भ्रातुर्जनन्याश्च निधनेन नितान्तं निर्विण्णोऽपि तयोः पारलौकिकं कृत्यकलापं सम्यक् सम्पादितवान्।

अथासौ शिरसि भारायमाणान्मातृश्राद्धोद्भवादृणादुद्धारं समीहमानो नव्यदेशदिदृक्षया च सार्द्धं छात्राभ्यां तारिणीचरणवरदाकान्तन्यायरत्नाभ्यां धात्रीग्रामात्प्रस्थाय देवीपुरस्थसिंहवंशीयस्वसुहृद्वरराजकृष्णसिंहसन्निधिं जिगमिषुः पाटलिपुत्रमुपागमत्। तत्र सिंहमहोदयस्यासन्निधानेन मुङ्गेरनगरं प्रातिष्ठत। तत्र सिंहमहोदयदर्शनलाभेऽपि दुरदृष्टमहिम्ना स्वकार्यसिद्धेरसम्भावनामेव पश्यन् मानधनाग्रणीः शिरोमणिमहाशयः कृतदृढनिश्चयो यावज्जीवं भगवन्तं श्रीकाशीविश्वेश्वरमारिराधयिषुर्वाराणसीं प्रातिष्ठत। कियन्तं चिदध्वानं नौकया, कियन्तं चिद् बाष्पशकटेन, कियन्तं चित् पद्भ्यामेवातिक्रम्य कतिपयैरहोभिः काशीमाससाद। तत्र कुत्राऽपि परिचयाभावान्निर्धनत्वाच्चागत्या महामहिम्नां प्रख्यातयशसां ब्रह्मनिष्ठानां श्रीविशुद्धानन्दस्वामिनां मठमेव शरणीचकार।

अथ तत्रैव स्वकीयं पुस्तकवस्त्रपात्रादिवस्तुजातं निधाय सद्यो जाह्नवीतीरमासाद्य सन्तापहारिणि सुधायमानवारिणि तदीये पाथःपूरे कृतमज्जनोन्मज्जनः सन्ध्यावन्दनजपादि स्वीयमाह्निकं कर्म सम्यक् सम्पाद्य बुभुक्षाक्षामकण्ठोऽपि स्थानादिसुस्थितेरभावात् पीयूषप्रतिमं जाह्नवीजलमेवाऽऽकण्ठं निपीय पुनर्मठं प्रत्यावर्त्तत। गृहस्थाश्रममधितिष्ठतोऽस्य संन्यासिनां मठे स्थितिरनुचितेति स्वामिपादैः पर्यायेण प्रतिषिद्धनिवासोऽसौ सर्वथाऽपरिचितेऽस्मिन्नगरे कथं सुस्थितिः सम्पादनीयेति नितरामाकुलस्वान्तः आर्तत्राणपरायणं भगवन्तं नारायणमेव मनसा संस्मरन्नवसत्।

अथ भक्तविपद्भञ्जनस्य भगवतोऽनुग्रहादेव भोज्यवस्तून्यानेतुमापणं गतेनैतदन्तेवासिना 'कोन्न'नगराभिजनः शिरोमणिमहाशयस्य सतीर्थ्यो वैकुण्ठनाथन्यायरत्नमहाशयो दृष्टः, पृष्टश्च तेनासौ विस्पष्टमाचष्ट स्वगुरोरुपस्थितां विपदम्। अनन्तरं तत्कथनानुसारं स्वगुरोः कुलशिष्यं काशीस्थागस्त्यकुण्डवीथीनिवासिनं रामदासभट्टाचार्यमासाद्य तस्मै सकलमुदन्तमाख्याय तत्सहकृतोऽसौ सद्यो मठमागत्य न्यवेदयत सर्वमुदन्तजातं गुरवे। रामदासभट्टाचार्योऽपि सबहुमानं शिरोमणिमहाशयं स्वगृहमानाय्य यथाशक्ति समुपाचरत्। इत्थमुपस्थिताया विपदो वारणमभूत्। अथ रामदासभट्टाचार्यसद्मनि त्रिचतुराण्येवाहानि गमयित्वा कस्मिंश्चिद्भाटकगृहेऽसौ सुखं न्यवसत्। तत्र निवसता ऽनेन तार्किकशिरोमणिना शिरोमणिमहाशयेनाऽवारितविद्यार्थिवृन्दमध्यापनसदाव्रतमारभ्यत। बहवश्छात्राः पण्डिताश्च कौतुकिनोऽस्य पाण्डित्यप्रकर्षमालोक्य भृशं मुग्धान्तःकरणाः साधुवादपुरस्सरं प्रशशंसुरेनम्।

अथैष वेदान्तविद्यावाचस्पतेर्द्राविडादच्युतानन्दपरिव्राजकाद्विद्याविनिमयविधया वेदान्तमधीत्य तं च न्यायवैशेषिकदर्शनमध्याप्य लोकातिगस्वीयशेमुषीविशेषमहिम्नाऽल्पेनैव कालेन वेदान्तविद्यापारङ्गमोऽभवत्। शास्त्रार्थसभासु च पूर्वोत्तरपक्षयोरस्य विलक्षणां दक्षतां च प्रत्यक्षं कलयन्तो विचक्षणा न्यायतन्त्रोज्जीवनाय गृहीतावतारं गौतमममुं मन्यमाना निष्पक्षमेतदीयं सुयशः सर्वत्र घोषयन्ति स्म।

अथैतत्सुयशःसमाकृष्टहृदयस्तात्कालिककाशिकराजकीयपाठशालीयपण्डितमूर्धन्यो महामहोपाध्याय सी० आई० ई० इत्याद्यनेकबिरुदविभूषितो बापूदेवशास्त्री १९२५ वैक्रमेऽब्दे काशिकराजकीयपाठशालायां रिक्त एकस्मिन्नैयायिकपदे केवलं मासत्रयाय सादरमेनं न्ययुङ्क्त। तदानीं तस्य पदस्य वेतनं पञ्चत्रिंशद्रूप्यकपरिमितमेवासीत्, परन्तु विद्वच्छिरोमणेरस्य गौरवरिरक्षयिषया चत्वारिंशद्रूप्यकपरिमितं क्रियते स्म। इत्थं प्राप्तसुस्थितिः शिरोमणिमहाशयः प्रत्यहं पारेशतं छात्रानध्यापयन् सुखमुवास। पण्डितैकपक्षपाती पाठशालाध्यक्ष आर्थरवेनिसमहोदयः शिरोमणिमहाशयं गुरुरूपेण सम्मानयन् प्रायो दुरूहान् न्यायवैशेषिकपदार्थान् ततोऽधीते स्म। शिरोमणिमहाशयस्य महोदाराशयता दीनेषु करुणा च काऽप्यपूर्वैवासीत्। अद्यापि सर्वे तं 'महाशय' इतिनाम्नैव स्मरन्ति।

अथैकदा जराजर्जरेऽस्मिन्नध्यापके लॉर्डकर्ज़नमहोदयस्य दृष्टिर्निपपात। अवसराप्रदाननिदानं च जिज्ञासितवान् सः। अथ तदादेशेन तदानीन्तनः संयुक्तप्रान्तप्रधानशासकः श्रीमान् लाटूश-महोदयः स्वयं काश्यामेत्य समवलोक्य च प्रत्यक्षं शिरोमणिमहाशयं, तस्य लोकोत्तरं वैदुष्यं, तत्सम्बन्धेन पाठशालायाश्च परमगौरवं सर्वजनैरविप्रतिपत्त्या प्रतिपादितं च निशम्य सुतरां सन्तुष्ट इत्थं निरणैषीत्—'यदसौ महाशयो यावत्कालपर्यन्तं पाठशालायामागन्तुमीष्टे तावदनेनागम्यताम्' इति। १८९६ ईशवीये वर्षे महामहोपाध्यायपदवीप्रदानेन सम्राड्या शिरोमणिमहाशयः संमानितः। अथ दुरदृष्टमहिम्ना १९०७ ईशवीये वर्षे ज्येष्ठपुत्रस्य राजवल्लभभट्टाचार्यस्य पौत्रस्य चैकस्याकाल-निधनेन समुद्विग्नचेता वीतस्पृहः शिरोमणिमहाशयः साग्रहमनुरुन्धानेऽप्यध्यक्षमहोदये तत्याज पदं जग्राह चावसरम्। इत्थमनेन चत्वारिंशद्वर्षाणि राजकीयकार्यं कृतम्। षडधिकसप्ततिवर्षवयाः प्रवयाः शिरोमणिमहाशयः सौरचैत्रमासस्य तृतीयदिवसे सायं सन्त्यज्य पार्थिवं वपुः शिवसा-युज्यमाससाद। अनेन महाशयेन न्यायदर्शनभाष्यस्यैका टीका विरचितेति श्रूयते परन्तु नाद्यापि साऽस्मद्दृष्टिपथमुपेता। शिष्याः पुनरसङ्ख्याता एव शिरोमणिमहाशयस्य। म० म० वामाचरणभट्टाचार्याः, म० म० लक्ष्मणशास्त्रिद्राविडादयस्तु शिरोमणिमहाशयशिष्या एवेति शम्।

---

## महामहोपाध्याय पं० श्रीराममिश्रशास्त्रिणः

(कार्यकालः ई० सन् १८८०–१९०२)

लेखकः—पं० नारायणशास्त्री खिस्ते

श्रीमन्महामहोपाध्यायपण्डितस्वामिराममिश्रशास्त्रिणः किल काश्यां सविशेषं प्रख्यात-वैदुष्या दार्शनिका विशिष्टा विद्वांस आसन्। एतेषां पूर्ववृत्तादिकं तु नोपलभ्यत इति तद्विषये किञ्चिदपि विशेषतो लिखितुं न पारयामो वयम्। काश्यामगस्त्यकुण्डवीथ्यामेतेषां निवास आसीत्।

एतेषां लेखेषु पदे पदे प्रौढिः प्रकटीभवति, एतैश्च 'ब्रह्मामृतवर्षिणी' नामिका सभा स्थापिताऽऽसीत्, तद्द्वारा काशिकविद्वद्वृन्दे दार्शनिकविचारधारा प्रवर्त्तितेति शृणुमः। श्रीभाष्यस्येदम्प्रथमं संस्करणं स्वोपज्ञटिप्पणीविभूषितमेतैरेव प्रकाशितम्। द्वादशदर्शनीपारावार-पारीणा इमे स्वसमये विशिष्टदार्शनिकपण्डितेषु गण्यन्ते स्म। ई० सन् १८७५–७६ मध्ये स्थापितायां 'संस्कृतसमाज'नाम्न्यां विद्वत्सभायां कतिपयेष्वधिवेशनेष्वेतेषां वादविवादपाटवं तत्सभाविवरणावलोकनेन बाढं स्फुटीभवति।

एतेषां प्रधानशिष्या महामहोपाध्यायश्रीरामशास्त्रिभागवताचार्याः किलास्माभिश्चिरं दृष्टाः, तेषां लोकातिगां शेमुषीमनितरसाधारणं पाण्डित्यं च प्रत्यक्षमनुभूय तद्गुरूणां श्री म० म० राममिश्रशास्त्रिणां पाण्डित्यं ततोऽप्यधिकं भवेदेवेति निर्बाधं वक्तुं शक्यते। वर्त्तमाना गोयनका-महाविद्यालयाध्यक्षा म० म० पं० श्रीहरिहरकृपालुद्विवेदमहोदया अप्येतेषां विशिष्टाः शिष्याः सन्ति। प्रायो द्वाविंशतिवर्षाणि महाविद्यालये कार्यं कृत्वैतैरवकाशो गृहीतः।

एतैरनेके ग्रन्थाः सम्पादिता निर्मिताश्च सन्ति। तेष्वस्माभिरद्य यावदुपलब्धा अधो निर्दिश्यन्ते—

१—श्रीभाष्यम्-सटिप्पणम्। २—आगमप्रामाण्यं सटिप्पणम्। ३—वेदार्थसंग्रहः सटिप्पणः। ४—न्यायसिद्धाञ्जनं सभूमिकम्। ५—तत्त्वमुक्ताकलापः सटिप्पणः।

६—स्नेहपूर्त्तेः प्रथमो बिन्दुः। स्वयं निर्माय सम्पादितोऽयं ग्रन्थः। एतद्भूमिकावलोकनेन प्रतीयते यदेते तदानीन्तनराजपुरुषाणां विश्वस्ताः सम्मानभाजनानि चासन्। ग्रन्थान्ते तेषामेषा गर्वोक्तिर्नूनमवितथैव—

देवेश्वरे कुलिशमम्बुपतौ च पाशं भीमे गदां विशदवाजिनि गाण्डिवं च।
चक्रं च बिभ्रति समित्यथ वासुदेवे युक्तिक्रमं मयि च कुत्र विपक्षशेषः॥ इति।

एतेषां लेखप्रौढिरेतन्निर्मितसम्पादितग्रन्थभूमिकाद्यवलोकनेन स्पष्टं प्रतीयते।

—

## म० म० पं० सुधाकरद्विवेदिनां संक्षिप्तमितिवृत्तम्।

(ई० सन् १८८३-१९१० पर्यन्तं कार्यकालः)

लेखकः—पं० बलदेवमिश्रः

गुरुवराणां महामहोपाध्यायसुधाकरद्विवेदिनां जन्म १८६१ ईसवीयवर्षासन्ने काले वाराणस्यामेव विश्वनाथात्क्रोशद्वयान्तरे खजुरीग्रामेऽभूत्। तैः स्वयं स्वरचितदीर्घवृत्तनामके पुस्तके लिखितम् :—

"काश्यां सौम्ये विश्वनाथाद्विभाति गव्यूत्यर्धे भव्यमूर्त्तिर्महेशः।
पृथ्वीशाख्यस्तस्य पार्श्वे निवासो ग्रामे विद्वन् राजगेहार्चिते मे॥"

तदानीं काश्यां प्रचलितैका मासिकपत्रिका सुधाकरनामिका आसीत्। एकदा तत्पत्र-वाहको यदैव चरित्रनायकपितामहस्य हस्ते तत्पत्रं समर्पितवान् तदैव गृहान्तरतो दासी शुभसंवाद-मदाद्यत् तस्य पौत्रोऽभूदिति। तदैवैतादृशशुभसंवादं श्रुत्वा तेन कथितं यदस्य बालकस्य नामकरणं सुधाकर इत्येव करणीयम्। यतो युगपदेव पौत्ररत्नस्य तत्पत्रिकायाश्च प्राप्तिरभूत्। एतेषां जननी शीघ्रमेव तनुं तत्याज, अतएव मातृविहीना इमे सर्वेषामतिप्रिया अभवन्। अत एव लालनदोषेणाष्टवर्षपर्यन्तमेभिः किमपि न पठितम्। यदोपनयनसंस्कारस्य निश्चयः समजनि तदैभिः 'सिद्धिरस्तु', 'श्रीगणेशाय नमः' इत्यपि प्रथमलेखनमारब्धम्। परन्तु निजप्रतिभावशतः मासाभ्यन्तर एवैषां पुस्तकपठनेऽपि प्रागल्भ्यं सञ्जातम्।

स्वग्रामप्रान्ते एषां पौरोहित्यमासीत्, अतोऽभिभावकानामेष निश्चियो जातो यदेभिः प्रथमं व्याकरणं पुराणादिकञ्च पठनीयं पश्चात् ज्यौतिषमध्ययनीयं येन पौरोहित्यकार्ये सर्वथा सौलभ्यं सम्पद्येत। अतः कौमुदी-मनोरमेत्यादिपुस्तकं सम्यक् समधीत्य काशिकराजकीयसंस्कृतमहा-विद्यालये पं० श्रीदेवकृष्णमिश्रेभ्यो ज्यौतिषद्वितीयाध्यापकेभ्यो ज्यौतिषपठनमारब्धम्।

तदानीं तत्र प्रधानाध्यापकाः म० म० पं० बापूदेवशास्त्रिण आसन्। अत्र विचित्रा कथा गुरुमुखेभ्य एव श्रुता। ज्यौतिषाध्यापकयोरध्यापनं तदानीमेकस्मिन्नेव प्रकोष्ठे आसीत्। एषां पिता कृपालुदत्तद्विवेदी एतानादाय संस्कृतमहाविद्यालये गत्वा दूरत एवादिष्टवान् यद् गच्छ तत्र शास्त्रिवर्यसमीपे उपविश यावदहमावश्यकं कार्यं सम्पाद्यागच्छामि। परन्त्वेभिः देवकृष्ण-मिश्रमेव शास्त्रिवर्यं बुद्ध्वा तस्यैव समीप उपवेशनं कृतम्। किञ्चित्कालानन्तरं यदा पित्रा मिश्रसमीपे एषां स्थितिर्दृष्टा तदैनानाहूय भृशं भर्त्सितवान्। परञ्चैभिरुक्तं पितः! एष मिश्रो हृदयतो मम गुरुर्जातः, अत्र परिवर्तनं केनापि प्रकारेण भवितुमशक्यम्। अत एभिः ज्यौतिषं यत्किञ्चित्पठितं तद्देवकृष्णमिश्रादेवेति श्रुतम्।

पठनकालस्यैका घटनाप्युल्लेखयोग्या। म० म० पं० बापूदेवशास्त्रिभिरव्यक्तगणितस्य प्रथमभागो मुद्रापितः तस्यैकं पुस्तकं पं० मिश्रमहोदयाय समर्पितम्। तद् दृष्ट्वाऽपूर्वमिदं पुस्तकमिति स्वगुरुवरत आदरपुरस्सरं गृहीत्वा एते स्वगृहमागताः। तत्र नैका अशुद्धीः संशोध्य प्रातरागत्यैभिरुक्तं यदत्र प्रायेणाशुद्धिर्दृश्यते। इदमाकर्ण्य पं० मिश्रमहोदयस्तु सकम्पो जातः, स्वच्छात्रानेतान् प्रति मुहुर्मुहुर्हस्तमुद्रया मौनमालम्ब्यतामिति सङ्केतितवान्। परन्तु तत्रैवापरे भागे स्थिताः महामहोपाध्यायाः सर्वे कौतूहलं स्वयं प्रदृश्य तानाहूतवन्तः। तैश्च पुस्तकस्याशुद्धि-संशोधनं दृष्ट्वा बालकस्य प्रतिभां गणितशास्त्रे कुशाग्रबुद्धिञ्च निभाल्य तदानीन्तनस्याध्यक्षस्य 'ग्रिफिथ' साहेबमहोदयस्य समीपे लिखितं 'यदयं सुधाकरशर्मा गणिते बृहस्पतिसमः'। एतेनातितरां प्रसन्नेनाध्यक्षमहोदयेनैते महता पारितोषिकेण सम्मानिताः। इमां घटनामाश्रित्यैकदा गुरुभिः स्वयं कथितं यत्तस्मिन्दिने तेषां हृदये यादृशः आनन्दः संजातो न पुनस्तादृशोऽस्मिन् जन्मनि कदाप्यनुभूतः। पारितोषिकमादाय अध्यक्षप्रकोष्ठात् स्वगुरुसमीपे प्रत्यागच्छन्त एते

हर्षातिरेकेण पृथिव्यामुत आकाशे तेषां स्थितिरित्यपि नान्वभूवन्। तस्माद्दिनात् एतैः पौरोहित्यकार्यं साकल्येन त्यक्तम्।

कृतविद्या अपीमे जीविकां लब्धुं नाशक्नुवन्। पश्चात् यदैषां बहवो मैथिलाश्छात्रा एषां विशिष्टां योग्यतां प्रख्यापितवन्तस्तदा महाराजेन दरभंगाधीशेन श्रीलक्ष्मीश्वरसिंहबहादुरेण स्वपाठशालायां काशीस्थायामेतेषां सन्निवेशः कृतः। पश्चात् काशिकराजकीयमहाविद्यालयाध्यक्षेण श्री'थीबो'साहेबमहाशयेन सह यदैभिः वराहमिहिररचितपञ्चसिद्धान्तिकायाः स्वव्याख्यानसहितं प्रकाशनं कृतं तदा तेनाध्यक्षेण राजकीयसंस्कृतपुस्तकालयस्याध्यक्षत्वेनैषां नियोगस्तत्रैव कृतः। पुना राजकीयमहाविद्यालये यदा ज्यौतिषस्य स्थानं रिक्तं संजातं तदा तत्राध्यापकत्वेनापि नियुक्तिः संजाता। ततः परं तत्रैवाध्यापयद्भिः १९१० ईशवीयवर्षे जनवरीमासे पञ्चाशद्वर्षासन्ने वयसि एतैः काश्यां मुक्तिरवापि।

अध्यापनकाले एकदा तत्रत्याङ्गलमहाविद्यालये छात्रेभ्यो गणितविद्यां वितरितुं तत्राह्वानमेतेषामभवत्। तत्र द्वित्राणि वर्षाणि अध्याप्य पुनः स्वविभाग एवागमनं जातम्।

भारतवर्षे गणितेऽपीमे अतीव प्रतिभाशालिनो विद्वांसोऽभवन्। एतेषां स्वभावः स्वतन्त्र आसीत्। परमदयालवः परःशतांश्छात्रानध्यापयन्त इमे महाभागा रामचन्द्रस्यातीव भक्ता आसन्। गोस्वामि-तुलसीदासकृतरामायणपाठकालेऽजस्रमश्रूणि एतेषां नयनाभ्यामपतन्। एतेषां महाभागानां यावन्तो ग्रन्थाः स्वतन्त्रलिखिताः सम्पादिता वा वर्त्तन्ते सर्वत्र श्रीरामचन्द्रस्यैव मङ्गलं कृतं दृश्यते। सर्वदा रामरामेति अवदन्। एतेषां कीर्तिर्दिगन्तरव्याप्ता आसीत्। यूरोपदेशीया अपि गणितज्ञा विद्वांस एतेषां सम्मानं चक्रुः। एकदा सकलग्रासे सूर्यग्रहणे तदानीन्तनो भारतेश्वरप्रतिनिधिः कर्ज्जनमहाशयः बक्सरनगरे एतान् समाह्वयत्। तत्र चैभ्यः सः सूर्यग्रहणविषयकं विशेषं ज्ञातवान्।

स्वनिधनसमये इमे एव प्रधानाध्यापका आसन्। एतैः पञ्चाशतोऽप्यधिकानि पुस्तकानि प्रकाशितानि। इदानीं ज्यौतिषशास्त्रे एतेषामेव महानुभावानां कृतिं ये ज्ञातुं शक्नुवन्ति त एव परमयोग्या गणकाः कथ्यन्ते। सांप्रतिको ज्यौतिषशास्त्रविशेषो महामहोपाध्यायानां कृतावेव सन्निविष्टः।

एते न केवलं प्राचीनज्यौतिषसिद्धान्ताभिज्ञा आसन्, अपि तु यूरोपीयगणितसिद्धान्ततोऽप्यनेकानि मार्मिकवस्तूनि संगृहीतवन्तः, तथापि न केनापि ज्ञातुं शक्यते यदेष विषयो यूरोपीयज्यौतिषसिद्धान्ततो गृहीतः। यथा मधुकरो भिन्नभिन्नपुष्पेभ्यस्तेषां रसानादाय मधुसञ्चयं करोति तत्र यथा न केनापि जनेन आस्वादेन एतत् कथयितुं शक्यते यदेष रसोऽस्य निर्दिष्टपुष्पस्यैवेति, तथैव महामहोपाध्यायैः संगृहीते गणितमधुनि एतद्गणितं अमुकस्य इति कथनं दुःशकम्। तेष्वेतादृशी विलक्षणा शक्तिः।

वस्तुतस्तैः ज्यौतिषशास्त्रे अपूर्वं परिवर्त्तनं कृतम्। यद्यपि भारतीयज्यौतिषस्येतिहासे परिवर्त्तनस्यावसरः पूर्वमपि द्वित्राणि वाराणि अभवत्। यथा वराहमिहिरस्य समये ग्रीकदेशीययवनैः साकं भारतीयज्यौतिषविदां समागमो जातः। एवं खलीफा अलमनसूरस्य समये अरबदेशीयगाणितिकैः सह भारतीयगणितज्ञानां समागमो जातः। पुनः मुहम्मदानां राज्यकाले पारसीयैः सह भारतीयगणितज्ञानां सम्मेलनं जातम्। परन्तु यादृशं दृढं सुगूढं सम्मेलनं यूरोपीयगणितेन सह भारतीयगणितस्य संजातं न तथा पूर्वम्। तत्रेदमेव विशेषकारणं यत्संयोजयितारः परमयोग्या इदानीमुपलब्धाः। यद्यपि एतस्मिन् विशेषकार्ये द्वारोद्घाटका महामहोपाध्याया बापूदेवशास्त्रिवर्यास्तथापि अस्मद्गुरुवर्यैरेवात्र विषयेऽतितरां कार्यं कृतम्। इदानीं प्राचीनसिद्धान्तानामप्युपपत्तिर्नवीनगणितबलादेव क्रियते, परञ्च कोऽप्युपपत्तिं दृष्ट्वा एतन्न जानाति यदियमुपपत्तिः यूरोपदेशीयगणितसंवलिता, यतस्तत्र नेतुस्तादृशी प्रतिभा वैदुष्यञ्च येन ता उपपत्तयः स्वीयाः सञ्जाताः।

गुरुवरैर्महामहोपाध्यायैर्ग्रहलाघवस्य गणेशदैवज्ञकृतस्य टीका सुष्ठु विरचिता तत्रौदार्यं च तैः प्रदर्शितं, यतस्तत्र प्रथमतो मल्लारिकृतटीकां संरक्ष्य विश्वनाथोदाहरणं च प्रदाय तदनु स्वीया विशेषा टीका निर्माय रचिता। एतत्कार्यं सर्वथा प्रशंसितं जातम्। परन्तु प्राचीनब्रह्मगुप्तकृतब्राह्मस्फुटसिद्धान्तस्य मुद्रणावसरे **लण्डननगरतः** ब्राह्मस्फुटसिद्धान्तस्य चतुर्वेदाचार्यकृतां टीकामानाय्य तस्या एव बलेन स्वतिलकः प्रकाशितः। अत्र यदि भास्कराचार्यतोऽपि प्राचीनस्य चतुर्वेदाचार्यस्य टीका ग्रहलाघवे मल्लारिटीकावत् संरक्षिताऽभविष्यत्तदा प्राचीनगणकस्य महानुपकारः समभविष्यत्। एवञ्च सूर्यसिद्धान्तस्य टीका वस्तुतः सुधावर्षिणीनाम्नी तैः रचिता, तत्रापि कमलाकरस्य सौरवासनाटीकायाः कमलाकरस्यैव पितुर्नृसिंहदैवज्ञस्य सौरभाष्यस्य च समालोचनमनेकेषु स्थानेषु कृतम्। तत्र यदि तयोष्टीकयोरपि समावेशस्तत्राभविष्यत् तदा सुवर्णे सुगन्धस्य संयोगः समभविष्यत्।

स्वनिधनसमयात् किञ्चिदर्वाक् एतैः नारायणपण्डितनिर्मिताया गणितकौमुद्या उपपत्तिः कर्तुमारब्धा। तदा मुहुर्मत्सन्निधौ एतैरुक्तम् 'यदि चत्वारि पञ्च वर्षाणि वा मम जीवनं सुरक्षितं स्यात् तदा भास्करलीलावतीं भारतदेशान्निष्कास्य तत्स्थाने गणितकौमुदीं स्थापयिष्यामि"। गणितकौमुद्याः प्रकाशनं पश्चात् सरस्वतीभवनतः सञ्जातम्। तदैव गणितस्येतिहासः हिन्दीभाषायां एतैर्लेखितुमारब्धः। तत्रेतिहासं चतुर्धा विभज्य केवलं प्रथमभागस्य पाटीगणितस्यैवेतिहासः पूर्णतां यापितः, अत्र एतैर्लिखितम्—अस्मिन् पुस्तके गुरुपरम्परातः श्रुतं सर्वं वस्तु सन्निविष्टम्। प्रथमन्तु महामहोपाध्यायसदृशानां विदुषामेवाभावो यैः शेषकार्यस्य पूर्णता कर्त्तुं शक्येत। तथा गुरुपरम्परया एतैर्यज्ज्ञातं तस्य ज्ञातापि इदानीं न कोऽपि अन्यो विद्यते। पञ्चसिद्धान्तिकाया भूमिकायां डा० थीबो साहेबमहाशयेनापि लिखितं यत् महामहोपाध्यायानां द्विवेदिनां गवेषणारूपं भारतीयज्यौतिषस्येतिवृत्तं प्रकाशितं भवेच्चेत्तदा संसारस्य महानुपकारः संपद्येत। अत एवैतादृशस्येतिहासस्य प्रयोजनमतीवासीत्। परञ्च

दैवे नास्ति कस्यापि प्रभुता। अकाले तेषां निधनं संजातम्। तेनात्र भारतीयगणितस्य परमा क्षतिः संजाता।

हिन्दीभाषाया अपि ते मार्मिकाः कवय आसन्। तैरनेकानि पुस्तकानि हिन्द्यां लिखितानि। यावज्जीवनं त एव नागरीप्रचारिणीसभायाः सभापतय आसन्।

एतैः प्रायोऽष्टाविंशतिवर्षासन्ने वयसि महामहोपाध्यायपदवी लब्धा। प्रकाण्डविद्वद्भिर्महामहोपाध्यायपदवी लभ्यते परन्तु परिणते वयसि, युवावस्थायामेभिरेवैतादृशी पदवी समुपलब्धा। एवमष्टादशवर्षे वयसि एतैर्दीर्घवृत्तं नाम दुरूहपुस्तकं रचितम्। "सुधाकरेण चक्रेऽष्टादशवर्षेण पुस्तकमि"ति एवमेते अपूर्वा विद्वांसोऽभवन्। साहित्यरचनायामपि एतेऽतिकुशला आसन्। एतेषां केचिच्छ्लोका उपस्थाप्यन्ते—

तत्रादौ ग्रहलाघवस्य प्रत्यधिकारान्ते—

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
खचरमध्यगतौ परया गता भवलयाऽऽवलया वलयाऽऽसना॥ इति

एवं सूर्यसिद्धान्तस्यान्ते—

सरलया किल देवगिरा मया विलिखितां निखिलार्ककलाकृतिम्।
बहुविधां परिचिन्त्य मतान्तरैर्निजकृतिर्गतिविद्भिरिहादृता॥ इति

एवञ्च गणकतरङ्गिण्या आदौ—

जयतो जयतोषकोशरूपौ चरणाववधपतेः सुधाकरः।
तनुतेऽतनुतेजसा ययोस्तौ गणका गणकतरङ्गिणीमिमाम्॥ इति

तथा हि चलराशिकलनस्यादौ—

यल्लीला विमला विलोक्य विपुलप्रालेयबालालये
भूपालेन्द्रललाटलालनकलालेपाङ्कितक्ष्मातले।
उल्लङ्घ्य स्वकुलालिकूलकलितां लज्जानदीं मैथिली
यल्लोकाऽऽकुलिता चचाल चलवद्रामाय तस्मै नमः॥

एवमेतेषां ग्रन्थानां विलोकेनैतेषां साहित्यकलायामपि प्रचुरतरपाण्डित्यवैभवं संदृश्यते।

अतः संक्षेपरूपेण एवं कथयितुं शक्यते—यन्महामहोपाध्यायाः ज्यौतिषशास्त्रे अवतारस्वरूपेण भारते समभूवन्। सांसारिकसौभाग्यमपि एतैः सर्वथा समुपलब्धम्। एतेषां त्रयस्तनयाः सुयोग्याः समभूवन्। तेषु प्रथमोऽच्युताकरद्विवेदः राजकीयविभागे तहसीलदारपदं समवाप्य

सुखेन जीवनयापनं कृतवान्। द्वितीयः कमलाकरद्विवेदः ज़िलाकलक्टरपदमाधाय सर्वाणि कार्यजातानि समाप्येदानीं गृहे सुखेन शान्तिमनुभवति। एवञ्च तृतीयः कनिष्ठः पद्माकरद्विवेदो नाम ज्यौतिषाचार्यः राजकीयविद्यालय एव पितुः स्थानमलंकृत्य तत्राध्यापनकार्यं सम्पाद्येदानी-मवकाशसुखं भुङ्क्ते। एवं हि सर्वथा भाग्यवन्तो ज्यौतिषशास्त्रमार्तण्डरूपा महामहोपाध्याय-महोदया ज्यौतिषशास्त्रस्योद्धारकरूपेणाविर्बभूवुरिति।

एभिः प्रकाशितानां निर्मितानां पुस्तकानां च सूची यथाविदितमधस्ताद् दीयते—

| | |
|---|---|
| १ दीर्घवृत्तम् | २१ गणकतरङ्गिणी |
| २ ग्रहणकरणम् | २२ लीलावती |
| ३ द्युचरचारः | २३ बीजगणितम् |
| ४ यन्त्रराजः | २४ सिद्धान्ततत्त्वविवेकः |
| ५ वास्तवचन्द्रशृङ्गोन्नतिसाधनम् | २५ गणितेतिहासः |
| ६ करणकुतूहलम् | २६ समीकरणमीमांसा |
| ७ करणप्रकाशः | २७ भाभ्रमरेखानिरूपणम् |
| ८ चलनकलनम् | २८ धराभ्रमे प्राचीननवीनयोर्विवादः |
| ६ चलराशिकलनम् | २६ गणितकौमुदी |
| १० पिण्डप्रभाकरः | ३० सूर्यसिद्धान्तः |
| ११ छादकनिर्णयः | ३१ वृत्तान्तर्गतसमसप्तदशभुजक्षेत्ररचनाप्रकारः |
| १२ पञ्चाङ्गप्रपञ्चः | ३२ तुलसीसुधाकरः |
| १३ पञ्चाङ्गविचारः | ३३ पद्मावत टीका |
| १४ शिष्यधीवृद्धिदः | ३४ रामकहानी |
| १५ पञ्चसिद्धान्तिका | ३५ हिन्दीव्याकरणम् |
| १६ बृहत्संहिता | ३६ भाषाबोधः |
| १७ ब्राह्मस्फुटसिद्धान्तः | ३७ ज्यौतिषवेदाङ्गम् |
| १८ महासिद्धान्तः | ३८ वर्गकोष्ठपूरणरीतिः |
| १६ ग्रहलाघवम् | ३६ सशल्यबाणनिर्णयः |
| २० दिङ्मीमांसा | ४० हरिश्चन्द्रकुण्डली |

——

# श्रीमतां गुरुवराणां महामहोपाध्याय-गङ्गाधरशास्त्रि-सी० आई० ई० महोदयानां संक्षिप्तमितिवृत्तम्

( ई० सन् १८७६—१६०६ पर्यन्तं कार्यकालः )

( मत्प्रणीतविद्वच्चरितपञ्चकाधारेण )

लेखकः—पं० नारायणशास्त्री खिस्ते

दक्षिणदेशे 'बंगलोर'मण्डलान्तर्गतो 'यसरगट्टा'ख्यो विद्वत्कुलनिवासभूमिरग्रहारोऽस्ति। तत्र गौतमगोत्रोत्पन्नः श्रौतस्मार्तकर्मधुरन्धरस्तपस्वी सुब्रह्मण्यशास्त्री मानवल्लीत्याख्यो महामान्य आन्ध्रब्राह्मणः प्रतिवसति स्म। तत्पुत्रः श्रीनृसिंहशास्त्री बाल्य एव पित्रोर्वियोगेन दूयमानमनाः स्वजन्मग्रामं परित्यज्य बङ्गलोरनगरे निवसन्तं निजमातुलमेव शरणीचकार। तत्रैव स्वपूर्वजपरम्परागतां कृष्णयजुर्वेदापस्तम्बशाखां साङ्गोपाङ्गां सम्यगधीत्य सम्पाद्य च साहित्येऽपि प्रगाढां व्युत्पत्तिं न्यायवेदान्तादिदर्शनान्तराधिजिगमिषाकृष्टचेता अष्टादशहायनावस्थ एव पादचारेणैव विद्वत्कुलप्रसवभूमिं वाराणसीमाजगाम। तत्रैव तत्तद्दर्शनाचार्येभ्यस्तानि तानि न्यायवेदान्तादिदर्शनानि पूर्वजन्मोपार्जितानीव सद्यः सम्पाद्य तदानीन्तनपण्डितमण्डले महतीं प्रतिष्ठां साहित्ये चाऽद्वितीयत्वमधिजगाम श्रीनृसिंहशास्त्री। ततः परं कृतदारपरिग्रहः श्रीमान् शास्त्रिवरस्तात्कालिककाशिकाधीशश्रीमदीश्वरीप्रसादनारायणसिंहभूपतेः परमादरपात्रं भूत्वा काशिराजसभायां प्रधानपण्डितपदमवाप। अत्रान्तरे स्वप्रभोः श्रीमदीश्वरीप्रसादनारायणसिंहस्य निदेशेन हिन्दीभाषायां "साहित्यसागरं" नामाष्टादशसहस्रश्लोकपरिमाणं ग्रन्थं विरच्य, स्वेच्छया च "काव्यात्मसंशोधनं" स्कन्दपुराणान्तर्गतशिवभक्तिविलासटीकां चेति ग्रन्थद्वयं गैर्वाण्यां निबबन्ध शास्त्रिवरः।

अथ शास्त्रिवरस्य पूर्वकृतसुकृतपरिपाकवशाद् भाग्यवतामग्रणीः १६१० वैक्रमे वर्षे श्रीगङ्गादशहरापर्वणि प्रथमः पुत्रोऽजनिष्ट। पुत्रस्य शुभोदग्रग्रहसमन्विते शोभने लग्ने जन्म दृष्ट्वा नितान्तं प्रमुदितो नृसिंहशास्त्री विधिवज्जातकर्म विधाय जन्मोत्सवादेकादशेऽहनि स्वाभिजनप्रथानुरोधेन शिशोः सुब्रह्मण्य इति नामकरणं विदधे। गङ्गादशहरापर्वणि लब्धजन्मानमेनं गृहीतावतारमेव गङ्गाधरं मन्यमाना वत्सलाऽस्य मातामही "गङ्गाधर" इत्याख्ययैवाजुहाव। तदेव चास्य नाम नामिताशेषविद्वद्धाम सम्मानसम्पादनं निखिलभूमण्डलप्रथितं बभूव। अयमेवास्मच्चरितनायकः। आशैशवादेवास्य लोकोत्तरा धीप्ररोहा भाविनमेनं विद्वच्चक्रवर्तिनं शशंसुः। अस्मिंस्त्रिहायने दुग्धमुग्धास्य एव सत्यस्य जननी दुर्दैवादमुं विहाय सतीलोकमगमत्। अथ क्रमेण सम्पादितचौलमङ्गलं निसर्गचपलं बालं स्वयमेव बहुविधा लिपीर्ग्राहयित्वा कोशकाव्याद्यभ्यासमपि शनैः शनैः कारयितुं प्रयतते स्म नृसिंहशास्त्रिवर्यः।

बाल्येऽप्यस्य विलोक्य विज्ञजनताकल्पामनल्पां धियं
विस्मेरस्तु पदे पदे समभवत्तातो मतो धीमताम् ।
पञ्चाब्दोऽपि स कण्ठपीठविलुठत्कोशः सुधार्द्रस्वरः
श्रोतॄणां हृदयं हरन्नहरहो गङ्गाधरो दिद्युते ॥

( विद्वच्चरितपञ्चके )

इत्थमष्टमहायनं यावत्पञ्चकाव्येषु लब्धव्युत्पत्तिमेनं विलोकयन् प्रमोदमानमानसो नृसिंह-शास्त्री विधिवदुपनीतवान् ।

अथैष ब्रह्मचारिव्रतमनुतिष्ठन् पित्रा तात्कालिककाशिकवैदिकमूर्धन्यानां श्रीबालकृष्णभट्टानां पाठशालायां प्रवेशितो गुरुणा चाध्याप्यत याजुषीमापस्तम्बशाखां तदङ्गानि च । इत्थमाषोडशवत्सरं वेदान्, वेदाङ्गानि, श्रौतस्मार्तकर्मकाण्डानि, काव्यसाहित्यशास्त्रं च करतलामलकमिव कलयित्वा प्रतिदिवसमुपचीयमानप्रतिभाविशेषो वर्द्धते स्म गङ्गाधरः ।

ततः पितुरादेशेन तात्कालिककाशिकराजकीयपाठालयप्रधानाध्यापकं पाणिनीयतन्त्रोज्जीवनाय भूयो गृहीतावतारमिव पतञ्जलिं द्वादशदर्शनीपारावारपारीणं योगानुष्ठानप्रतिष्ठितात्मानं विद्वज्जनातुलम-शारीरबलभरविस्मारितभीमसेनभुजाबलविभ्रमं श्रीराजारामशास्त्रिणमन्तेवासिभावेनाससादैष भविष्णु-र्विपश्चिच्चक्रवर्ती । श्रीराजारामशास्त्रिणश्च सविशेषप्रतिभाप्रकर्षं पात्रभूतमेनं निरीक्ष्य सन्तुष्ट-चित्ताः सपरिष्कारं कृत्स्नं व्याकरणं, धर्मशास्त्रं, सांख्ययोगौ वेदान्तदर्शनं च सस्नेहं ग्राहयामासुः ।

अनेकविबुधार्चितः कविनिषेविताङ्घ्रिः पुन-
र्गुरुप्रणयिमानसोऽधिगतसत्यधामोज्ज्वलः ।
सभासु चतुराननः सततभारतीभासुरो-
ऽप्यसौ न विधिरद्भुतं भुवि विभाति गङ्गाधरः ॥

( विद्वच्चरितपञ्चके )

१९३२ वैक्रमे वर्षे श्रीराजारामशास्त्रिषु संन्यस्य पाञ्चभौतिकं वपुर्विमुच्य शिवभावं गतेषु भृशं सन्तप्यमानमानसोऽप्ययं शिवभावापन्नांस्तानेव गुरुवरान् सर्वदा मनसि संस्मरन् वात्सल्य-पयोधीनां तेषामनुग्रहादवसरेऽवसरे स्वप्नेषु तेषां दर्शनं लभमानस्तावतैव सञ्जातहर्षः कतिचिन्मा-सानिनाय । अत्रान्तरे तातेन कृतोद्वाहमङ्गलः सह सहधर्मचारिण्या गृहस्थाश्रमं कर्तुं प्रावर्तत । अथ द्वितीयमाश्रममधितिष्ठतोऽप्यस्य शब्दखण्डाद्यवशिष्टवेदितव्याधिजिगमिषा बलवती मनसि प्रादुर्भूता, तया च प्रेर्यमाणोऽयं पुमवतारमिव वाग्देवतायाः, अशेषदर्शनविमर्शनविशदकीर्तिं तात्कालिककाशिकपण्डितमण्डलप्रमुखं श्रीरानडोपाख्यबालशास्त्रिणं द्वितीयगुरुभावेनोपाससाद । वसुमतीगीष्पतेः श्रीबालशास्त्रिणः सविधे सविधि समधीतावशिष्टविद्यः सद्यः समुपजातसन्तोषात्तस्मा-दधिगताशीर्वचनस्तदुपान्तनिरन्तरासेवनसदुपदेशश्रवणतदङ्घ्रिपरिचरणानि कारं कारं वारंवारमुदा-रमनस्तोषः कालमनैषीत् ।

द्रोणार्यस्य पुरस्तादर्जुन इव चापवेदनिष्णातः ।
श्रीबालशास्त्रिपुरतो रेजे गङ्गाधरस्तादृक् ॥

( विद्वच्चरितपञ्चके )

इत्थं श्रीबालशास्त्रिगुरोः सकाशादासादिताखिलविद्यारहस्यः प्रीतात्मना च गुरुणाऽधीतानधीतग्रन्थाध्यापनसमर्थः प्रकृष्टपाण्डित्योऽयं ममैवापरा मूर्तिरिति स्वजने परजने च निष्पक्षपातमुद्घोषितयशा धर्मशास्त्रव्यवस्थापत्रनिर्माणादीनि गुरुवरकार्याणि तदादेशेन कुर्वाणः पारेशतं विद्यार्थिनो विविधानि शास्त्राणि पाठयन् विद्वत्समासु सर्वतः सादरं समाहूतो वादजल्पवितण्डापण्डितानपरिमितान् वादिपण्डितान् सरलमधुरयुक्त्युपन्यासेन वाचंयमान् विदधानः सुखमवात्सीत् ।

अथ निजगुरूणामपि परमगुरूणां शिवभावमुपेयुषां श्रीराजारामशास्त्रिणां जीवनवृत्तं गद्यपद्यमय्या वाचा विरच्य काशीविद्यासुधानिधि( पण्डित )पत्रे प्रकाशयामास । ततः परं १८७७ ईशवीये वर्षे श्रीमत्यां विजयिनी( Victoria )देव्यां भारतवर्षसाम्राज्यसिंहासनाधीश्वर्यां सत्यां प्रमुदितनागरिकप्रेरणया रायबहादुरप्रमदादासमित्रसम्मेलितायां काशिकमहाजनसभायामासीदेकः प्रस्तावो "यदमुष्य महोत्सवस्य स्मारकतया महाभारतमनुस्मृत्यादिधर्मग्रन्थावलम्बेन सर्वसाधारणधर्मबोधक एको धर्मग्रन्थो निर्मातव्य" इति । तदनुरोधेन सर्वैः सभ्यैर्विद्वद्भिश्चायं कार्यभारस्तत्सभासभ्यान्यतमे लोकोत्तरप्रतिभाशालिनि श्रीगङ्गाधरशास्त्रिण्येव सादरं सबहुमानं च समर्पितः । शास्त्रिवरेणापि 'शाश्वतधर्मदीपिका' इति नामकरणपूर्वकं तथाविधो ग्रन्थो निर्मितः, सर्वसभ्यानुमत्या च काशीविद्यासुधानिधिपत्रे प्रकाशितः । ततः परं १८७६ ईशवीये वर्षे तात्कालिककाशिकराजकीयपाठालयप्रधानाध्यक्षैर्डा०थिबोसाहिबमहोदयैः सबहुमानं युवकस्य शास्त्रिवरस्य साहित्यदर्शनप्रधानाध्यापकपदे नियुक्तिः कृता ।

ततः परं व्याकरणवेदान्तधर्मशास्त्रमीमांसासाङ्ख्ययोगसाहित्यादिशास्त्राणि पारेशतं विद्यार्थिनः प्रत्यहं प्रौढव्युत्पत्त्याधायिकया विधया पाठयतां शास्त्रिवराणामध्यापनोद्भूतं सुयशः समुपचीयते स्म ।

अथ कतिपयैरेवाहोभिर्बम्बईनगरवास्तव्या विश्वविख्यातवैदुषीवैभवाः सकलदर्शनपारावारपारीणाः त्वरितकवितानिर्माणकर्मठाः शतावधानिनः प्रज्ञाचक्षुषो भारतमार्तण्डगट्टूलालमहोदयाः समायाताः काशिकायां विद्वज्जनवादकथासस्पृहस्वान्ताः सह विद्वद्भिः शिष्यवर्गैः ।

दिगन्तविजयिनां तेषां सत्काराय काशीस्थैर्नागरिकैरत्रत्ये गोपालमन्दिरस्य महति प्राङ्गणे महाजनसभा सम्मेलिता । तस्यां चिरात्प्रसिद्धं काशिकागौरवं रिरक्षयिषन्तस्तदानीन्तना महान्तः पण्डिताः शतशः साग्रहं समाजग्मुः ।

अथ भारतमार्तण्डैरारब्धे निजशतावधानप्रदर्शने सर्वे पण्डिता दर्शकाश्च स्तब्धकर्णास्तदेकदत्तावधाना अभूवन् । विस्मिता च सा महती सभा समीक्ष्य तेषां समकालं शतावधानप्रदर्शन-

चातुरीं, प्रशशंस च साधुवादपुरःसरम्। अथ प्रवृत्ते विद्वद्विनोदे प्रचलितासु दार्शनिककथासु श्रीमन्तो गङ्गाधरशास्त्रिणो वादकथायै स्वयमग्रेसरा बभूवुः। शास्त्रीयपूर्वपक्षोत्तरपक्षयुक्त्युपन्यासैः कियन्तं चित् कालमुभावपि वादिनौ मिथो बलं परीक्ष्य छन्दोबद्धं शास्त्रार्थं चक्रतुः। समार्द्ध-समविषमवृत्तानि सलीलं प्रयुञ्जानौ द्वावपि सर्वेषामेव प्रशंसापात्रे बभूवतुः। अथ भारतमार्तण्डै-रारब्धशास्त्रार्थनिर्णायिका काचन दुष्पूरा समस्या समुपन्यस्ता, तस्याश्च वर्णानुक्रमेण सद्यः सम्पूरणाय शास्त्रिवरा आदिष्टाः।

शास्त्रिवराश्च भारतमार्तण्डमुखात्समस्यानिस्सरणोत्तरक्षण एव तत्पूर्तिमित्थमपठन्—

अनेकवर्णक्रमरीतियुक्तः कखागघाङच्छजझाञटौठः।
अडंढणस्तोऽथ दधौ न पम्फुल् "बभौ मयूरो लवशेषसिंहः॥"

विस्मितसकलजनाननसहस्रात्सद्यः सममेव समुदतिष्ठन्महान् साधुवादः। गुणगृह्या भारतमार्तण्डा अपि स्वमुखेनापि शास्त्रिवरान् भूरि प्रशशंसुः। अनेन विजयावदानेनासेतुशीताचलं प्रतिजनपदं प्रतिग्रामं प्रतिजनं सुप्रतीतप्रथितकीर्तयः शास्त्रिवरा बभूवुः। अत्रान्तरे कलिकाताराजकीयपाठशालाप्रधानाध्यक्षाः म० म० श्रीमहेशचन्द्रन्यायरत्न C. I. E. महोदयाः शास्त्रिवराणां सुयशः श्रुत्वा काशिकामुपेत्य स्वयमेव शास्त्रिवरगृहं गत्वा कलिकातायां राजकीयपाठालये पञ्चशत-मुद्रावृत्तिमदध्यापकपदं स्वीकर्तुं साग्रहं शास्त्रिवरान् शतशोऽन्वरुन्धन्।

शास्त्रिवरा अपि सविनयं तदनुरोधं प्रत्यादिशन्तो जीवननिर्वाहौपयिकीं वृत्तिमिहैव लभमानस्य काशीपरित्यागं प्रत्यवायपक्षीयं निर्दिशन्तः पितृचरणाज्ञामेव तत्र मुख्यं कारणं निरदीदिशन्।

चत्वारिंशन्मुद्रिकामात्रवृत्तिः काले तस्मिन् शास्त्रिवर्यः कुटुम्बी।
काशीवासैकाग्रहस्त्यक्तवांस्तां वृत्तिं चान्यामर्द्धसाहस्रमुद्राम्॥

(विद्वच्चरितपञ्चके)

अथ १९३९ विक्रमवत्सरे श्रीबालशास्त्रिणां परलोकप्रयाणेन खिन्ना अपि शास्त्रिवरास्तेषां चरितं गद्यपद्यमय्या गिरा निर्माय काशीपण्डितपत्रे प्रकाशयामासुः। अनन्तरं सहैव पाठशालीय-कार्येण तात्कालिकाध्यक्ष डॉ० थिबोसाहिबमहाशयानुरोधेन पदमञ्जरी-रसगङ्गाधर-वाक्यपदीय-तन्त्रवार्तिकादिग्रन्थान् टिप्पण्यादिभिः परिष्कृत्य पण्डितपत्रे बनारससंस्कृतग्रन्थमालायां च प्रकाशयामासुः।

अथ १८८७ खीस्ताब्दे भारतेश्वर्याः प्रथमजुबिलीमहोत्सवे सबहुमानं सम्राज्ञीप्रदत्तं 'महाम-होपाध्याय' इति परप्रतिष्ठास्पदं बिरुदं शास्त्रिवरा लेभिरे।

यल्लब्धुं शतशो बुधाः प्रतिदिनं कुर्वन्ति यत्नान् बहून्
केचित्तेषु कथंचिदेव सुकृतैर्विन्दन्ति तद्वार्द्धके॥

लब्धं तत्त्रिदशात्मकाल्पवयसा यूनाऽमुना शास्त्रिणा
साकं वार्द्धकदुर्बलैस्त्रिभिरतिप्रख्यैः पुराणैर्बुधैः ॥
( विद्वच्चरितपञ्चके )

तात्कालिकाः काशीश्वराः श्रीप्रभुनारायणसिंहमहोदयाः स्वगुरूणां शास्त्रिवराणामित्थं समादरं दृष्ट्वा प्रहृष्टाः स्वयमपि महति पण्डितसमाजे महार्हराङ्कववस्त्रार्पणेन शास्त्रिवरानपूपुजन् ।

अथ सौभाग्यात्सुरभारत्याः श्रीमति महामहिमनि डॉ० ए० वेनिस C. I. E. महोदये काशिकराजकीयपाठालयप्रधानाध्यक्षधुरां वहति सति अभिनवप्रवर्तितायां विजयनगरसंस्कृतग्रन्थ-मालायामध्यक्षानुरोधेन सिद्धान्तलेशन्यायमञ्जरीन्यायभाष्यादिग्रन्थान् टिप्पण्यादिभिः परिष्कृत्य सुसम्पादितवन्तः शास्त्रिवराः ।

डॉ० वेनिसमहोदयास्तु शास्त्रिवराणां बुद्धिप्रकर्षं वैदुषीं च सविशेषं निरीक्ष्य लब्धावसरा अन्तरान्तरा शास्त्रिवरमुखारविन्दगलदमृतास्वादसुभगोपदेशरसमास्वाद्य च शास्त्रिपादेषु श्रद्धातिशय-मपुष्णन् । स च सत्पुरुषसंसर्गसंस्कारो डॉ० वेनिसमहोदयस्य दृशं विशदय्य आर्यशास्त्राणां गौरवं चाप्यवगमय्य धियमस्य भारतीयदिशैव प्रवर्त्तयामास । शास्त्रसंस्कृतचेता डॉ० वेनिस-महोदयोऽपि शास्त्रिवराणामुपकारान् यावज्जीवं स्मरन् श्रद्धावशात् सर्वदैव "गुरुजी" इति पदेनैव तन्नाम स्मरन्नासीत् । किं बहुना, प्रयागविश्वविद्यालये न्यायवैशेषिकदर्शनविषयके स्वकीय-प्रथमव्याख्याने श्रीशास्त्रिवरप्रसादादेव स्वस्य योग्यतामुल्लिख्य 'प्रीयन्तां गुरवः' इतिवाक्येन तत्रापि शास्त्रिपादान् सादरं सस्मार डॉ० वेनिसमहोदयः । अथ १८९० मिते खीस्ताब्दे काश्यामसीघट्टे जलनलयन्त्रिकाकार्यसौकर्याय तन्निकटवर्तिप्रथिततमश्रीगोस्वामितुलसीदास-प्रतिष्ठापितश्रीसीतराममन्दिरस्थदेवमूर्तीस्ततोऽपसार्यान्यत्र नवनिर्मितमन्दिरे प्रतिष्ठापयितुं कृतनि-श्चयेऽधिकारिवर्गे वार्तयाऽनया सर्वतः संक्षुब्धे महाजनसमाजे धूर्तवञ्चकदस्युभिरवसरमिमं स्वार्थसाधनानुकूलं कल्पयित्वा समारब्धे प्रकृतिपीडने हन्यमानेषु निरपराधेषु प्रवृत्ते च घोरविप्लवे मण्डलाधीशेन विचारसभायां प्रवर्तितायां समाहूताः शास्त्रिवराः शतशः प्रमाणजातैर्देवमूर्तीनां स्थानादपसारणं मन्दिरपातनं च शास्त्रविरुद्धमित्येवं प्रत्यपीपदन् । विप्लवशमनस्य सुकरमुपायं च निरदीदिशन् । सहर्षं मण्डलाधीशेन सह सभ्यसमाजैः स्वीकृते शास्त्रिवर्योपदेशे सद्यो निवारितं मन्दिरपातनं मूर्तीनामपसारणं च । शमितश्च विप्लवः शास्त्रिवर्योपदिष्टेनैव वर्त्मना ।

अथ १९५३ विक्रमवत्सरे काशीनिवासी आहिताग्निः सदाशिवदीक्षितनामकोऽकिञ्चनो ब्राह्मणो मनसि बलवदुद्भूतया ज्योतिष्टोमयागचिकीर्षया व्याकुल आत्मनोऽधनतया च सुतरां विषण्णोऽपि सर्वतोमुखसाहाय्यसम्पादनपुरःसरं यागभारं शास्त्रिवरेषु साग्रहं न्यस्तवान् ।

शास्त्रिवरा अपि तदानीमल्पवेतनतया स्वयमर्थसाहाय्यं कर्तुमसमर्था अपि तस्य ब्राह्मणस्य पुण्यकर्मणि दृढां निष्ठां, अनेन द्वारेण श्रौतविद्यायाश्चोन्नतिं सम्भाव्यात्मविश्वासेन साहसप्रायेऽप्य-स्मिन् कर्मणि बद्धपरिकरा बभूवुः । ततो यज्ञेश्वरानुग्रहात् प्रचुरपुण्यबलाच्च शास्त्रिवराणां काशि-

कैर्वैदेशिकैश्च तथाविधमर्थसाहाय्यमाचरितं, यदन्ते बहूनामपि श्रद्धालूनां साहाय्यमनावश्यकतयाऽस्वीकरणीयं बभूव ।

इत्थं शास्त्रिवरैः सुसम्पादिते तस्मिन्नध्वरे नियुक्तानामृत्विजामसाधारणं स्वकर्मकौशलम्, अनुष्ठानसौष्ठवं, सुप्रबन्धं च प्रत्यक्षं निरीक्ष्य समुपजातश्रद्धातिरेकाः नेपालराजाश्रिता विद्वद्वरा आचार्यशिरोमणिशर्माणः स्वयं सोमपुरःसरमाधानं त्रेताग्नेश्चिकीर्षन्तस्तत्सुसम्पादनभारं परमादरपुरःसरं शास्त्रिवरेषु विन्यस्य शुभे मुहूर्ते दीक्षामगृह्णन् । शास्त्रिवरैः पुरेवायमप्यध्वरः समीचीनतयैव सम्पाद्य समापितः । ततो १९५५ वैक्रमेऽब्दे आचार्यशिरोमणिदीक्षितमहोदयाः प्रथमाध्वरस्य सुसम्पादनेन सञ्जातद्विगुणोत्साहाः शास्त्रिवरानुध्यानेऽत्यग्निष्टोमयागं कर्तुं प्रावर्तन्त । सुसम्पादिते च तस्मिन्नप्यध्वरेऽधिकाधिकोत्साहाः शास्त्रिवरोपदर्शितेनाध्वना साग्निचित्सर्वपृष्ठाप्तोर्यामसोमयागं समारभन्त । बहोः कालादसौ यागो न केनापि कृत आसीदिति तत्पद्धतिप्रबन्धविधानानि ऋत्विजामनभ्यस्तचराण्यासन्निति तत्सुसम्पादनाय नानाविधश्रौतग्रन्थावलोकनविमर्शनादिना भूरिप्रयासेन कायक्लेशमगणयित्वा सुशिक्षामापादिता ऋत्विजः सम्पादितश्च पूर्वापेक्षयाऽपि सुष्ठुतरमसौ यागः शास्त्रिवरैः । तस्मिन्नेवावसरे शास्त्रिवराणां साक्षादनुध्याने लब्धशिक्षा ये श्रौतविदस्तादृशेषु कर्मसु निपुणतामवापुस्ते तच्छिष्याश्चैवाद्यापि तत्कर्म कर्तुमीशते । सोऽयं शास्त्रिवरैरेव पुनः प्रवर्तितो लुप्तप्रायः श्रौतगङ्गाप्रवाहः कालक्रमेण शुष्यन्नपि अद्यावधि कथञ्चित् धृतप्राणोऽस्ति ।

अथ १९०३ खीस्ताब्दे श्रीमतः सम्राजः सप्तमैडवर्डस्य मुकुटधारणमहोत्सवे दिल्लीनगरे सम्राट्प्रतिनिधेर्लार्डकर्ज़नमहोदयस्य महत्यां सभायां सबहुमानमाहूता अपि शास्त्रिवराः शरीरदौर्बल्येन हेतुना तत्र गन्तुं नाशक्नुवन् । तथापि तस्मिन् महोत्सवदिने काश्यामेव प्रवर्तिताया मुत्सवसभायां मण्डलाधीशेन ससम्मानं शास्त्रिपादेभ्यः सी० आई० ई० (C. I. E.) इतिपदवीप्रदानमुद्घोषितम् ।

ततः परं १९०४ खीस्ताब्दे स्वज्येष्ठसूनोर्बुद्धिमत्तमस्य यूनो ढुण्ढिराजशास्त्रिणोऽकालनिधनेन दूनान्तराः शास्त्रिवरा राजकीयकार्यान्मासत्रयमवकाशं गृहीत्वा तीर्थयात्रायै निर्जग्मुः । प्रतिनिवृत्य च तीर्थयात्रातः शास्त्रिवरैरलिविलासिसंलापनामकं दार्शनिकं खण्डकाव्यं प्रणीतम् । हंसाष्टकं तु ततः पूर्वमेव प्रणीतमासीत् । ग्रन्थद्वयमपीदं मुद्रितं ग्रन्थकर्तृगृहे लब्धुं शक्यते । अथानुपदमेव प्रयागविश्वविद्यालयकार्यकारिसभायां सदस्यत्वेन ( Fellow of the University ) नियुक्ताः शास्त्रिवरा अनेकवारं एम्० ए० परीक्षापरीक्षककार्यमपि चक्रुः । १९०६ खीस्ताब्दे श्रीमन्महामहोपाध्यायगङ्गानाथझामहोदयस्य डाक्टरपरीक्षायाः परीक्षका भूत्वा तत्कार्यमपि साधु समपादयन् । ततः परमेवाधिकारिवर्गस्य भूयांसमप्यनुरोधमुल्लङ्घ्य विश्रान्तिकामाः शास्त्रिवराः सर्वमेव राजकीयकार्यभारं परित्यज्य देहपातपर्यन्तं मुनिवृत्त्यैवावर्त्तन्त ।

१९७० विक्रमशाके ज्येष्ठे शुक्लपक्षे प्रतिपदि गुरौ प्रातर्विहाय पाञ्चभौतिकं वपुः शिवभावमासेदिरे श्रीमद्गुरुवरश्रीगङ्गाधरशास्त्रिचरणाः ।

श्रीमतां गुरुवराणां तनयाः श्रीभालचन्द्रशास्त्रिचरणास्तेषामेका भगिनी चेतिसन्तानद्वयमस्ति। कनिष्ठभ्रातरः श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रितैलङ्गमहोदयाः साहित्यसम्पत्सम्राजो विराजन्ते। गुरुवराणां शिष्यास्तु सकलं भारतमभिव्याप्य सहस्रशो विराजन्त इति तन्नामानुकीर्तनं दुःशकमेवेति विरम्यते।

---

# महामहोपाध्याय श्री० पं० शिवकुमारशास्त्रिमहोदयाः

लेखकः—पं० करुणापति त्रिपाठी

तत्र भवतां सुगृहीतनामधेयानां प्रातःस्मरणीयानां श्री 'महामहोपाध्याय'विरुदालंकृतशिवकुमारशास्त्रिमहोदयानां नाम गीर्वाणवाणीसेवकमण्डलेषु कस्याविदितमस्ति ? काशीनगरीतो नातिदवीयसि 'उन्दी'नाम्नि ग्रामे समुद्रखाङ्केन्दुमिते (१९०४) वैक्रमाब्दे फाल्गुनकृष्णैकादश्यां किलैतेषां विद्वन्मार्तण्डानामुदयो बभूव। अमीषां मातुः 'मोतीरानी'ति नामासीत्, रामसेवकाभिधश्च पिता सरयूपारीणः स्वजनकस्य पञ्चमः कनीयान् तनयः शङ्करोपासको द्विजकर्माचरणशील आसीत्।

एतेषां विषय एष प्रवादः प्रचलति, यदेषां जनिकाले एतदीया रसना श्वेतत्रिशूललक्ष्मणा विशालो भालश्चाभिनवेन्दुनिभाङ्केनेत्थमुभावपि लोकविलक्षणचिह्नचिह्नितावास्ताम्। 'उभे अपि ते कुलक्षये' इति मुधा विशङ्कमाना मुग्धा नार्यः 'राक्षसोऽयं हन्यतां, राक्षसोऽयं हन्यतामि'ति मुहुर्मुहुरुद्घोषयन्त्यः कोलाहलं चक्रांचक्रुः। सप्तसु, अष्टासु वा जातमात्रमृतेषु सन्तानेषु लब्धैकजीविततनयोऽमीषां जनकस्तत्कोलाहलाकर्णनव्यथितमानसः सूतिकागृहमवाप्य स्वयं चावलोक्य ते लक्षणे अद्भुतापत्यप्राप्तिरूपं गुरोराशीर्वादं स्मरन् हर्षगद्गदेन स्वरेणावोचत्—"साक्षाच्छङ्करावतारोऽयमर्भको न कथमप्यन्यथा शङ्कितव्य" इति। सर्वाश्च तास्तदाकर्णनजातप्रत्ययाः श्रद्धयावनताः तं शिशुं लालयांचक्रुः।

एषां तृतीये हायने जनको मातुरुत्सङ्गे विहायैनान् सुरलोकातिथ्यं स्वीचकार। अलौकिकाचरणचारिणश्चेमे पञ्चमादेव वर्षाद् गत्वा स्वगृहान्नेदीयसः सरसस्तटं मृण्मयं शङ्करं निर्मायाहरहः पार्थिवपूजनं व्यदधुः। दर्शं दर्शं चैतदद्भुतचरितमेतेषां बुद्धिमन्तो विस्मयन्ते स्म मलिनमतयश्चोपहसन्ति स्म। नवमे च वर्षे स्वपितृव्यमहोदयेन साकं 'वेतिया'प्रदेशं गत्वा 'वाणीदत्तचतुर्वेद'-महोदयात् 'लघुकौमुद्याः' अध्ययनमिमे समारब्धवन्तः। किन्तु दैववशात् स्वल्पैरेवाहोभिस्तत्रत्यवासं विहायेमे स्वगृहं न्यवर्त्तन्त।

तत्र च पितृहीना इमे पितृव्यादिभिः प्रायो गोमहिषादिचारणे नियुक्ता अपि तदनुशासनमुपेक्ष्य कदाचित्पूर्वोक्तपुष्करतटे पार्थिवपूजनं व्यदधुः, कदाचिच्च स्वनिलयस्योर्ध्ववर्त्ति कक्षमासाद्य वेष्टनबद्धानि पुस्तकानि समुद्घाट्य तत्र संसक्तान्तःकरणा इवाध्ययनाभिनयं विदधुः। इत्थमेव नित्यमाचरतामेतेषां प्राप्ते एकादशे वत्सर एका एतादृशी घटना समजनि यया किलैतेषां जीवनधारा परिवर्त्तिता, यतश्चैषामभ्युदयोदयोऽभवत्।

एकदा स्वपितृव्येन महिषचारणायाज्ञप्ता इमे तदाज्ञामुपेक्ष्य पूर्वोक्तपुस्तकसदनं सम्प्राप्य बहूनि पुस्तकानि चोद्घाट्य सर्वमन्यजगज्जातं विस्मार्येवाध्ययननिरतमनसस्तस्थुः। मार्गयन्तश्चैतान् पितृव्यादयोऽवलोक्य तथास्थितानिमान् क्रोधाक्रान्तान्तःकरणाः कठोरचपेटाघातेन कपोलपालिकामेतेषां प्रहरन्तः 'गृहकर्माणि विहाय मूढोऽपि पतञ्जलिम्मन्यः किमिह करोषी'ति वचसा च मानसं विदारयन्तो बहिरन्तश्च सममेव व्यथयन्तेतरां स्म।

घटनया चानया महती ग्लानिरेतेषां चेतसि समजनिष्ट। स्नेहसुधासिक्तानि मातुर्वचनान्यपि नाकर्णयन्त इवेमे तस्यामेव रात्रौ कमपि स्वाभिप्रायलेशमविज्ञापयन्त इव गृहात्प्रस्थायेतस्ततोऽटन्तो यथाकथंचित्काशीनगरीमभिपेदिरे। तत्र च काशीस्थराजकीयविद्यालये व्याकरणाध्यापकेभ्यः श्रीदुर्गादत्तशास्त्रिमहोदयेभ्योऽष्टादशवयःपर्यन्तं सपरिष्कारं व्याकरणशास्त्रमधिजगिरे। नित्यं च मणिकर्णिकास्नानान्नपूर्णाविश्वेश्वरदर्शनं च व्यधुः। एतदभ्यन्तरे स्वकीयेन पितृव्यमहोदयेन बहुधा तर्जिता अनुनीताः, वात्सल्यभरमानसया जनन्या च मुहुर्मुहुः प्रार्थिता अपि मनस्विन इमे पितृव्यकृतपरिभवं स्मरन्तो यावज्जीवनं गृहं न प्रत्याजग्मुः। इत्थं च व्याकरणपठनानन्तरं तत्रैव राजकीयविद्यालये नैयायिकशिरोमणिभ्यः श्रीकालीप्रसादशिरोमणिभ्यो न्यायशास्त्रं, दार्शनिकेषु गणेशनिभेभ्यः श्रीगणेशश्रौतिभ्यो निखिलं खण्डनखण्डखाद्यं, ब्रह्मानन्दमनुभवद्भ्यो विशुद्धानन्दस्वामिमहोदयेभ्योऽद्वैतसिद्धिं पूर्वमीमांसादिकं, तथा चान्येभ्यो विशिष्टविषयविज्ञेभ्यस्तत्तद्विशिष्टशास्त्राणि चाध्यगीषत। अन्ततश्चैतद्विद्योपार्जनमहायागस्य पूर्णाहुतिमिव विदधन्तः प्रातःस्मरणीयेभ्यो विश्वनाथावतारेभ्यो रानडोपाधिभूषितश्रीमद्बालशास्त्रिभ्यो व्याकरणशास्त्रस्य गुरुपरम्परागतपरिष्काररहस्यानि समधीत्यान्यानि च शास्त्रीयतत्त्वानि लब्ध्वा स्वीयालौकिकप्रतिमाप्रभावेण तत्रैव विद्यालयेऽध्यापकपदमुररीचक्रुः।

चतुर्वर्षाभ्यन्तरमेवैतेषां राजकीयविद्यालयस्य वा दुर्दैववशात्केनापि कारणेन तत्पदमेभिः संत्यक्तम्। व्यतीतेषु च कतिचिद्वर्षेषु विद्यालयाध्यक्षेण श्री'वेनिस'महोदयेन वारंवारमाहूताः, महामहोपाध्यायोपाधिना विभूषिताः सन्तः 'गवर्नर'महोदयेनापि निमन्त्रिता एते मनस्विनस्तदुच्छिष्टं पदं न जगृहुः। वरयात्राप्रसङ्गेन गत'दरभङ्गा'पत्तना इमे स्वीयदिव्यवैदुष्यचमत्कारेण 'दरभङ्गा'नरेशान् सन्तोषयन्तश्चमत्कृतवन्तश्च श्रीमद्भिः 'दरभङ्गा'धिपतिश्रीलक्ष्मीश्वरमहोदयैराद्रियमाणाः पूर्वं सभापण्डितपदं पश्चाच्च तदीयपाठशालाध्यापकपदमवाप्य कानिचिद्दिनानि व्यतीतवन्तः। स्थापिते च तैर्नरपतिभिः श्रीविशुद्धानन्दानुरोधेन काश्यां 'दरभङ्गा'विद्यालये

दृष्ट्वा चैतेषां काशीवासं प्रति परमामुत्कण्ठां काश्यामेव स्वीयायाः 'दरभङ्गा'पाठशालाया अध्यापकपदवी दत्ता।

इत्थं चेमे पुण्यश्लोकाः सर्वमन्यद्विहाय सततमाबालवृद्धच्छात्रेभ्यो विद्यादानं कुर्वन्तः शास्त्रार्थगोष्ठीषु विचक्षणचक्रवालानि मूकयन्तः, नवपरिष्कारविष्कारचमत्कारेण तत्त्वज्ञानाश्चर्यपरवशान् विदधन्तः, प्रचुरवित्तप्रतिग्रहलोभेनाशास्त्रीयव्यवस्थाः कामयमानान् भूयो भूयः परिभावयन्तः, धनवैभवलिप्सां विहाय स्वल्पेनैव वेतनेन सन्तोषं कृत्वा काशीम्प्रति स्वां भक्तिं द्रढीयसीं कुर्वन्तः, 'सर्वतन्त्रस्वतन्त्रपण्डितराज' 'विद्यामार्त्तण्डा'दिबिरुदैर्भूषिताः सन्तः, विवादास्पदेषु शास्त्रीयविधानेषु समुचितानां व्यवस्थानां निर्णयं कुर्वन्तः, 'अच्युतजी-गङ्गानाथझा-मधुसूदनझा-मुकुन्दझा-शिवशङ्करझा-रघुनाथझा-दीनबन्धुझा-श्रीमदच्युताश्रममुनि-राजारामशास्त्रि-महादेवशास्त्रि-रामावधिशास्त्रि-निरीक्षणपतित्रिपाठि-जयदेवमिश्र-दौलतराम-नन्दनझा-कन्तलाल-मुक्तिनाथझा-बबुजनझा—चुम्बेझा-गुरुचरणविद्याभूषण-हाराणचन्द्रशास्त्रि-यामिनीनाथतर्कवागीश-लज्जारामप्रभृतिभिः ख्यातविद्याप्रकर्षैः शिष्यैर्दिशि दिशि स्वयशांसि प्रसारयन्तश्चासन्। अन्ते च पक्षाघात-(लकवा) व्याधिना समाक्रान्तास्त्रीन् मासः शय्यालग्ना अन्ततश्च ताहिरपुरनरेशस्य केदारघट्टस्थे भवने श्रीमद्भागवतादिकं शृण्वन्तो यथाशक्ति तदुच्चारणयत्नं च विदधन्तः १९७५ तमे वैक्रमाब्दे ७१वर्षीया इमे भाद्रे मासि उषसि वेलायां गङ्गाकूले संस्कृतगिरमनाथयन्तः, स्वीयां तृतीयां पत्नीं, षट्कन्या, एकं पुत्रं त्रीन् पौत्रांश्च विलापयन्तः प्राणान् अत्यजन्।

शनैः शनैः संस्कृतविद्याध्ययनाध्यापनस्य प्राचीनपरिपाटीलोपं दर्शं दर्शं दूयमानमानसाः शिष्यगणानुरोधेनापि नूतनग्रन्थनिर्माणपराङ्मुखा अपि इमे 'यतीन्द्रजीवनचरित'-'लक्ष्मीश्वरप्रताप' 'लिङ्गधारणचन्द्रिकादि'ग्रन्थान् 'परिभाषेन्दुशेखर'-महिम्नस्तोत्रयोष्टीके च व्यरीरचन्।

लेखवृद्धिभियाऽवकाशाभावादधिकमनिवेद्यैव विद्वद्भ्यो विरमन् तान् क्षमां याचे।

——

## म० म० श्रीदामोदरशास्त्रिणां जीवनचरितम्

(ई० सन् १८७६—१९०८ पर्यन्तं कार्यकालः)

लेखकः—पं० नारायणशास्त्री खिस्ते

प्रायः पञ्चशतकेभ्यः पूर्वं दक्षिणदेशं परित्यज्य काशीप्रवासिषु दाक्षिणात्यमहाराष्ट्रब्राह्मणकुलेषु भारद्वाजकुलं प्रथितमस्ति। तदानीं काश्यां प्रथमपूजासम्मानास्पदभट्टकुलप्रमुखमयूखकार-

श्रीनीलकण्ठभट्टेन भारद्वाजकुलमूलपुरुषाय श्रीमहादेवभट्टाय स्वकन्या समर्पिता। महादेवभट्टस्य द्वौ पुत्रौ दिनकरो दिवाकरश्च। दिनकरस्तु दिनकरीत्याख्यया मुक्तावलीटीकया सुप्रसिद्ध एव विद्वत्समाजे। दिवाकरेणाऽपि स्वमातामहच्छायायाऽनेके धर्मशास्त्रनिबन्धा विरचिताः। तत्पुत्रो वैद्यनाथः। ततः परं तस्मिन्नेव कुले सीतारामभट्टः समुत्पन्नः। अस्यैव बालंभट्ट इति नामान्तरमासीदिति सम्भाव्यते। अनेनैव खेचीपतेर्बलभद्रसिंहनृपतेः १८२१ वैक्रमशके 'जासी' नामा ग्रामो लब्धः। योऽद्यापि ग्वालियरप्रान्ते वर्तते। यं चाद्यापि भारद्वाजवंशीया उपभुञ्जते। सीतारामभट्टस्य पुत्रो हरिरामभट्टस्तत्पुत्रो बालकृष्णभट्टः। अनेनैव राजलब्धग्रामसुव्यवस्थासम्पादनाय काशीं परित्यज्य जासीग्राम एव सकुटुम्बेन वासः कृतः। अस्य रामलक्ष्मणदामोदरगोविन्दनामकाश्चत्वारस्तनया अभूवन्। तृतीयतनयो दामोदर एवास्मच्चरितनायकः। एकदा कोपनाद् बालकृष्णभट्टाद्भीत्यैव ज्येष्ठतनयो रामशास्त्री दामोदरगोविन्दाभ्यामनुजाभ्यां सह पिपठिषया वाराणसीमाजगाम। तदानीमेतेषां वयांसि चतुर्विंशाष्टादशचतुर्दशाब्दमितान्यासन्। दामोदरस्य प्रथमो विवाहस्तु पञ्चदशाब्द एव सम्पन्न आसीत्। अथ काश्यामागता इमे त्रयो भ्रातरः स्वकीय एव मातामहकुलाधिगते सद्मनि सुखं न्यवसन्।

श्रीमतो दामोदरशास्त्रिणो जन्मकालः १९०४ सम्मितो वैक्रमशकः, आरोणग्रामश्च जन्मस्थानम्। ज्येष्ठभ्राता रामशास्त्री स्वानुजयोर्दामोदरगोविन्दयोर्विद्याभ्याससौकर्यसम्पादनायाऽऽत्मनः क्लेशानगणयित्वा भूरिपरिश्रमैरितस्ततस्त्रयाणां भरणपर्याप्तमन्नादिकं लभते स्म। ततो रामशास्त्रिणाऽनुजौ दामोदरगोविन्दौ तात्कालिककाशिकपण्डितमूर्धन्यानां रानडेपाख्यश्रीबालशास्त्रिणां पाठशालायामध्ययनार्थं प्रवेशितौ। श्रीबालशास्त्रिणोऽपि तयोः सुलक्षणपूर्णतया शोभनायतिमत्तां सम्भावयन्तो विशेषतो गुणमन्दिरे दामोदरे समाकृष्टचित्तास्तयोरध्यापनमूरीचक्रुः। इत्थमष्टादशहायनावस्थेन दामोदरेण गीर्वाणवाणीमन्दिरे प्रवेशः कृतः। ततः परमसौ दारिद्र्यदुरवस्थाजनितक्लेशजातमवधूय यथाकथञ्चिल्लब्धैरन्नवस्त्रैः सम्पादितशरीरव्यापारः सर्वात्मना सरस्वत्याराधनैकप्रवणचेता बुद्धिमतामग्रेसरो दामोदरो गुरुचरणान्तिकेऽधीयानः सुप्रसन्नैर्गुरुवरैरध्यापितसकलविद्यारहस्यः कियतैव कालेन पदवाक्यप्रमाणपारावारपारीणो बभूव।

अथैष गुरोरादेशमासाद्य स्वसद्मनि समागतान् शतशश्छात्रान् प्रत्यहं सर्वाणि शास्त्राणि विशेषतो व्याकरणमध्यापयन्नल्पीयसैव कालेन सर्वतः प्रसृमरसुयशाः पण्डितमण्डले महतीं ख्यातिमलभत।

प्रतिदिनं प्रातःकाले महीसुरगुरोर्गृहीतावतारस्येव भगवतो विरिञ्चेः श्रीमतो बालशास्त्रिणः सविधे दर्शनानि समधीयानो नितान्तं सन्तुष्टेन तेन सुचिरमननेनोद्धृतानि शास्त्ररहस्यानि निर्व्याजमध्यापितः स्वकीयप्रतिभाविशेषमहिम्ना तानि सद्यः स्वायत्तीकुर्वाणो गुरुचरणादेशेन तदन्तिकागतान् असङ्ख्यातान् मैथिलान् विद्यार्थिनः स्वसद्मनि मध्याह्नोत्तरमध्यापयामास। इत्थं बहवो मैथिलाश्छात्रा आत्मनो विद्यार्थितादशायामेवाध्यापिताः श्रीमता दामोदरशास्त्रिणा। वाग्देवताया निरन्त-

रोपासनानुरक्तान्तरेणामुना नक्तन्दिवं तथा विभाजितमासीत्, यथाऽस्य परमावश्यकदैहिकव्यापार-ब्राह्मणोचिताह्निकक्रियाकलापवर्जं सर्वोऽपि समयोऽध्ययनाध्यापनक्रियास्वेवात्यवाह्यत।

अत्रान्तरेऽशनिपातदारुणं स्वग्रामे मातुर्देहपातवृत्तं निशम्य शोकाकुलोऽप्यसौ अध्ययन-प्रत्यूहपरिजिहीर्षया स्वग्रामं नागच्छत्। अथ दयिताविरहविधुरेण भट्टबालकृष्णेन तनयानामार्थिकीं दुरवस्थामविचारयतैव रामशास्त्रिदामोदरशास्त्रिणोर्भार्ये अपि तयोरन्तिकं प्रहिते। तयोरागमनेन समेधमानगार्हस्थ्यव्यया इमे भृशं चिक्लिशुः। रामशास्त्री तु येन केनाप्यध्वना गार्हस्थ्यार्णवकर्ण-धारतामवलम्ब्य गार्हस्थ्यचिन्ता यथाऽनुजौ न बाधेत तथैव बाढं प्रयतते स्म।

नैतावतापि दुरदृष्टं परितुष्टं बभूव, काश्यागमनादनु मासद्वयान्तर एव दामोदरशास्त्रिणः प्रथमा पत्नी पञ्चत्वमगमत्। अथ मध्यमेन भ्रात्रा लक्ष्मणशास्त्रिणा प्रहितात् पत्राज्जनकस्य वार्द्धकसुलभामयोपसर्गेण शय्याशायितां जीवितसन्देहं चावगम्य श्रीरामशास्त्रिदामोदरशास्त्रिणौ पितरं द्रष्टुं सति सम्भवे तं च काशीमानेतुं स्वग्रामं प्रातिष्ठेताम्। मध्येमार्गं ग्वालियरराजधानीमासाद्य श्रीदामोदरशास्त्री तत्रत्यान् राजाश्रितान् पण्डितान् राजसभायां वादकथायै समाजुहाव। त्रीणि दिनानि तैः सह शास्त्रचर्चा व्यतन्यत। पराजिताश्च ते सर्वेऽपि। श्रीदामोदरशास्त्रिणः पाण्डि-त्यप्रकर्षेण तेजसा च समाकृष्टस्तात्कालिको ग्वालियराधीशः श्रीजयाजिराजः श्रीदामोदरशास्त्रिणं शिविकारोपणमहार्हराङ्कवार्पणपञ्चशतरूप्यकप्रदानादिभिः समपूजयत्। अथ राजसम्मानसम्पादन-सञ्जातप्रमोदमेदुरान्तरो दामोदरशास्त्री पूर्वसङ्कल्पानुसारं सहाग्रजेन पितृचरणदर्शनसोत्कण्ठचेतास्त-दावासं स्वग्रामं जगाम। तत्र पूर्वमेव कर्णाकर्णिकयाऽऽकर्णितनिजतनयविजयवृत्तान्तोऽपि भट्टबाल-कृष्णः सर्वथाऽसम्भाव्यमेवेदमाकलयन्नश्रद्दधान एवासीत्। दामोदरशास्त्री च पितरं साष्टाङ्गं प्रणम्य महीपतेर्लब्धं तद्राङ्कवमंशुकमर्द्धसहस्रमुद्राश्च पितुश्चरणयोः सविधे सविनयं निदधे। रामशास्त्री च सप्रमोदमेतदीयं विजयवृत्तं राजसम्मानप्रकारं च सविस्तरं जगाद। भट्टबालकृष्णः श्रुत्वेदं वृत्तम-तिप्रसन्नस्तनयप्रार्थनाऽनुसारं सपरिवारः काश्यामाजगाम। तस्मिन्नेवाब्दे काश्यामेव तनुं तत्याज।

ततः परं श्रीदामोदरशास्त्रिणः सुयशसा समाकृष्टस्तात्कालिककाशिकराजकीयपाठशाला-ध्यक्षः श्रीमान् नेसफील्डसाहिबमहोदयः १८७६ खीस्ताब्दे सबहुमानमेनं पाठशालायां व्याकरण-प्रधानाध्यापकपदे न्ययुङ्क्त। शास्त्रार्थसभासु विदुषोऽस्य सभासिंह इति प्रसिद्धं विरुदमासीत्। अनेन बह्वीषु विद्वत्सभासु प्रसिद्धैः पण्डितैः सह शास्त्रार्थविचारं विधाय लोकातिगं सुमहद्यशो लब्धम्। रावोपुरे पं० ऋद्धीझा पण्डितेन, ततः परं काश्यामेव प्रसिद्धेन विदुषा बच्चाझाशर्मणा च सहास्य शास्त्रार्थविचारौ विद्वद्भिर्विदितावेव। श्रीमत्यां सङ्कटादेव्यामस्य प्रगाढा भक्तिरासीत्। १८९९ खीस्ताब्देऽनेन महामहोपाध्यायपदवी लब्धा। १९०६ खीस्ताब्दे श्रीशङ्कराचार्यपीठादनेन 'अशेषवाङ्मयपारगवैयाकरणकेसरी'ति पदवी सुवर्णपदकं च लब्धम्।

१९०९ खीस्ताब्दे भाद्रपदकृष्णाष्टम्यां परित्यज्य पाञ्चभौतिकं वपुः शिवसायुज्य-मनेन लब्धम्।

# महामहोपाध्याय श्रीतात्याशास्त्रिचरितम्

( कार्यकालः १८८०—१६१६ खि० )

लेखकः—पं० नारायणशास्त्री खिस्ते

पटवर्द्धनवंशावतंसः कोङ्कणदेशनिवासी श्रीकृष्णभट्टो नाम चित्तपावनजातीयो ब्राह्मणः स्वभाग्यं परीक्षितुमिच्छन्निव महाराष्ट्रदेशमुपगम्य सातारानगरे निवासं कृतवान्। तत्रैव समागतेन नागपुराधिपरघोजीभोसले-नरपतिना सहैव नागपुरमाजगाम। तत्र निजबुद्धिवैभवेन महीपतेर्विश्वसनीयतामासाद्य राजकीयकोशप्रधानाध्यक्षपदे न्ययुज्यत।

अथ कालक्रमेण कृष्णभट्टस्य भ्रातृस्नुषा बहिणाबाईतिनाम्नी विधवा प्रभूतं वित्तमादाय नागपुरात्प्रचलिता सती काशीनिवासेच्छया काशीमाजगाम। इत्थमनेन क्रमेण प्रकृतचरितनायकवंशः काशीवासी समजनिष्ट। बहिणाबाई-नाम्न्या विधवाया देवरो बालकृष्णभट्ट एव चरितनायकस्य प्रपितामहः। तस्य पुत्रो भट्टनारायणः। तस्य पुत्रद्वयमभूत्, प्रथमः पुत्रो महदेवभट्टः। अयमेव चरितनायकस्य जनकः। द्वितीयः पुत्रो नागेश्वरभट्टश्चरितनायकस्य पालकः पितृव्य-आसीत्। महादेवभट्टो नागपुर एव पूर्वजोपार्जितां जीविकामनुतिष्ठन् सुखेनासीत्। महादेवभट्टस्य द्वितीयः पुत्र एव तात्याशास्त्र्यपराभिधानो रामकृष्णशास्त्री। असौ १६०२ मिते वैक्रमेऽब्दे आषाढशुक्लत्रयोदश्यां बुधवासरे नागपुरे जनिमलभत। सार्द्धद्विहायनावस्थ एवासौ दुरदृष्टान्मातुः पितुश्चाकालनिधनेन सर्वथाऽसहायावस्थां गतः पितृव्यभट्टनागेश्वरेण स्वसमीपमानीय तनयनिर्विशेषं प्रत्यपाल्यत।

अथ पञ्चहायनावस्थोऽयं नागपुरे मातृभाषाशिक्षागुरोः सकाशादल्पकालेनैव तां शिक्षां समापितवान्। अत्रान्तरे भट्टनागेश्वरस्य परिवारेण सहैवायं काशीमुपागतः। अष्टवर्षदेशीयः पितृव्येण विधिवदुपनीतः। अथ पुनरपि कार्यविशेषवशेन नागपुरं गच्छन् पितृव्योऽमुमपि सहैवात्मना निनाय। तत्र खरे-इत्युपनामकात्कस्माच्चिच्छास्त्रिवरात्कोशकाव्यादि समधीयानोऽसौ चतुर्दशहायनावस्थायां कोशकाव्येषु लब्धप्रवेशः पुनरपि पितृव्येण सहैव काशीमाजगाम। ततः काश्यां वर्षद्वयं यावद्वेदकर्मकाण्डाद्यभ्यासोऽनेन सम्यगक्रियत। अथ समधिकपिपठिषया काशिकप्रधानपण्डितं श्रीरानडेपाख्यबालशास्त्रिणमन्तेवासिभावेनोपाससाद। शोभने मुहूर्ते समारब्धोऽस्य सिद्धान्तकौमुदीपाठः। अथानवरतमगणितकायक्लेशमधीयानोऽसौ सद्गुरोराशीवचनप्रभावादात्मनो निरुपमधिषणाबलाच्च द्वादशवर्षोल्लङ्घनीयमध्वानं षड्भिरेव वर्षैरतिचक्राम। कृत्स्नं सपरिष्कारं व्याकरणं तावतैव समयेनाधीतवताऽनेन धीमच्छिरोमणेर्गुरोरपि विस्मयो जनितः। वेदान्तधर्मशास्त्रादिशास्त्राण्यपि सरहस्यमध्यापितोऽसौ धरामरगुरुणा गुरुणा सर्वशास्त्रावगाहिशेमुषीकः प्रकृष्टं पाण्डित्यं भेजे।

अथ कृतदारपरिग्रहः काशिकदरभंगाधीशपाठशालायां ससम्मानमध्यापकपदमलभत। तत्र सविशेषमध्यापयताऽनेन बहवो मैथिलाश्छात्राः समध्यापिता लम्भिताश्च पण्डितमण्डले महतीं प्रतिष्ठाम्। अथ तात्कालिककाशिकराजकीयपाठालयप्रधानाध्यक्षो डॉक्टरथिबो-साहिबमहोदयः सबहुमानमेनं पाठशालायां व्याकरणसांख्ययोगादिदर्शनाध्यापकपदे न्ययुङ्क्त। अनेनाध्यापिता असङ्ख्याताश्छात्रा अद्यापि पण्डितमण्डले तिलकायन्ते। एतन्निर्मितेषु परि-भाषेन्दुशेखरस्य "भूति"नामिका टीका विश्वविश्रुताऽस्ति। साम्प्रतिकेषु वैयाकरणेषु नास्ति कोऽपि तथाविधो येन नोपासिता भूतिः। १९०६ खीस्ताब्दे महामहोपाध्यायपदव्यनेन लब्धा। १९७६ वैक्रमेऽब्दे फाल्गुनशुक्लतृतीयायां प्रातः कृतनित्यक्रियोऽनायासक्लेशेनैव तत्याज पाञ्चभौतिकं वपुः।

—

# महामहोपाध्यायगुरुवरश्री ६ रामशास्त्रितैलङ्गचरणानां संक्षिप्तमितिवृत्तम्

( ई० सन् १८८८-१९२२ पर्यन्तं कार्यकालः )

लेखकः—पं० नारायणशास्त्री खिस्ते

गुरुवरमहामहोपाध्याय, श्रीगङ्गाधरशास्त्रि C. I. E. श्रीचरणानां कनिष्ठाः सापत्नभ्रातरः श्रीरामशास्त्रिण आसन्।

महामहिमशालिनः साहित्यसम्प्रदायाचार्यस्य कविकुलगुरोः श्रीनृसिंहशास्त्रिणो द्वितीयायां भार्यायां लब्धजन्मान इमे बाल्य एव स्वप्रतिभाप्रकर्षेण पित्रोः स्वजनस्य च बाढमाकर्षन्ति स्म हृदयम्। यथाकालमुपनीताः साङ्गां कृष्णयजुःशाखां सम्यगधीतवन्तः। ततः पितुरेव कोशकाव्याद्यधीत्य तदानीन्तनमहावैयाकरणश्रीयागेश्वरपण्डितेभ्यः कौमुदीं पठितुमारभन्त। ततः परं बालसरस्वतीतिप्रथितश्रीबालशास्त्रिचरणेभ्यो व्याकरणे टीकाग्रन्थान् महाभाष्यं धर्मशास्त्रं पूर्वोत्तरमीमांसे च सम्यगधीत्य पितुरनुग्रहेण साहित्यदर्शनाकूपारपारीणतां जगाहिरे। सुललित-गद्यपद्यनिर्माणे शब्दार्थपाण्डित्ये च तदानीन्तनपण्डितकविमण्डलेऽनितरसाधारणमास्पदमासीच्छ्री-गुरुवराणाम्। श्रीमद्भिर्गुरुवरैः साहित्यदर्शने सर्वोत्तमां परीक्षां सम्यगुत्तीर्य पाठशालीयाङ्ग्लो-संस्कृतविभागे समधीत्य आङ्ग्लभाषाज्ञानमपि सम्यगासादितम्। अथ कियन्तं चित् कालं स्वगृह

एवं छात्रानध्यापयन्तः प्राचीनग्रन्थसंशोधनप्रकाशनादिकार्याणि कुर्वाणाः श्रीगुरुवराः सुखं कालमत्यवाहयन्।

ई० सन् १८८८ वर्षे काशिकराजकीयमहाविद्यालये साहित्यदर्शनाध्यापकपदे तेषां नियुक्तिर्जाता। चतुस्त्रिंशद्वर्षाणि तै राजकीयकार्यं कृतम्। ई० सन् १९२२ वर्षे पदं परित्यज्य गृहीतोऽवकाशः। चतुस्त्रिंशद्वर्षात्मके निजाधिकारकाले गुरुवरैर्बहवश्छात्रा अध्यापिताः पाण्डित्यं लम्भिता अद्यापि तेषु तेषूच्चैःपदेषु वर्तमानास्ते गुरुवराणां यशोगौरवं प्रथयन्ति।

इदानीं कैलासवासिनः महामहोपाध्यायवैयाकरणकेसरिदामोदरशास्त्रिभारद्वाजमहोदयानां ज्येष्ठतनया व्याकरणसाहित्याचार्याः श्रीगङ्गाधरशास्त्रिभारद्वाजमहोदया अपि श्रीगुरुवराणां विशेषानुग्रहशालिनः शिष्या आसन्।

नेपालप्रान्तीया महाकवयः श्रीकुलचन्द्रगौतमशर्माणोऽपि श्रीगुरुवराणां विशिष्टशिष्येष्वग्रगण्या एव विराजन्ते। प्रकृतलेखलेखकोऽपि सानुजः श्रीगुरुवरैराबाल्यादनुगृहीतः शिष्य एव।

श्रीगुरुवरैर्विजयनगरग्रन्थमालायां, चौखंबासंस्कृतग्रन्थमालायां, बनारससंस्कृतसिरीज़्नाम्न्यां ग्रन्थमालायां च बहवो ग्रन्थाः संशोध्य टिप्पणीभूमिकादिभिः परिष्कृत्य प्रकाशिताः सन्ति। यैः श्रीगुरुवराणां सर्वतोमुखं पाण्डित्यमभिव्यक्तं भवति। श्रीवेङ्कटाध्वरिकृतस्य लक्ष्मीसहस्रस्य अवतरणिकारूपा टीकाऽपि गुरुवरैर्निर्मिता चौखंबासंस्कृतग्रन्थमालायां प्रकाशिताऽस्ति।

सूक्तिसुधानामिकायां संस्कृतमासिकपत्रिकायां श्रीगुरुवराणां बहूनि काव्यानि, बहूनि स्तोत्राणि, षड्ऋतुविलासाः, शिवाश्वघाटी, श्रीगीतिरत्नं चेत्यादीनि काव्यानि प्रकाशितानि सन्ति। अद्य यावदुपलब्धेष्वश्वघाटीकाव्येषु गुरुवराणां शिवाश्वघाटीकाव्यं परमोत्तमं तत्तादृशसर्वकाव्यातिशाय्यस्तीति तद्विदामनुभव एवात्र प्रमाणम्। षड्ऋतुविलासेषु मधुररचनां वैदर्भीरीतिं कल्पनापाटवं च निरीक्ष्य को नाम सचेताः श्रीगुरुवरान् स्वसमयकालिदासान्न मन्येत? श्रीगीतिरत्नादिकाव्येषु समनुभूयमानं शब्दार्थपाण्डित्यं नैषधकविमपि विस्मारयति।

नैषधीयचरितपाठनं तु श्रीगुरुवराणां सर्वतः प्रथितमासीत्। अस्माकं नैषधपाठावसरे प्रायः पाठशालीयाः सर्वेऽपि च्छात्रास्तत्र समागच्छन्ति स्म। श्रीगुरुवरैर्न केवलं वयं पाठिता एव, अपि त्वन्यत्र दुर्लभं सदाचारं, विनयम्, औचित्यविचारं च लम्भिताः। राजकीयाधिकारिवर्गे गुरुवराणां महती प्रतिष्ठाऽऽसीत्। काशिकराजकीयमहाविद्यालयप्रधानाध्यक्षचरो डॉक्टर ए० वेनिस सी० आई० ई० महोदयो गुरुवरान् सखिनिर्विशेषं मन्यते स्म। इत्थं प्रसृते गुरुवराणां सुयशःसुगन्धे प्रयागविश्वविद्यालयप्रधानसभायां 'फेलो ऑफ़् दि युनिवर्सिटी'-पदे गुरुवराणां नियुक्तिरभूत्। कतिपयवर्षाणि तदपि कार्य्यं गुरुवरैः साधु सम्पादितम्। विश्वविद्यालयपरीक्षासु एम० ए० पर्यन्तं परीक्षकत्वेन नियुक्तिस्तु गुरुवराणां बहुवारं जाता।

भारतधर्ममहामण्डलस्य तदानीन्तनसभापतिमहाराजकाशिराज श्री प्रभुनारायणसिंहमहोदयैः सादरं "साहित्यसुधाकर"पदव्या सम्माविता गुरवः। तदनन्तरं सम्राट्प्रतिनिधिना विशिष्टपण्डि-

तेतरदुरवापां 'महामहोपाध्याय'पदवीं प्रदाय सविशेषं संमानिताः श्रीगुरवः। ई० सन् १९२२ वर्षे श्रीगुरुवरैः पाठशालीयकार्यादवकाशो गृहीतः।

ततः परं त्यक्तसर्वैषणा द्रव्यस्पर्शमपि परिहरन्तः श्रीगुरुवरा आदेहपातं मुनिवृत्त्यैवाऽवर्तन्त। काश्यामितरत्र वा पण्डिता बहवः सन्ति, किन्तु स्वाधीतशास्त्रसंस्कारसंस्कृतान्तःकरणास्तथाविधाचारशालिनस्तेषु कियन्तः सन्तीति न तिरोहितं चक्षुष्मताम्। श्रीगुरुवराणां सदाचारदार्ढ्यं, नियमपालनदार्ढ्यं, तपोमयं जीवनं, नूनमनन्यतुल्यमेवासीत्। दुर्भाग्याद्यौवन एव पत्नीपुत्रादिवियोगमनुभूय समुद्भूतवैराग्यवशात्ततःप्रभृत्यादेहपातं मुनिवृत्तिरेवाङ्गीकृता गुरुवरैः। देहपातसमये तेषां शान्तिमात्मनिष्ठां च प्रत्यक्षमनुभूय तेषां ब्रह्मनिष्ठत्वे वयं निरस्तसंशयाः स्मः।

श्रीरामचन्द्रो यथा मर्यादापुरुषोत्तम इति गीयते, तथैवास्माकं गुरुवरा अपि मर्यादापण्डितवरा एवासन्। अत एव मयेत्थमुपश्लोक्यन्ते—

बुधजनमर्यादायाः कलिबलकलुषीकृतायास्तु।
रक्षाकृतेऽवतीर्णं श्रीरामं सद्गुरूत्तमं वन्दे॥

राजकीयकार्यादवकाशग्रहणानन्तरं त्रीणि वर्षाण्यतीत्य चतुःषष्टिपञ्चषष्टिमिते वयसि पाञ्चभौतिकं देहं परित्यज्य शिवत्वमापुः श्रीगुरुवरा इति शिवम्।

---

## पं० श्रीकेशवशास्त्री मराठे महामहोपाध्यायाः

लेखकः—पं० अनन्तशास्त्री फडके

अस्ति खलु श्रीमता भगवता रेणुकापुत्रेण परशुरामेण रत्नाकराद् बलाद् वशीकृता बहुरत्नप्रसवा कोङ्कणभूः। यां न परित्यजति कदापि विदुषामारामो रामो जामदग्न्यः। तत्र च वसिष्ठप्रमुखगोत्रा गोत्राधारभूता इव ब्रह्मवेत्तारो ब्राह्मणाः प्रतिवसन्ति। तत्र कपिगोत्रिणः तपस्विनः साक्षाद्वेदराशय इव भरेऽपि ( मृत्युलोकेऽपि ) देववत्स्थिताः 'मराठे' इत्यन्वर्थोपनामकाः सचेतसां चेतःपावकाः पावका इव तेजस्विनः चित्तपावनसंज्ञका आसन्। तत्र च केचन गङ्गातरङ्गभङ्गरञ्जितां दुःखत्रयकण्टकनिवारिकामपि त्रिकण्टकविराजितां सकलशरीरेण भगवत्या गौर्या भूषितामपि गौरीमुखां मङ्गलभूतामपि महाश्मशानां हरप्रियां प्रियां वाराणसीमागत्य न्यूषुः।

तत्कुलसंभूता एव सकलवेदनिष्णाता धिषणाधरीकृतबृहस्पतयः पतयो ब्राह्मणानां बालंभट्टाः केशवशास्त्रिजनकाः। एतेभ्य एव केशवशास्त्रिणां नेत्रखनन्दभूमिते वैक्रमेऽब्दे (१९०२)

जनिः समजनि। बालंभट्टैः ब्रह्मवर्चसा शान्तिप्रमुखैर्विप्रधर्मैश्च संस्कृतं केशवशास्त्रिणं वेदादिकं काव्यं च पाठयित्वा सकलविद्वच्छरण्ये श्रीराजारामशास्त्रिचरणे समर्प्य अशरणशरणाद्रमारमण-रमणीयचरणारममाणादुमाजानेः शारीरत्यागमूल्येनान्यत्र दुर्लभा मुक्तिः समक्रायि।

अथ च केशवशास्त्री श्रीराजारामशास्त्रिणश्चरणौ समुपास्य ब्रह्मभूयं गतेषु तेषु सरस्वत्य-वतारभूतश्रीबालशास्त्रिणां सकाशाच्च शब्दादीनि शास्त्राण्यधीत्य विशेषतः आङ्ग्लभाषायां गणिते वेदान्तशास्त्रादिषु भूरि परिश्रमं विधाय वारं वारं सममानि मान्यैः शान्तब्रह्मेत्युपदया। प्रायो वयसस्त्रिंशत्तमे वर्षे राजकीयमहाविद्यालये आङ्ग्लभागे प्रविश्यानेकान्विषयान्पाठयन् तदनन्तरं तत्रैव संस्कृतविभागेऽनेकशास्त्राण्यपीपठत्।

तदात्वे त्वेतेन श्रीभट्टमोक्षमूलरमहोदयानामृग्वेदप्रकाशनकर्मणि व्यापृतानां सहायकभूतस्य प्रिन्सिपल डा० थिबो महोदयस्य शुल्वसूत्र-वेदान्तसूत्र-पञ्चसिद्धान्तिकादिग्रन्थभाषान्तरप्रसिद्धतम-विदुषो विशेषं तत्तत्कर्मणि साहाय्यमकारि। स्मरति च महोदयः स स्वीये ग्रन्थे केशवशास्त्रिणम्। एतदीयकार्येण सन्तुष्टान्तःकरणेन तदानींतनसम्राट्प्रधानप्रतिनिधिना नन्दरसनिधिभूमिते (१९६९) वैक्रमाब्दे महामहोपाध्यायपदव्यायं भूषितः।

आत्मसोपानप्रभृतीननेकग्रन्थान्निर्माय बहून् संशोध्य च नेत्ररसनन्दभूमिते (१९६२) वैक्रमाब्दे राजकार्यादवकाशं गृहीत्वा स्वगृहेऽनेकान् शिष्यान् पाठयन् वाङ्मनसागोचरं वेदान्तैक-वेद्यमात्मतत्त्वं शास्त्रतः संदृश्य तदनुमननेन तदेव संवितर्क्यैकतानया धिया तदेव निदिध्यासन् भगवन्तमुमारमणं सकललोकैकशरणमात्यन्तिक्या भक्त्या साक्षाद् व्यवहारे च पश्यन् लोकैः प्रदत्तां शान्तब्रह्मपदवीं सफलयन् श्रीविश्वेशतन्वां सप्ताश्वनन्दभूमिते (१९७७) वैक्रमवर्षे आश्विनशुद्ध-पौर्णिमायां निलिलाय।

एतैर्निर्मिता मुद्रिता इमे ग्रन्थाः—

(१) आत्मसोपानं वेदान्तविषयकमपूर्वं ग्रन्थरत्नम्।
(२) शनिमाहात्म्यम् संस्कृते निबद्धम्।
(३) बर्क्लेज़् फ़िलासफ़ी संज्ञकग्रन्थस्यानुवादः।
(४) स्नेहपूर्तिपरीक्षा।

अमुद्रिता बहवस्तल्लिखिता इति ज्ञायते।

—

# पं० श्रीमोहनलालोदासीनाः

## वेदान्ताद्याचार्याः साधवः

लेखकः—पं० अनन्तशास्त्री फड़के

महामनाः श्रीमोहनलालमहोदयः पञ्चनदजनपदेषु गुरुदासपुरनामकमण्डलस्थडेहारा (बाबानानका) इत्याख्याविख्यातेऽधिष्ठाने प्रसिद्धतमभक्तप्रवरालङ्कृतप्रसिद्धभक्तनानकवंशे खत्री (क्षत्रिय) कुले त्रयोदशपुरुषरूपेण समुत्पद्य स्वीयजन्मना भारतमिदं वर्षं मण्डयामास। जन्मप्रभृत्येव गानानेकवाद्यवादनकुशलोऽपि भोग्यपदार्थेषु विरक्तो यथार्थयन्नुदासीनपदवीं पदवीं पदवीं ग्रामं ग्रामं नगरं नगरञ्च परिभ्रमन् हरिभजनं गायन् तत्र तत्र तीर्थेषु भगवत्तत्वं परिशीलयन् परमपवित्रां वाराणसीं श्रीशिवाधिष्ठितामध्यतिष्ठत्।

तत्र च पण्डितवरेण्यान् सकलशास्त्रावगाहनधिषणान् राममिश्रशास्त्रिचरणान् समासाद्याल्पेनैवानेहसा वेदान्तसाङ्ख्ययोगादिशास्त्रग्रन्थानधीत्य काशिकराजकीयविद्यालयेऽनेकाः सर्वश्रेष्ठाः परीक्षाः प्रदायायमनेका आचार्यपदवीः समाससाद। तदनु चाङ्गलभागे प्रविश्य तद्भाषाज्ञानं तत्रत्यभौतिकज्ञानं चात्मसाचक्रे। ततश्च श्रीगुरुचरणानुशासनं माल्यमिव शिरसि वहन् प्राणैषीदनेकान्निबन्धान्। भारताभ्युत्थानकाङ्क्षिभिः श्रीस्वामिदयानन्दमहोदयैः सहानेकवारं विवदते स्म। तदा च सकलजनप्रार्थनमनु जग्रन्थ महामोहविद्रावणं नाम ग्रन्थम्। एकदा तु पक्षमात्रायातेन यातनाभरेणामयेनाक्रान्तो विलक्षणकष्टदायिन्यामपि तस्यां स्थितौ स्वानुभवोद्रेकं नाम ग्रन्थरत्नमेकं निर्ममे। अहो महात्मनां शोकः श्लोक इव रोगग्रन्थिरपि ग्रन्थग्रन्थिः सञ्जायते। ततश्च गच्छति काले पाठशालाध्यक्ष डॉ० थिबोमहोदयप्रेरणया समुत्सुकान्तःकरणैः श्रीराममिश्रशास्त्रिचरणैः प्रेरितोऽयं बुद्धिमद्वरो मोहनलालमहोदयः खण्डनखण्डखाद्यं नूतनया स्वनिर्मितया गर्तप्रदेशिन्या नाम टीकयाऽटीकत। एवमनेकान्ग्रन्थान् निर्माय निजेन ब्रह्मवर्चसानवरतविद्यासेवयाऽलौकिकस्य तत्त्वंपदवेद्यस्य परमात्मनः पदं सर्वदा सर्वत्र संदृश्य संश्रुत्य संमन्य निदिध्यास्यापरोक्षमनुभूय च सार्वकालिकीं दिङ्मुखं धवलयन्तीं कीर्तिमवशेष्य व्यजहादसारमिमं भूलोकम्।

एतेन निर्मिता ग्रन्थाः—

(१) दोषदूषकतामूलनिर्णयः, संस्कृतभाषामयः।
(२) महामोहविद्रावणम् ,,
(३) वेदान्तसिद्धान्तादर्शः ,,
(४) खण्डनगर्तप्रदेशिनी ,,
(५) वृत्तिप्रभाकरानुवादः (पद्यैः संपादितः) ,,

( ६ ) स्वानुभवोद्रेकः संस्कृतभाषामयः

( ७ ) शिल्पचमत्कार-चिन्तामणिः हिन्दीभाषामयः

( ८ ) प्रतिविम्बचित्रचिन्तामणिः „

इत्थमनेकेऽपि ।

——

# पण्डित नित्यानन्दपन्तपर्वतोयाः

## महामहोपाध्यायाः

( लेखकः—पं० अनन्तशास्त्री फडके )

निखिलपण्डितमण्डलीमण्डनायमानानां श्रीनित्यानन्दपन्तमहोदयानां पूर्वजा विविधपण्डितजन्मभूकूर्माचलमौलिललामभूत-'अल्मोडा'मण्डलान्तर्गत-'तिलाडी'संज्ञकग्रामे न्यवसन्। तेषु ख्यातनामानौ नीलाम्बरपन्तमहोदयाः प्रकृतचरित्रनायकस्य प्रपितामहाः काशीवासमिच्छन्तो गौरीरमणाचरणावरणादन्वर्थनामधेयवरणानदीनिकटे वासमकुर्वन्। निखिलशास्त्रनिष्णातानामेषां सन्न्यादिकेशव इव त्रिलोचनपन्तेत्यपरनामधेया आदिकेशवपन्ता जनिं लेभिरे। तेभ्योऽपि भक्तप्रवरनामदेव इव नामदेवपन्ताः स्वजन्मना सुकुलं संभूषयामासुः। एते एव नित्यानन्दपन्तमहोदयस्य पितृचरणाः। गङ्गातरङ्गभङ्गरञ्जितायामस्यां वाराणस्यां निवसताममीषां सद्मनि पूर्वपुण्यपुञ्जफलोदयेनेव नित्यमानन्दं वितरतोऽस्य नित्यानन्दमहोदयस्य जनिः समजनि।

बाल्यात्प्रभृति रोगग्रस्तकलेवरोऽप्येष ब्रह्मवर्चसाभिलाषुकेण पित्रा पण्डितवरेण श्रीनामदेवपन्तमहोदयेन महता समारोहेण सम्पाद्योपनयनमयं च स्वीयवाजसनेयशाखासंहितां प्रपाठ्य महामहोपाध्यायपदसम्भूषकानां सी० आई० ई० पदवीभृतां श्रीगङ्गाधराणामिव शास्त्रगङ्गाधराणां श्रीगङ्गाधरशास्त्रिणां सविधे व्याकरणादिशास्त्राध्ययनार्थं सम्प्रैषि। तत्र चानेन महोदयेन साकं व्याकरणेन न्याय-मीमांसा-वेदान्त-धर्मशास्त्रप्रभृतीनि शास्त्राणि तथाऽऽलोडितानि यथाऽऽमृत्यु मुखसरोजे तानि सर्वदा नरीनृत्यन्ते स्म। वयस एकोनविंशतितमेऽब्दे गुणयुगनिधिभूभूषिते वैक्रमीये(१९४३)-ऽब्दे महता गौरवेण व्याकरणाचार्यादिपदवीं प्राप्नोत्। तदानीमेव संस्थापिते हिन्दुकालेजसंज्ञकपाठालये बाणेष्वङ्कभूमितविक्रमाब्दे ( १९५५ ) संस्कृताध्यापकपदमलञ्चकार।

ततो गच्छति काले तत्रत्यं कार्यं सुचारु सम्पाद्य पुत्रकलत्रनाशाज्जातवैराग्यः सेवाकार्यं तृणाय मत्वा तत्तत्याज। परन्तु गृहागतेभ्यः शास्त्रं याचमानेभ्यश्छात्रेभ्योऽहोरात्रं सर्वशास्त्राणि

महतानन्देनादत्त। भारतभूसम्राट्प्रतिनिधयश्चास्य महोदयस्यानेकगुणग्रामं श्रावं श्रावमाकृष्टचेतसा महामहोपाध्यायोपाधिना परमविरक्तं त्यागशीलमप्येनं हठात् (१६७८) वस्वश्वनिधिभूमिते वैक्रमेऽब्दे बबन्धुः।

सर्वदावेदान्तचिन्तनपरो देशदेशान्तरागतधर्मशास्त्रशास्त्रार्थनिर्णयपरायणो महाशयोऽयं भुव ईशे विरक्तोऽपि विश्वेषामीशे रक्तस्त्यक्तजनेशसेवाकार्योऽपि स्वीकृतजनेशकार्यस्त्यक्तवित्तोऽपि स्वीकृतवित्तपूज्यचरणः स्वीयं जराभरजर्जरितं रोगग्रस्तं कुत्सितकायं तुर्याश्रमेण पवित्रीकृत्य तस्मिन्नेव दिने वस्वष्टाङ्कभूसम्मिते (१६८८) वैक्रमाब्द आश्विनकृष्णाष्टम्यां मन्दवासरेऽधिकाशि मणिकर्णिकाघट्टसमीपे स्वीयेष्टदेवतामनुं जपन् सारस्वतधामाश्रयोऽयमुमारमणचरणसरोजमन्तर्हृदि ध्यायं ध्यायं करालकलिकालकलङ्कितममुं लोकं साकं कलेवरेण तत्याज।

एतैर्निर्मिताः केचन ग्रन्थाः—

(१) संस्कारदीपकः—माध्यन्दिनशाखाध्यायिनां कृते सकलसंस्कारबोधकः सर्वाङ्गसुन्दरः सर्वशास्त्रार्थमन्त्रार्थयुतोऽपूर्वो ग्रन्थः। १६७४ वैक्रमाब्दे निर्मितः।

(२) परिशिष्टदीपकः—तच्छाखिनामवशिष्टकर्मबोधको विशिष्टो ग्रन्थः १६७६ वैक्रमाब्दे निर्मितः।

(३) कातीयेष्टिदीपकः—कातीयशाखिनां कृते निर्मित इष्टिविषयबोधको ग्रन्थः।

(४) वर्षकृत्यदीपकः—तथैव यावद्वर्षे कर्तव्यानां कृत्यानां निर्णायको ग्रन्थः।

(५) परमलघुमञ्जूषाटिप्पणम्।

(६) जैमिनीयसूत्रवृत्तिटिप्पणम्।

(७) लघुशब्देन्दुशेखरदीपकः—येन सर्वमपि वैयाकरणकुलमधमर्णं जातम्।

---

## श्रीपण्डितोऽम्बिकादत्तव्यासः

(सुकवि-साहित्याचार्य-घटिकाशतक-विहारभूषण-भारतभास्कर-भारतरत्नेत्युपाध्यलङ्कृतः)

लेखकः—पं० अनन्तशास्त्री फडके

जयपुर-प्रान्तान्तर्गते भानपुराभिधे ग्रामे श्रीदुर्गादत्ताभिधो गौडब्राह्मणो दत्तकवीत्यपरनामा प्रतिवसति स्म। तस्यैवापत्यं सारस्वतधामाश्रयोऽपरबाण इव अम्बिकादत्तो नाम। अस्य (१६१५) भूतभूनिधिभूमिते वैक्रमे संवत्सरे चैत्रशुक्लाष्टम्यां जनिः समजनि। पिता चास्या-

परस्मिन्वत्सरे वत्समेनं शशाङ्कमौलिसमाश्रितगङ्गातरङ्गभङ्गरञ्जितायामस्यां वाराणस्यामानीयाध्यापयितुमारेभे। तत्प्रयत्नेन चायमपरित्यक्तबालभावोऽपि संस्कृतभाषया भाषितुं प्रभुर्बभूव। वयसो द्वादश एव वर्षेऽतितरां प्रसिद्धस्य भारतेन्दुमहाशयस्य गृहे महाशयोऽम्बिकादत्तः सरस्वतीयन्त्रं सरसमधुरैः पद्यैस्तथा वर्णयामास यथा तत्कालमेव सन्तुष्टान्तःकरणास्तत्रत्या विद्वांसः सुकवीत्युपाधिनैनं संभूषयांचक्रुः। वयसस्त्रयोदशे वर्षे संजातोऽस्य तदातनरीत्यनुसारेण पाणिग्रहः। न्याये साहित्ये चास्य क्रमशो गुरवो वाजपेयिपण्डितश्रीकुञ्जीलालाः, पण्डितश्रीताराचरणतर्करत्नाश्च। अयं युगगुणनिधिभूमिते (१९३४) वैक्रमेऽब्दे काश्मीरमहीपालप्रतिष्ठापितविद्यामन्दिरतो व्यासपदवीं संपादयामास। वाजिगुणनिधिभूमिते (१९३७) श्रीविक्रमीये वर्षे महता माहात्म्येन सह साहित्याचार्येत्युपाधिं समुपार्जितवान्। गच्छतात्पेनैव कालेन चास्य तथाविधं काव्यनिर्माणे नैपुण्यं संजातं यथा वाराणसेयश्रीब्रह्मामृतवर्षिण्या सभया घटिकायां शतश्लोकनिर्माणकौशलं दृष्ट्वा नितान्तं प्रमुदितया सरूप्यकपदयुतो घटिकाशतकेत्युपाधिः प्रादायि।

खयुगनिधिभूभूषिते(१९४०) भूपतिविक्रमदेवाब्दे मधुवनीसंस्कृतविद्यालयाध्यक्षपदं प्रतिपेदे। तदात्वे त्वनेन तत्र विहारसंस्कृतसंजीवनं नाम समाजो निरमायि। गुणयुगनिधिभूमिते वत्सरे (१९४३) मुजफ्फ़रपुरनगरविद्यालये प्रधानपण्डितपदमलञ्चकार। तदनु युगयुग्मनन्दभूमिते वर्षे (१९४४) भागलपुरनगरविद्यालये पण्डितपदं मण्डयामास। तस्मिन्नेव काल इन्द्रप्रस्थपुरे प्रथमवारमधिविशता भारतधर्ममहामण्डलेन विहारभूषणेत्युपाधिना मथुरायां संमिलितेन तेन भारतभास्करेत्युपाधिना चायमलमकारि। अनन्तरं च छपरानगरविद्यालये संस्कृतपण्डितपदं गौरवान्वितं चकार। प्रादायि चास्मै श्रीबालकृष्णलालगोस्वामिना काश्यां समाहूय समारम्भेण महता भारतरत्नेत्युपाधिः।

अथ गच्छताऽनेहसा शरीरस्य शीर्णत्वात्संस्कृतसमाजस्य दौर्भाग्यात् नियतेरवश्यं भावित्वाद्यत्साधु तदचिरविनाशीति नियमस्य जागरूकत्वाच्चार्शआदिभिरनेकैरामयैर्ग्रस्तो राहुग्रस्त इन्दुरिवायं सारस्वतेन्दुरम्बिकादत्तः श्रीमान् वयसो द्विचत्वारिंशद्वर्षे कार्तिककृष्णद्वादश्यां वाजिभूतनिधिभूमिते (१९५७) वैक्रमाब्दे द्वादशवर्षदेशीयं राधाकान्तं नाम कान्तं कुमारं परित्यज्य दुःखसागरे नूतनमधुमधुरपद्यास्वादनचणान् चतुरान् जनान् निमज्य च काश्यामुमारमणरमणीयचरणसरोजं ध्यायं ध्यायं विससर्ज स्वीयं कायम्।

अनेनानेके ग्रन्था भिन्नभिन्नभाषामयाः भिन्नभिन्नविषयकाश्च निर्ममिरे।

(१) साङ्ख्यसागरसुधा—साङ्ख्यशास्त्रस्य संक्षेपतस्तत्त्वावबोधको गद्यमयः सर्वसुन्दरः संस्कृतग्रन्थः।

(२) रत्नाष्टकम्—हास्यरसप्रधानो नीतिमयीभिः कथाभिः संग्रथितः संस्कृतभाषाप्रबन्धः।

(३) सहस्रनामरामायणम्—सरलसंस्कृतभाषामयपद्यैः संग्रथितः क्रमेण रामायणार्थबोधको ग्रन्थः।

(४) शिवराजविजयः—वीरशिरोमणिं श्रीशिववीरमवलम्ब्य रचितः सर्वाङ्गसुन्दरोऽपरो बाणभट्टरचितकादम्बरीवानुप्रासादिशब्दालङ्कारोपमोत्प्रेक्षाद्यर्थालङ्कारप्रचुरः संस्कृतभाषामयो गद्यमयो हृद्यश्चेतश्चमत्कारकारी महान् प्रबन्धः।

(५) शुद्धाशुद्धिप्रदर्शनम्—संस्कृतज्ञानां लेखनभाषणविषये चात्यन्तोपयुक्तः संस्कृतवाक्यपद्यांशमयो ग्रन्थः।

(६) दशावतारमीमांसा—अवतारविषयकः सर्वाङ्गसुन्दरो हिन्दीभाषामयो ग्रन्थः।

(७) मूर्तिपूजा—मूर्तिपूजायाः प्रामाण्यादिप्रतिपादको हिन्दीभाषया वङ्गभाषया च ग्रथितो ग्रन्थः।

(८) बिहारिबिहारः—व्रजभाषामयः श्रीकृष्णचरित्रादिवर्णनपरो महानिबन्धः।

(९) गद्यकाव्यमीमांसा—हिन्दीभाषायां लिखितो गद्यलक्षणादिप्रतिपादको ग्रन्थः।

(१०) प्रस्तारदीपकम्—बाल्य एव प्रणीतः प्रस्तारविषयको ग्रन्थः।

(११) गणेशशतकम्—अयमपि बाल्ये प्रणीतो गणेशशतश्लोकयुतो ग्रन्थः।

(१२) शिवविवाहः—तथैव प्रणीतः श्रीशिवविवाहविषयप्रतिपादको ग्रन्थः।

अतोऽपि सन्त्यनेके ग्रन्थाः।

---

# पण्डितलक्ष्मणशास्त्रिणो द्राविडाः

( धर्मप्राणाः, संत्यक्तमहामहोपाध्यायोपाधिकाः )

लेखकः—पं० अनन्तशास्त्री फडके

को न जानाति नाम सचेता विद्विडपि विद्वान् धर्मार्थे प्राणानपि त्यक्तवतां परमपवित्रलोकोत्तरविचित्रचरित्राणां विदुषां वर्णाश्रमस्वराज्यसङ्घाद्यनेकसंस्थाः संस्थापितवतां श्रीलश्रीलक्ष्मणशास्त्रिमहोदयानाम्। येषां खलु पूर्वे जाता ब्राह्मवर्चस्का ब्राह्मणा मद्रदेशान्तर्गतकुम्भघोणसमीपवर्तिनि त्रिशिनिल्लूग्रामे न्यूषुः। तत्र च घनादिकठिनतमयजुर्वेदादिविकृतिपाठेन घनपाठीतिनाम्ना ख्यातानां स्वीयं सर्वस्वं गृहवस्त्रपात्रं सत्पात्राय प्रदाय श्रीविश्वेशचरणसरोजभृङ्गायमाणानां काश्यामागत्यायाचितवृत्त्या वृत्तिं वर्तयतां परमभगवद्भक्तानां सद्मनि भूगुणानन्दभूमिते श्रीवैक्रमाब्दे (संवत् १९३१) चैत्रशुद्धद्वादश्यां श्रीलक्ष्मणशास्त्रिणो जनिः समजनि।

वयसश्चतुर्दशवर्षपर्यन्तं स्वीयपितृचरणात्कृष्णयजुर्वेदाध्ययनं श्रीगुरुनाथभट्टसकाशाद्वेदाध्ययनं च विधाय श्रीपंडितकृष्णशास्त्रिसकाशे कोशसाहित्यशास्त्रमध्यैत। तदनु महामहोपाध्यायस्य दरभङ्गानरेशसद्गुरोः श्रीसुब्रह्मण्यशास्त्रिणः सौभाग्यकाङ्क्षिणीं पुत्रीं परिणीय श्रीसुब्रह्मण्यशास्त्रिकृपात एव वेदान्तसाङ्ख्यशास्त्रतत्त्वमात्मसाचक्रे। महामहोपाध्यायपण्डितश्रीकैलाशचन्द्रशिरोमणिभट्टाचार्यमहोदयेभ्यो न्यायशास्त्रमधीत्य काशिकराजकीयपाठशालीयां कलिकातानगरस्थां च सर्वश्रेष्ठोपाधिपरीक्षां प्रददे। तदात्वे तु काशीनरेशप्रदत्तामेकरूप्यकादारभ्य क्रमवृद्ध्या वृद्धामेकादशरूप्यकपरिमितां वृत्तिं लब्ध्वा स्वीयकुटुम्बं महता कष्टेनापि भगवद्भजनजपरमानन्देन पुपोष।

ततश्च वयस एकविंशतितमे वर्षे १९०२ ईशवीये रणवीरपाठशालायामध्यापकपदमुपाददे। तत्र च महत्या योग्यतया यावद्दशवर्षाणि कार्यं निरुवाह। ततश्च जस्टिस् सर आशुतोषमुकर्जिमहोदयेन महताऽऽग्रहेणाहूय सादरं तस्मै श्रीलक्ष्मणशास्त्रिणे प्राध्यापकपदं प्रादायि। महामहोपाध्यायपदवीप्रदानकालेऽधिकारिकृतजिज्ञासायामाशुतोषमुकर्जिमहोदयेनेत्थमुदलेखि—'एतेषामियं प्राथमिकी योग्यता, यदेतैः कदाप्येकाक्षरेणापि महामहोपाध्यायपदवीप्रार्थनया मदीयः कर्णो नास्पर्शि।' प्राय ईशवीयेऽब्दे १९२६ कलिकातानगरस्थराजकीयपाठशालाप्राध्यापकपदं सत्सु मुकर्जिमहोदयानामत्याग्रहेष्वपि परितत्याज। आगत्य च श्रीविश्वेशचरणसरोजपरागपूतां काशीं न्युवास। शारदाक्कानूनविरोधप्रदर्शनाय महामहोपाध्यायपदवीं परित्यज्यानेकानेकसंस्था धार्मिककार्यपरम्पराप्रचालनाय निर्माय कार्याणि च संपाद्य ज्येष्ठकृष्णचतुर्थ्यां १९८७ वैक्रमाब्दे तत्परिश्रमजर्जरं जरापाण्डुरं परोपकाररतं परमपवित्रं कायं धवलं गङ्गाजलमिव श्रीविश्वेश्वरचरणे समर्प्य तज्जटास्थमन्दाकिनीजलमिव तन्निरये शरीरेऽन्तर्दधे।

एतैः संपादितकार्याणि—

शिवकुमारभवनम्—कलिकातानगरे सार्धशतच्छात्राणां दरिद्राणां कृते भोजननिवासाच्छादनग्रन्थाध्ययनप्रदायकं सद्म। यत्पञ्चाशत्सहस्ररूप्यकाणां जनतात एकत्रीकृतानां व्ययेन शास्त्रिचरणैर्निर्मितम्।

साङ्गवेदविद्यालयः—काश्यां सकलवेदशास्त्राध्यापनपूर्वकं विशिष्टविदुषां विशिष्टपरीक्षास्थानम्। यत्र परीक्षितेभ्यो विशिष्टेभ्यः शिष्टेभ्यो यावज्जन्म प्रतिवर्षं रूप्यकशतं प्रदीयते।

ब्राह्मणमहासम्मेलनम्—अभूतपूर्वं विशिष्टमेतदधिवेशनम्। यत्र भारतवर्षीयसकलधर्माचार्या भारतीयाः सर्वे विद्वांसः सम्भूय धर्मविषयकाननेकान्निर्णयान् निरमापयन्।

ब्राह्मणमहासम्मेलनम्—हिन्दीभाषायां साप्ताहिकं संस्कृतभाषायां मासिकं च पत्रम्।

वर्णाश्रमस्वराज्यसंघः—वर्णाश्रमपूर्वकं स्वराज्यप्राप्त्यर्थे यतमानो जनसङ्घः।

एवं बहून्यनेकानि कार्याणि विद्यन्ते।

---

# पण्डितपञ्चाननतर्करत्नाः

( संत्यक्तमहामहोपाध्यायपदवीकाः )

लेखकः—पं० अनन्तशास्त्री फडके

सर्वथा स्वधर्माचरणचणो विद्वन्मूर्धन्यः पञ्चानन इव विद्येशानः पञ्चाननतर्करत्नमहोदयः स्वेन जनुषा वङ्गदेशनिवासिनां तपस्विनां पण्डितमण्डलमण्डनायमानानां विद्यारत्नमहोदयानां शुक्लं कुलं शुक्लं पत्तं चन्द्र इवालञ्चकार। बाल्य एव श्रीहर्ष इव कवितारचनायां महत्या प्रतिभया तत्परोऽयं तत्रत्यैः सन्तुष्टान्तःकरणैर्जनैरस्य बुद्धिप्रभाचमत्कृतैः काव्यकण्ठोपाधिनोपदधे। प्राप्तविद्यापठनवयस्केनानेन कतिचिद्वर्षाणि यावद्राजकीयविद्यालये पठित्वा महामहोपाध्यायपण्डितवर-राखालदासन्यायरत्नमहोदयतो न्यायशास्त्रं पठित्वा न्यायाचार्यपरीक्षा प्रादायि। तथा पण्डित-मध्यमणिमधुसूदनस्मृतिरत्नमहोदयतो धर्मशास्त्रं महामहोपाध्यायपण्डिततारानाथकायमानताराचरण-तर्करत्नमहाशयेभ्यो वेदान्तशास्त्रं चापाठि। ततश्च वङ्गवासिमुद्रणालये सर्वाणि पुराणानि महाभारतं, रामायणञ्च महता प्रयत्नेन संशोध्य संप्रकाश्य मन्वादिस्मृतयो वङ्गभाषयानूद्य प्रकाशयांचक्रिरे।

पण्डितोऽयं धर्मस्य देशस्य च विरोधिनः कार्यस्य नाशाय कटिं संनह्य विदेशिवस्त्रबहिष्कार-प्रभृति कार्यं प्रचारयामास। तदैव 'नेशनल-कौन्सिल ऑफ़ एज्युकेशन'समितिमन्यैः सहातिष्ठिपत्। अनेकेष्वान्दोलनेष्वनेन प्रचालितेषु विनापराधं तत्रत्या अधिकारिणः कारागृहवासदण्डेनैतं दण्ड-यामासुः। तत्रापि स्वीयधार्मिकनियमपरिपालनाय हठाग्रहेण स्वीयां सन्नियमाचरणपरायणतां प्रकाशयामास। धार्मिककार्यप्रचाराय ब्राह्मणमहासम्मेलन-वर्णाश्रमस्वराज्यसङ्घप्रभृतीनि कार्याणि कुर्वन् शारदानियमप्रतिषेधप्रदर्शनाय महामहोपाध्यायपदवीमत्याक्षीत्।

एवं धार्मिककार्ये देशकार्ये च कुर्वन्नयं शक्तिमतो विश्वेशस्य चरणे रतोऽपि जगदम्बाशक्तिं मुख्यां मन्यमानः स्वीयं सिद्धान्तं व्याससूत्रोपरि शक्तिभाष्यं संविरच्यादीदृशत्। मृत्युशय्यां शयानोऽपि विष्णुविक्रमसंज्ञकं काव्यं निर्माय स्वीयां निर्मलां तपःपवित्रितां बुद्धिं प्रचकासांचकार।

अन्ते च सशक्तिकं विश्वेशचरणसरोजं स्मारं स्मारं जराजर्जरितं स्वीयं देहं वैक्रमे हायने १६६६ मुचि क्षेत्रेऽस्मिन् व्यसृजत् ।

एतेन संरचिता ग्रन्थाः—

(१) अमरमङ्गलम्—संस्कृतकाव्यम् ।

(२) शक्तिभाष्यम्—व्याससूत्रभाष्यम् ।

(३) विष्णुविक्रमकाव्यम्—काव्यम् ।

अन्ये च बहवः सन्ति ।

---

## महामहोपाध्याय श्रीमुरलीधर-झा

(ई० सन् १६०६–१६२७ पर्यन्तं कार्यकालः)

लेखकः—पं० अनूपमिश्रः

अयं किल दरभङ्गामण्डलान्तर्गत-श्यामसिद्धप-नामग्रामे वैयाकरणपञ्चाननचाननझा-शर्ममहोदयात्मजः १८६८तमखीस्ताब्दे लब्धजन्मा शैशवदशायामावश्यकशाब्दानुशासनाध्ययनपुरस्सरं निजपितृव्यचरणश्रीविद्यानाथझाशर्मगुरोः सामान्यतः सिद्धान्तप्रधानत्रिस्कन्धबद्धां गम्भीरबुद्धिवेद्यां दैवविद्यामधीत्यापि समधिकतात्त्विकज्ञानासिलिप्सया विशेषतोऽधिकाशि विकाशितदिगन्तकीर्त्तिराशि-ज्योतिर्गणितमर्मवेदि-बार्हस्पत्यादिमतभेदि-महामहोपाध्यायश्रीसुधाकरद्विवेदिनोऽधिगन्तुमद्यतननूतनपाश्चात्यगणितकलाकलापं समाससादान्तर्निविष्टगुरुपदान्तिकं १८८५तमे खीस्ताब्दे ।

तत इहैव वाराणसेयराजकीयसंस्कृतमहाविद्यालयेऽधीयानो यथासमयं ज्यौतिषाचार्यपरीक्षायां समुत्तीर्णः प्रथमत्वेनासादितवान् यथानियमं रिपनगवर्नरनिरूपितं तद्वैशिष्ट्यबोधकं सुवर्णपदकं राजकीयम् । पाश्चात्यगणितविद्या राजभाषागतेति गुरोराज्ञया चावश्यकत्वेनाङ्गलभाषामप्यलमधीतवानत्रत्यादेव आंग्लो-संस्कृतविभागतः । एवमिहाल्पकालेनैव नैजश्रद्धाभक्तिविनयविद्याबुद्धिबलेन द्विवेदिगुरुवरप्रियशिष्याणामन्यतमः समधिगताभिलाषजातः सञ्जातः । एतस्य हि ज्यौतिषातिरिक्तेष्वपि व्याकरणकाव्यसाहित्येषु प्रवीणतां पुरातत्त्वान्वेषणप्रक्रियासु विचित्रप्रतिभां चातीव प्रशंसनार्हामवलोक्य यथाभ्यस्तास्तंगतप्रायप्राचीनग्रन्थरत्नोद्धरणकर्मणि प्रिययोग्यशिष्यस्यास्य साहाय्यमावश्यकममानि गुरुणा, तदनुसारमप्यनेकशो ग्रन्थरत्नानि सुसम्पादितानि ।

यदा च द्विवेदिमहोदयैर्यज्ञकालज्ञानोपयुक्तस्य वैदिकसिद्धान्तप्रतिपादनक्षमस्य पुरातन-सोमाकरकृताशुद्धभाष्यसंवलितस्य वेदाङ्गज्यौतिषस्योपरि 'छोटेलाल-बार्हस्पत्य'नाम्ना केनचित् 'हिन्दुस्तान-रिव्यू'संज्ञकमासिकपत्रे (सप्ताधिकैकोनविंशतिशततमेशवीयाब्दस्य मार्चमासीये) प्रकाशितस्याङ्गलभाषामयस्य बहुत्र सिद्धान्तमर्यादाबहिर्भूतस्य भाष्यस्य मिथोऽसामञ्जस्यमालोचयद्भिः कृतं यथार्थसिद्धान्तानुसारि तत्त्वानुसन्धानप्रक्रियासमुपबृंहितोपयुक्तपरिवर्त्तितपद्यजातमनुसरत्सुजनम-नोरञ्जनं वस्तुतः सुधासागरापरपर्यायं सुधाकरं नाम भाष्यमुत भाष्यकृन्नामविशिष्टं वा, तदा तदानीन्तनैः परोत्कर्षासहिष्णुभिर्जातामर्षैरितस्ततो वृथा प्रलपद्भिः कतिपयैस्तदनुयायिभिः कृताक्षेप-मक्षोभं निष्पन्नतया समीक्ष्य क्षन्तुमक्षमोऽपि गुरुवराक्षेपक्षतिं क्षान्तिपरायणः सन्नयमेव तद्विपक्षिपक्ष-क्षयरोगशान्तिकामो रामबाणोपमां 'बार्हस्पत्यचिकित्सा'मुद्भाव्य सुधाकरभाष्यस्याशयप्रकाशकं लघुविवरणं परिवर्त्तितपाठस्य समुपयुक्तत्वप्रतिपादिकामाङ्गलभाषामयीं Appendix संज्ञिकां सूचीं च निर्ममे, यस्यायमादिमः श्लोकोऽवतरणरूपः—

"श्रीमद्द्विवेदिगुरुवर्यपदारविन्दसञ्चिन्तनस्फुरितबोधलवः करोति।
झोपाख्यचाननसुतो मुरलीधरोऽस्य भाष्यस्य तद्विवरणं लघु संशयघ्नम्॥"

अथैवं गच्छति काले गृहीतावकाशस्य चिरस्थायिरोगाक्रान्तस्य द्वितीयाध्यापकस्य श्रीमतो दीनानाथमिश्रमहोदयस्य पदे वर्षचतुष्टयं यावदितः पुराप्यस्थायिरूपेणाध्यापकत्वं गतोऽप्युत्तरोत्तर-समेधमानविशिष्टयोग्यतातिशयतो गुरोरान्तरिकाशीर्वादबलेन च राजनियमानुसारं १६०६ तमेशवीयवर्षारम्भ एव (१—१—६) स्थायिरूपेण काशीस्थराजकीयसंस्कृतमहाविद्यालयस्य ज्यौतिषाध्यापकपदे नियुक्तो जातो नवीननियमानुसारं वर्धितवेतनवतामयमेव प्रथमोऽध्यापकः।

योऽयमध्यापनकार्यकलास्वपि विशेषप्रतिभाशाली निरन्तराध्ययनाध्यापननिरतो व्यर्थ-विवादविरतोऽपूर्वो ज्यौतिषिकः स्वाध्यापनकालीनान् परःशतांश्छात्रान् सविशेषमध्याप्य सुपरिष्कृत-संस्कृतसाहित्यव्युत्पत्तिशून्यताकलङ्कपङ्कशङ्कितां चिरदिनादङ्गुल्या निर्देशितां ज्यौतिषितां समूलमुन्मूलयितुमादर्शरूपान् सर्वांशिकयोग्यताविशिष्टान् प्रियशिष्यान् सम्पादयामास। ये चाधुनाऽधिभारतं प्रथितयशसो निजपितृकुलक्रमागतामिव गुरुपरम्परामुद्दीपयन्तो दिक्षु विदिक्षु च विराजमाना दृश्यन्ते।

एवमेतेन स्वनाम्ना स्वतन्त्रग्रन्थनिर्माणकरणस्यावसरो नाधिगतः संयोगतः। किन्तु बीजगणित-सरलत्रिकोणमिति-सिद्धान्ततत्त्वविवेक-ग्रन्थानामुपरि दुरूहविषयाशयद्योतका बहुमूल्या-श्टिप्पण्योऽपि च ग्रन्थान्ते तत्तद्विषयगाम्भीर्यमुद्बोधयत्तन्निदानभूतस्वप्रक्षिप्तनवीनगणितसरणि-परिचयनिचयोज्जृम्भितमतिचमत्कृतिपरिशिष्टमरचि, यदाधारतोऽद्यतनानामनधीताङ्गलगवीनामन्ते-वासिनामनुपमोपकारः समजनि। तथा परम्परातो भ्रष्टीभूतस्य यथार्थनामधेयस्याद्भुतसागरस्य, तन्त्रविषयात्मनः पुरश्चर्यार्णवस्य, बृहत्संहितायाश्चोद्धारोऽप्येतत्कृत एव महता परिश्रमेण। बहुधा प्राचीनग्रन्थरत्नोद्धरणपरायणे काशीस्थ'प्राभाकरी'यन्त्रालये मुद्रितानां ग्रन्थानामयमेव

सम्पादकः संशोधकश्चासीद्विषयान्तरीयाणामपि। अत एव सिद्धान्तसम्बन्धिसमुपयुक्तविशेष-प्रतिपादनक्षमतया यथा 'विशेष'-पदेन द्विवेदिगुरुस्तथैव तद्विशेषोक्तविषयजातविशदीकरण-मेवन्तद्विवरणनिरूपणामामरणमस्यासाधारणमाचरणमतिरोहितमिति 'विशेषशरण'पदेनायमपि व्यपदिश्यते।

आदौ हिन्दीभाषायां मिथिलाभाषायां च समानैवाभिरुचिः काव्यकरणस्यासीत्। किञ्च तत्परमहितैषिभिः श्रीदीनानाथमिश्रमहोदयैरनुमोदितस्तदानीन्तनैर्मिथिलेशमहाराजैः सहसा समुप-स्थिते मिथिलाभाषासमुन्नतिसम्बन्धिवार्त्तालापे सोत्साहं तदनुशासन-समुत्साहन-संरक्षण-साहा-य्यमाकलय्य स्वसम्पादकत्वे 'मिथिलामोद'संज्ञकमासिकपत्रं सञ्चालयामास। यत्र प्रतिमासं तद्देशीय-धार्मिकसामाजिकमातृभाषोद्धारादिविविधविषयकप्रभावशालिलेखविशेषैस्तदीयैरेव नवीनोऽयं जागरो मिथिलाभाषायाः काशीकालिकातादिविश्वविद्यालयेषु पाठ्यत्वेनापि परिगृहीताया एतस्यैव सदु-द्योगपरिणामभूतोऽनुमन्यते।

एवमयं लौकिकामोदप्रमोदी गानवाद्यरहस्यवेदी हास्यरसविनोदी महानासीत्। ये केचनान्ता रुदन्तो गूढचिन्ताचितारूढाः सन्तोऽप्यस्य क्षणमपि सान्निध्यमधिगतास्तेऽवश्यमस्य प्रभूतामृतमय-चञ्चद्वचःपयोनिचयसेचनापचितचपलचेतस्तापा विगतशापा इवान्तर्लसन्तो द्विषन्तोऽपि हसन्तो निवर्त्तिताः किमुतान्ते वसन्तः। दिवङ्गतद्विवेदिगुरुवदस्यापि शिरसि मांसवृद्धिकल्पोऽङ्कुरितसिंहो-पमो नु वस्तुतः सामुद्रिकशास्त्रसम्मतपुरुषसिंहत्वसूचकविलक्षणलक्षणलक्षितो व्रणविशेषाकार आविर्भूतो यत्प्रसङ्गे केनचित् 'भवच्छिरसि किमिदमभूतपूर्वमापतित'मिति पृष्टस्तत्क्षणमिदमुत्तरं ददौ 'गुरुणा यत्परित्यक्तं शिरसाधारि तन्मया'इत्यादिप्रासङ्गिकाविलम्बस्फूर्तिमत्त्वं सहजस्वभावसिद्ध-मिवालक्षितमभितोऽनेकवारमवसरोपयुक्तं तदीयम्।

एवमभितः प्रसृतख्यातिना १६२२ ईशवीयाब्दे महामहोपाध्यायपदवी च समधिगता। स्वयं द्विवेदिगुरुर्जानकीजाने रामचन्द्रस्यातीव भक्त आसीत्, रामचन्द्रस्य हि महावीर इव स्वगुरो-रयमेवानन्यो हार्दिकः प्रियशिष्यस्तेन 'देवो भूत्वा देवं यजे'दिति तन्त्रनिदेशानुसारेण तस्मिन्ने-वापूर्वमाहात्म्यवति श्रीमति बलवति हनुमति मनोवाक्कायजनितामलौकिकश्रद्धामनिशाराधनचिन्तन-परिशुद्धामतिशयां विस्तारयामास। संस्थापयामास च स्वदेशे गृहासन्नवर्त्तिनो नष्टविस्तृततडागस्य बहुव्ययसाध्यमुद्धारं विधाय तत्रैकमतिसुन्दरं मन्दिरं निर्माय महावीरस्य विशालां दिव्यमूर्त्तिम्। सम्प्रति तत्रत्यां पूजार्च्चनादिकालीनां नेपालमहाराजभक्तिप्रदत्तातिगुरुतरमहाघण्टारवाञ्चितां शोभामवलोक्य सधन्यवादमस्य कीर्त्तिवादो गीयते।

गतानुगतिके क्षणभङ्गुरेऽस्मिँल्लोके नैकोऽपि जनः सौभाग्यसर्वांशपरिपूरितः सन्दृश्यते, तथायमपि सन्ततिसत्तासमीक्षणेन तदङ्गविकलप्राय एव। यथा हि प्रजातानां पञ्चापत्यानां पुत्रद्वयं त-ज्जीवनकाल एव, कन्याद्वयञ्चैतद्वर्षान्तरेव दुर्दैवेन कवलितम्, केवलमेक एव लघुतमश्चिरञ्जीविश्री-श्यामानन्दनामातिविनीतो भविष्णुः सम्प्रति २० वर्षवयस्कः 'इण्टर'कक्षायां द्वितीयवर्षे परीक्षत्व-

काम इति जगन्नियन्तारं धातारं प्रार्थये यदिमं सफलाभिलाषं दीर्घायुषं च विदध्यात्। एकोऽपरः खल्वस्याग्रजमातृपुत्रोऽधुनाधृतपरिवारद्वयभारो बाल्यकालादनेनैव लालितः पालितो राजविद्यां पाठितश्चैतर्हि ४५ वर्षवयस्कः सम्ययुवकः श्रीमदुपेन्द्रनाथझामहोदयः ( M. A., L-L. B. ) परमसुशीलः पञ्चषवर्षादिहैव श्रीश्यामासंस्कृतमहाविद्यालयस्य प्रधानाध्यक्षपदे नियुक्तः स्वपितृव्य-चरणविशेषशरणगुणगौरवमुन्नयन्नयं स्वशिरस्समारोपितकार्यजातं सविनयं साधु सञ्चालयति। तथैतन्द्वाद्रपदे श्रीश्यामानन्दस्य प्रथमात्मजस्तत्पौत्रोऽपि लब्धावतारो यश्चेशकृपया मात्रङ्कमुल्लास-यन्दीर्घायुः स्वामिसन्ततिविरहमलिनां निजजनकजननीमनुरञ्जयिष्यति।

एवमेकविंशतिवर्षमितेऽतीते स्थायिकार्यकाले तत्कालीनवयोऽनुमानादाश्चर्यकारिशारीरिक-मानसिकक्षमतासत्त्वेऽपि व्यावहारिकपञ्चपञ्चाशद्वर्षवयसि पूर्णे पूर्णावकाशग्रहणस्यानिवार्य-तया १६२७तमेशवीयाब्दे ( १६-७-२७ ) महाविद्यालयादवकाशं सोल्लासं गृहीतवान्। ततःप्रभृति जगदुदासीनः काश्यामेव वसन्ननवरतमेकमात्रविश्वनाथचरणशरणस्तीर्थराजत्वेन प्रयागस्य दुराग्रहधियाऽऽहूत इवातर्कित एव तत्र सपरिवारं सत्वरं गत्वा १६२६तमेशवी-याब्दस्य तज्जीवनेतिहासावसानकारिकायां षष्ठतारिकायां तत्रैव महायोगीव क्षणेन ज्ञानपुरस्सरं 'शवसंस्कारः काश्यामेव कार्य' इत्युपदिश्य पाञ्चभौतिकमनित्यशरीरमपहाय दिवं ययौ। किञ्च तस्य यथादेशं सशवसंस्कारमौर्ध्वदैहिकक्रियादिकमिहैव मणिकर्णिकायां तद्धर्मपत्न्या श्रीमत्या रामेश्वरीदेव्या सश्रद्धं सम्पादितमित्थं मिथो विवदमानयोरपि काशीप्रयागयोर्द्वयोरविकलफलभागयम्—

"विद्यया भास्करः साक्षात्क्षमया करुणाकरः।
कलाधरः समुन्नत्या संज्ञया मुरलीधरः॥"

---

## प्रातःस्मरणीया महामहोपाध्याय श्रीवामाचरणभट्टाचार्याः

( कार्यकालः ई० १६०८–१६३१ )

लेखकः—पं० श्रीराजेश्वरशास्त्री द्राविडः

येषां पण्डितप्रकाण्डानां स्वीयपवित्रचरित्रेण राजकीयसंस्कृतमहाविद्यालयस्य चरित्रं चित्रितं तानन्तरेण विद्यालयस्य किमिव प्रस्तोतव्यं सचेता विभावयेत्? तेषामेव सन्तोषघनं तदीयगौरवं, तेषामेव विद्वत्ता तदीयविद्यालयता, तेषामेव च चरित्रं तदीयादर्शचित्रमिति तानन्तरेण नो विद्यालय इति न किञ्चिदवशिष्यते। किं नामावशिष्टा इष्टका विद्यालय इति?

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।

को हि विद्वांसं विज्ञाय वर्णयेत् ? वर्णितं वा यथावद्विजानीयात्साधारणः ? न हि रत्नानि रत्नपरीक्षाविचक्षणमृते कश्चित्परिचिनुयात् । गुणिनां गुणग्राहकाणां च घस्मरे सम्प्रतिकाले सर्वमेतत्स्वप्न इव ।

राजकीयसंस्कृतमहाविद्यालयस्यालङ्कारभूतेषु पण्डितप्रकाण्डेष्वस्मद्गुरवः स्वनामधन्याः प्रातःस्मरणीयचरणाः श्रीमन्तो म० म० पं० वामाचरणभट्टाचार्यमहोदया अकनिष्ठां कोटिमाटीकन्ते । तद्भसितोद्भासितमष्टमीचन्द्रनिभं विशालं भालतलं, स्फटिकमयीवासमन्ताद् गौरी दक्षिणामूर्तिरिव तर्कमुद्रामुद्रिता प्रसन्नगम्भीरा मूर्तिः, निरावरणमेवान्वीक्षिकीयं तेजो, विद्यालये मूर्तिमन्न्यायशास्त्रमिव सर्वं गौरवं पदं बभूव । अहो !, स कालः क्वाऽपि नो गतः !!

को न्वीशीत गुरुवरसदृशानधिगतपरमार्थान् बहुवित्तमान् ऋते कुटुम्बमिव विद्यालयमाश्रित्यापि विद्यानन्दं सन्तोषधनं च स्वीयमक्षुण्णं व्यवस्थापयितुम् ?

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

इत्येवं वर्णितेषु मध्ये श्रीगुरुवराणां प्रतिबिम्बं सर्वदाऽस्मत्प्रतीतिपथमवतरति ।

"गुरवो बहवः सन्ति शिष्यवित्तापहारकाः" इत्युक्तदिशा कनकमृगतृष्णान्धितधियां गुरूणां स्वपुत्रानप्यांग्लभाषाध्ययनाय समर्पयतां तर्ककण्ठीरवाणां प्रचारबहुलेऽस्मिन्काले, "गुरवो दुर्लभास्त्वत्र शिष्यहृत्तापहारकाः" इत्युक्तदिशा निजसर्वस्वमपि छात्रेषु विनियोज्य विद्याध्यापनपरा अस्मद्गुरुवरा इवास्मद्गुरुवरा एवास्माभिरुपलब्धाः ।

तत्समये विद्यमानेषु काशीस्थेषु नैयायिकेषु गुरुवरान्परिचर्यैव सर्वे स्वात्मानं परिपूर्णममंसत । एतादृशं लोकोत्तराह्लादप्रधानमुपदेशकौशलं दधतां गुरुवराणां सदा चरणस्मरणमपि शास्त्रमर्मभेदनाय सुपर्याप्तमभूदित्यान्वीक्षिक्यां लोकोत्तरत्वं गुरुवराणां सहृदयसंवेदनीयमासीत् ।

असारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्सन्तापं हरिनवतमालस्तिरयतु ॥

इति पण्डितराजोक्त्यनुसारेण भ्रमन्तः कति नाम मादृशाश्छात्राः श्रीगुरुवरानाश्रित्य शास्त्राभ्यासेन परिपूर्णां सन्तापशान्तिं नान्वविन्दन्त ? आसीत्तादृशी परमशीतला श्रीगुरुवराणां दृष्टिरेव लोकोत्तरा यस्याः प्रभावः परमकर्कशेऽपि तर्के सकलसन्तापशान्तिरूपेण विद्यार्थिभिरन्वभूयत ।

सुजनशिरोमणौ स्वानुजे समर्पणमात्रप्रयोजनार्जना गुरुवरा आसन् । संस्कृतमहाविद्यालयात्प्रत्यावर्त्तनार्थमपि प्रत्यहमावश्यकं चतुष्पणकमपि न चिन्तया स्वायत्तीकृत्य समचिचीषन् । स्वानुजैरेव समये चिन्तापूर्वकं समर्प्यमाणे तत्र कार्यान्तरव्यापृतेरनिर्व्यूढे, शरीरमात्रपरिच्छदा इव गुरुवराः सत्यं पादचारमेव यावद् गृहपर्यन्तं कस्यां चिद्वेलायामन्वभवन्, न तु तावदर्थमपि द्रव्यं समचिन्वन्निति सर्वेषां नः प्रत्यक्षमेतत्त्रिभुवनहेतवेऽपि गुरुवराणां मनः शास्त्रोपासनादकुण्ठस्मृत्ये वाभूदिति ।

नानाशास्त्रार्थनिष्पन्ना मतिः स्याच्छ्रुतधारिणी ।<br>
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः ।<br>
वर्ण्यते चित्तसन्तोषाद्विदग्धव्यवहारतः ॥

इत्युक्तदिशा सम्पूर्णसंशयच्छेदनेन, शिष्येषु निरुपाधिकृपाकटाक्षवीक्षणेन, परमेण चित्तसन्तोषेण विद्यानन्दप्रभवेण, पण्डितमण्डलीषु लोकोत्तरमाविष्कृतं यत्किमपि वाचामगोचरं गुरुवरैः ।

साङ्गवेदविद्यालयीयगणेशोत्सवीयशास्त्रार्थसभासु पूर्णतया समवेतयापि तार्किकपरिषदा असंभावितोत्पत्तीनपि संशयप्रश्नान्सर्वस्याः परिषदोऽपि दुरुत्तरणीयानाविष्कृत्य समुच्छिन्दद्भिर्गुरुवरैर्नैकवारमाविष्कृता संशयच्छेदनवैदग्धीति के न जानन्ति ?

शिष्येषु कृपाकटाक्षनिरीक्षणमपि—

मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।<br>
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥

इत्युक्तदिशा अविच्छिन्नप्रवाहमेव सर्वदाऽभूद् गुरुवराणाम् । उपाध्यायजनसहभूः शिष्यजनदुःशीलता परमविदग्धेन चाणक्येन कार्याभियोगे कदाचिदाविष्कृता स्यान्न पुनरस्मद्गुरुवरैः । अस्मद्गुरूणां मन्युविकृतमाननं सम्भूयाऽपि वयं स्वप्नेऽपि न स्मरामः इत्यद्भुतैव शान्तिरनुभूता तेषु ।

पूर्वप्रचलितां सरणिं तदानीं प्राधान्येन समुद्वहतः संस्कृतमहाविद्यालयस्य निरङ्कुशसंस्थान्तरस्वाधीनीकरणवार्तामुपश्रुत्यैव गुरुवराः किल विद्यानन्दनिमग्ना अभूतपूर्वां व्यथामन्वभवन् । प्रविज्ञातवन्तश्च तत्कालमेव विद्यालयाश्रयत्यागम् । केवलया यदीययाऽशान्त्या प्रक्षुब्धहृदयेन तदानीन्तनेन काशीराजेन श्रीप्रभुनारायणसिंहमहाराजेन सुदृढं प्रयत्य राजकीयसंस्कृतमहाविद्यालयस्य तस्मात्सङ्कटात्समुद्धरणमकारीति गुरुवराणां विद्याया ऐकान्तिकोपासकत्वमपूर्वं तत्र चित्तसन्तोषं विदग्धव्यवहारं चैतद् गमयति ।

प्रसिद्धा चाजातशत्रुता गुरुवराणां यत एव परमगुरुश्रीकैलासचन्द्रशिरोमणीनामनन्तरं काश्यां सर्वपण्डितेषु माध्यस्थ्यतुलासंरक्षणं गुरुवरानेवाशिश्राय । सर्वेऽपि पक्षोपपक्षा गुरुवराणां माध्यस्थ्यतुलया धृताः समाधीयन्ते स्म ।

स्वप्नेऽपि गुरुवराणां स्मरणमद्यापि दुरूहप्रश्नानामुत्तराण्युद्भिनत्तीति बहूनां तदीय-शिष्याणां संवादः ।

नहि गुरुवराणां सर्वतो वर्णनं कृत्वा सुसमाप्यमित्येव वर्णनं सर्वतो भवेदिति वयं प्रतीमः ।

तेषामग्निहोत्रित्वं, योगप्रक्रियासु चाभियोगविशेषः, भक्तिशास्त्रेषु च प्राकृतग्रन्थपर्यन्तेषु सादरता, सार्वजनिकेषु धर्महितेषु देशहितेषु च ब्राह्मणमहासम्मेलनवर्णाश्रमस्वराज्यसंघप्रभृतिषु कार्येषु विशेषतोऽधिष्ठातृत्वं चेत्यादि कियदिव न वर्णनार्हम् !

तदनेन प्रसङ्गेन गुरुवराणां गुणगौरवं संस्मार्य वयमुपकृताः स्म इति ।

---

# पं० श्रीरामभवनोपाध्यायाः

( ई० सन् १९०८—१९३३ पर्यन्तं कार्यकालः )

प्रेषकः—पं० त्रिभुवनप्रसादोपाध्यायः

अथ प्रस्तूयते किञ्चित्—

श्री पं० श्रीरामभवनोपाध्यायशर्मणो द्वाविंशत्यधिकैकोनविंशतिशततमे विक्रमवत्सरे आश्विन-शुक्लषष्ठ्यां प्रातः कन्यालग्ने जन्मसम्बन्धः। अतः पूर्वं कतिपयानां भ्रातॄणां गतासुतया पितृपितामहाभ्यां मातामहकुले वासोऽनुमतीकृतः, तत एव कारणाद् अक्षरारम्भः षट्सप्तवर्षानन्तरं जातः। ततः पितामहसविधेऽमरकोषादिकतिपयविषयाणां पाठमात्रेणाऽर्थरहिताभ्यासेन कालो यापितः। ततश्च सारस्वतव्याकरण-पूर्वार्धं सतद्धितं, लघुकौमुदी च तद्धितान्ता साध्वधीता। तदनन्तरमेकोनचत्वारिंशदधिकैकोनविंशतिशततमे विक्रमवत्सरे आषाढमासीयद्वितीयायां सिद्धान्त-कौमुदी अध्येतुमुपक्रान्ता। एकचत्वारिंशदधिकैकोनविंशतिशततमे विक्रमवत्सरे च द्वितीयवर्षसमाप्तेः प्रागेवोणादितद्धितरहिता स्वरान्ता कौमुदी अधीताऽभ्यस्ता च। तद्धितस्याध्यापनं तदानीन्तनैर-ध्यापकैर्नाङ्गीकृतम्। ततश्च परिभाषेन्दुशेखरः स्वरसंध्यन्ता मनोरमा च देशे तत्तद्गुरुभिरध्यापिता। द्विचत्वारिंशदधिकैकोनविंशतिशततमे विक्रमवत्सरे च मार्गशीर्षे कतिपयैः सहाध्यायिभिः सह

श्रीमदन्नपूर्णाविश्वनाथयोः सन्निधौ अध्येतुं प्रस्थानं कृतम्। यत्र च काशिकराजकीयप्रधान-संस्कृतविद्यालये सर्वश्रेष्ठस्वर्गीय पं० श्रीशीतलाप्रसादत्रिपाठिमहोदयानामन्तेवासित्वमवाप्य पाणिन्यपरावतारस्वर्गीय म० म० पं० श्रीदामोदरशास्त्रिशर्म्ममहोदयेभ्यः शब्दखण्डसहितं समग्रं व्याकरणमधीतमसकृच्छ्रुतञ्च।

पूर्वोक्तत्रिपाठिमहोदयेभ्योऽधिकरणन्यायमाला काव्यप्रकाशश्चाधीतः। तथा स्वर्गीय-म० म० पं० श्रीकैलाशचन्द्रशिरोमणिभट्टाचार्यमहोदयेभ्यः सम्पूर्णा मुक्तावली माथुरी पञ्चलक्षणी शाकुन्तलं नाटकं सिद्धान्तलक्षणस्य भूयानंशश्चाधीतः। तथा स्वर्गालङ्कार पं० श्रीबेचन-शर्म्मत्रिपाठिमहोदयेभ्यो माघस्य कतिपयसर्गाः सांख्यतत्त्वकौमुदी च समग्राधीता। त्रिचत्वारिंशदधिकैकोनविंशतिशततमविक्रमवत्सरे तत्पाठशालीयनियमानुसारेण सम्पूर्णा मध्यमा परीक्षा दत्ता। यस्याञ्चोणादिस्वरवैदिकप्रक्रियारहिता सम्पूर्णा कौमुदी, सम्पूर्णा मुक्तावली, वाल्मीकीय-रामायणस्य सुन्दरकाण्डं, शाकुन्तलनाटकं, तिथिनिर्णयो, वेदान्तसारः, सांख्यचन्द्रिका, योगचन्द्रिका, लौगाक्षिभास्करः, लीलावत्याः परिकर्माष्टकम्, अनुवादो माघकिरातयोराद्यं सर्गद्वयं सर्गत्रयञ्च, एते विषया नियता आसन्।

तदनन्तरं वर्षद्वयाभ्यन्तरे सम्पूर्णा व्याकरणाचार्यपरीक्षा दत्ता। तदनन्तरं धर्मशास्त्रस्य कतिपयखण्डपरीक्षा दत्ता। एतदन्तरैव बड़ौदाराजधान्यां राजकीयनियमानुसारेण परीक्षा दत्ता पारितोषिकादिकञ्च लब्धम्। तदनन्तरं बलियापत्तने काशीस्थरणवीरसंस्कृतपाठशालायाञ्चाध्यापनं कृतम्। ततोऽष्टाधिकैकोनविंशतिशततमखीष्टशके काशिकराजकीयप्रधानसंस्कृतपाठ-शालायां नियुक्तिर्जाता। एकदिवसोनपञ्चविंशतिवर्षानन्तरं विश्रान्तिर्गृहीता। अत्रैवाध्यापन-काले च मध्ये मध्ये सर्वतन्त्रस्वतन्त्रमहामहोपाध्यायस्वर्गीय पं० श्रीशिवकुमारशास्त्रिशर्ममहोद-येभ्यो वर्द्धमानसहितकुसुमाञ्जलिप्रभृतयो बहवो ग्रन्था अधीताः परिशीलिताश्च। अन्यच्चानुषङ्गिकं कार्यं महदपि लेखितुं नापेक्षितमिति विरम्यते।

---

# त्रिपाठिश्रीदेवनारायणशर्मणां संक्षिप्तचरितम्

लेखकः—पं० रघुनाथशर्मा

अस्ति पितॄणां विस्तृतसंसृतिसिन्धुसन्तरणसेतुः, हेतुः श्वःश्रेयसानाम्, अर्गला नरकद्वारस्य, नराकारैरमरैरधिष्ठिता, स्वसौभाग्योपहसितसुरपुरसौन्दर्या, मगधदेशशेखरीभूता दत्तविपन्नजनाभया गया नाम नगरी। सुखसंपच्चिविततिव्रततिकन्दले यस्या मण्डले सुकृतिजनपदे जनपदे इतराश्चर्य-

तपश्चर्यालंकर्मीणतपस्विकुलाकुलविपुलकूला, शकुन्तरवनिरन्तरदिगन्तरमहीरुहपरिवारिततीरा पुण्यनीरा पुण्यपुण्या तरङ्गिणी प्रवहति। यस्याश्च लोलकल्लोलमालामिलिताः, अरविन्दमकरन्दसुगन्धगन्धिनोऽमन्दमन्दताभृतो मरुतः, अविश्रमपरिश्रमपरिश्रान्तजानपदजनानां स्वेदशीकरनिकरानाचामन्ति। तस्या एव सविधे सकलकलानिधिधवले सद्वृत्तबहलेऽमाये सरयूपारीणत्रिपाठ्यन्ववाये पितामहमहनीयमहा धीरधिषणाधिकृतधिषणो विद्याविद्योतितसदयहृदयः श्रौतस्मार्तकर्मसञ्चयसञ्जातशर्मोर्मिकिर्मीरितो वसुधासुधाशनेशानः अनिशानुध्येयरामचरणः श्रीरामचरणो विपश्चितामपश्चिमो जनुरधत्त।

स्तम्भितजम्भरिपुगुरुप्रभावो महानुभावोऽयं त्रयोविंशत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्देऽभङ्गुरमङ्गलाङ्कुरविकाशपूर्तिभृति मुहूर्ते वशिष्ठमिव हिरण्यगर्भः, शक्तिमिव वशिष्ठः, पराशरमिव शक्तिः, व्यासमिव पराशरः, शुकमिव व्यासः सुतमवापत् उभयान्वयोन्नायकमसमचरितनायकम्। यस्य च गणकगणावेदितं भाविनं विद्यादिगुणसमुदयमवेत्य पिता द्वादशेऽह्नि देवनारायण इत्यन्वर्थं नाम चक्रे। यं च हरिनारायणेत्यपि केचन स्मरन्ति। पित्रोः सकलकुलस्य च मुदमातन्वन् आपञ्चवर्षमेव बालकेलीः परिसमाप्याप्रतिमया प्रतिभया विनयेन च निगमागमवनावन्यवनद्वीपिनः शाकद्वीपिनो द्विजराजकान्तेर्द्विजराजस्य श्रीविश्वेश्वरदत्तविदुषो मानसमाचकर्ष। यः खलु भूपालमौलिमालालालितचरणयुगलस्य विद्यासंभारभासुरबुधकविवरावृतस्य इष्टापूर्तपूरितजनपदसंपादितस्वर्गसर्गस्य 'टेकारी'वसुधासुधांशोर्गुरुरासीत्। तस्यैवान्ते वसन् फणिभाषितभाष्यावध्यशेषं शब्दशास्त्रमल्पीयसैवानेहसाऽवगतवान्। प्रतिदिनमेधमानमेधाविशेषश्च विद्वन्मण्डलीमण्डितामनवरतोच्चार्यमाणगीर्वाणवाणीगुञ्जदतुलप्रतोलिकां प्रयास्यजन्तुपरब्रह्मप्रकाशिकां काशिकामागात्। तत्र च शिवाट्टहासकैलासकाशनीकाशयशोधवलिताखिलधरातलस्य पण्डिताखण्डलस्य समस्तविद्यासंभृतस्वान्तस्य महामहोपाध्यायाद्यनेकविरुदावलीविभूषितस्य कोविदचक्रचक्रवर्तिनः साक्षात् शिवकुमारस्येव शिवकुमारमिश्रस्य, असंख्यसंख्यावत्पूजितपादयुगलस्य वैदुष्यविस्मापितविपश्चित्सार्थस्य वादिनिवहवारणवारणपञ्चाननस्य भारद्वाजवंशमुक्तामणेर्मनीषिव्रजचकोरचन्द्रमसः श्रीदामोदरशास्त्रिणश्च शिष्यतामधिगत्य महीयस्या गुरुवरिवस्यया परिष्काराविष्कारेण च विदुषां मनांसि विस्मितान्यतानीत्। ततश्च मधु मधुप इव सुमनोभ्यः सुमनोभ्यः सांख्यन्यायवेदान्तसाहित्यपारावारपारीणतां सद्यः सम्पाद्यापि लोकप्रगतिगतमतीनां कृतिनामनुरोधमुरीकृत्य सविशेषशेमुषीविकाशविकासितसकलाशावकाशं वादिदृशां कोशीकरणदेशिकं विद्याकुशलकुशेशयशिशिरेतराभीषुमध्यापनामन्दानन्दतुन्दिलं साक्षाद् भवान्यैव वैदुष्यपदे दीक्षितं श्रीभवानीदत्तदीक्षितं शिक्षकमासाद्य काशीस्थराजकीयसंस्कृतमहाविद्यालयाद् व्याकरणाचार्यपदवीविभूषितोऽभूत्।

अथ बुद्धिवैभवसरलीकृतविबुधाचार्यविचार्यकार्यसाहित्यैरनवरतशास्त्रचर्चाचर्चितमतिभिः श्रीमदच्युतशर्मत्रिपाठिप्रभृतिभिः कृतिभिर्विभासितां विशालां काशीस्थसंन्यासिसंस्कृतपाठशालामलमलमकार्षीत्। ततश्च काशिकश्रीचन्द्रमहाविद्यालये सूरिदिवाकरोऽन्तेवासिनिकरकमलाकरेषु

सूक्तिकरप्रकरान् प्रकीर्य षण्मासान् हिन्दूविश्वविद्यालये महाध्यापकपदमलंकृत्य च महामहोपाध्याय-धर्मधुराधौरेयश्रीगङ्गानाथझामहेच्छाध्यक्षतायां वाराणसेयराजकीयसंस्कृतमहाविद्यालये महाध्यापका-ध्वन्यध्वन्य आसीत्।

यद्यपि विद्वदभिवन्दितचरणत्रिपाठिचरणशिष्या दिशि दिशि भारतमभिव्याप्य तिरस्कृतसुधाभुक्तिसूक्तिधाराप्रवरणैः क्षालयन्ति क्ष्मामम्, येषां पृथक् कथनमब्दशतातिपाति, तथापि कतिपयान् प्रख्यातख्यातीन् विद्वदुत्तंसान् कीर्तयामि। अखण्डपाण्डित्यमण्डितमही-मण्डलाः अनेकशतशिष्यरोलम्बनिकुरम्बकरम्बितपादपाथोरुहाः प्रचुरग्रन्थनिबन्धनसमुदयद्यशः-स्तोमसोमविभासितदशदिशः विद्वत्सभापतिसंभापतिशर्मोपाध्याया राज्ञो दानवीरश्रीबलदेवदासबिडला-महोदस्य काशीस्थमहाविद्यालयप्रधानाध्यापकाः त्रिपाठिवर्यशिष्या एव। अप्रतिमप्रतिभातिभासिताः सर्वतोमुखीशेमुषीका जगन्नाथपुर्यां राजकीयमहाविद्यालयप्रधानाध्यापकाः श्रीरामाज्ञापाण्डेयमहोदयाः त्रिपाठिचरणशिष्याः। ग्रन्थग्रन्थिविश्लथनप्राप्तविख्यातयः वेदान्ताधिगतिविशुद्धबुद्धयः पण्डित-प्रवीणा वैयाकरणधुरीणा विद्वन्मनोमोहहिरण्यकशिपुविदारणनृसिंहा नृसिंहत्रिपाठिनो मारवाड़ी-संस्कृतमहाविद्यालयप्रधानाध्यापका एतच्चरणानुरागावर्जितविद्यासंभाराः। व्याकरणसाहित्याचार्याः शास्त्रान्तरसंजातसंबोधाः काशिकराजकीयमहाविद्यालयसाहित्याध्यापकाः श्रीविद्याविलासशुक्लशर्माणो-ऽपि तदीयान्तेवासिनः। सकलशास्त्रव्याख्यातारो व्याकरणार्णवकर्णधारा विद्वत्कुलालंकारा बलिया-नगरस्थजुबिलीसंस्कृतमहाविद्यालये प्रधानव्याकरणपाठकाः श्रीमङ्गलदत्तपाठका अपि त्रिपाठि-चरणानुग्रहावाप्तसमज्ञाः। सूरिसमाजप्रसृतयशःप्रशस्तयो वैयाकरणशिरोमणयः शास्त्रान्तरप्रकटि-तपाटवगृहीतगौरवाः काशिकलोयलकाविद्यालयप्रधानाध्यापका बालेश्वरशर्मोपाध्यायाः त्रिपाठि-महोदयशिष्या एव।

सांप्रतं तु वर्षत्रयात्काशिकराजकीयमहाविद्यालयादवकाशमवाप्यावतारितकार्यसंभा-रभारा अपि 'परोपकरणं कायादसारात्सारमाहरेत्' इति वचनं सार्थयन्तः विदुषां शङ्काल-तातर्ति समाधिकुद्दालकैरुन्मूलयन्तः सततञ्च श्रीकाशिकेशं विश्वेशं स्मरन्तो मनो विनोदयन्ति। अधुनाप्यध्यापने तेषां पुरेव हरिगर्जनं विस्मापयति विदुषः। एवमेव चिरञ्जीवन्तु विद्वत्तारम्भणदृढ-स्तम्भाः साक्षादवतीर्णनारायणविभ्रमधराः श्रीत्रिपाठिदेवनारायणशर्माण इति विश्वेशानादाशासानो विरमामीति शम्। [ विक्रम संवत् १९९८ मार्गी अमा ]

[ हन्त! प्रकृतलेखप्राप्तेः किञ्चिदनन्तरमेव श्रीमतां त्रिपाठिमहोदयानामक्लेशेनैव गङ्गातीरे निधनमभूदिति दौर्भाग्यं विदुषाम्! ]

---

# श्रीमन्तो गङ्गाधरशास्त्रिभारद्वाजमहोदयाः

( ई० सन् १९२२–१९४० पर्यन्तं कार्यकालः )

लेखकः—पं० नारायणशास्त्री खिस्ते

श्रीमन्महामहोपाध्यायवैयाकरणकेसरिश्रीदामोदरशास्त्रिभारद्वाजमहोदयानां ज्येष्ठतनया इमे १९४६ विक्रमशके जनिमलभन्त। आबाल्यादेव विद्यायां लौकिकव्यवहारे च प्रस्फुरत्प्रतिभाप्रकर्षा इमे पितुरधीत्य ई० सन् १९०७ वर्षे व्याकरणमध्यमपरीक्षामुदतीतरन्। ततः परं व्याकरणाचार्यपरीक्षायाः खण्डमेकं समुत्तीर्य पितृचरणनिधनेन दूयमाना अपीमे स्वर्गीयमहामहोपाध्याय गुरुवरश्रीगङ्गाधरशास्त्रिचरणांस्तदनु तदनुजस्वर्गीयमहामहोपाध्याय गुरुवर श्रीरामशास्त्रिचरणांश्च गुरुत्वेन वृत्वा तदन्तिकेऽधीयानाः ई० १९१६ वर्षे साहित्याचार्यपदवीमलभन्त। ततः परं सरस्वतीभवने साधोलालरिसर्चवृत्तिं लभमाना व्याकरणाचार्यपरीक्षायाः पञ्च खण्डानि क्रमादुदतीतरन्।

ई० सन् १९२२ वर्षे म० म० गुरुवरश्रीरामशास्त्रिचरणैरवकाशे गृहीते सति तत्स्थान एव साहित्याध्यापकपदं लेभिरे। अथाध्यापयद्भिरेतैर्बहवश्छात्रा व्याकरणसाहित्याद्याचार्यपदवीं लम्भितास्तत्र तत्र पाठशालास्वध्यापयन्तः स्वगुरोर्यशः प्रख्यापयन्तो विराजन्ते। कुमारसम्भवस्य 'पुंसवनी' नाम्नी टीका एतैर्विरचिता प्रकाशितास्ति। १९९७ वैक्रमे वर्षे ज्वरयकृदाक्रान्ता इमे मासद्वयं कष्टमनुभूय जहुरिमां पाञ्चभौतिकीं तनुं प्रापुश्च शिवसायुज्यम्।

एतेषां निर्भयता, स्पष्टवादिता, कार्येषु सोत्साहता, सुहृज्जनप्रणयिता चेत्यादयोऽमोघा गुणास्तत्सहचराणामस्माकं नित्यपरिचिता एवासन्। प्रकृतलेखलेखकश्च ई० सन् १९०७ प्रभृति एतेषां प्रगाढः सुहृदस्ति। एते च दुर्दैवादल्पायुषोऽभवन्निति महती क्षतिः पण्डितसमाजस्य विशेषतो दाक्षिणात्यवर्गस्याभूत्।

——

# रायबहादुर-प्रमदादासमित्र-महोदयानां संस्मरणम्

लेखकः—पं० नारायणशास्त्री खिस्ते

श्रीमतां रायबहादुर-प्रमदादासमित्रमहोदयानां कुलं तावत् काशीप्रवासिषु वङ्गाभिजनेषु प्रायः प्रथममस्ति। अद्यापि काश्यां चौखंभा-ठठेरीबाज़ारवीथ्यां तेषां महान् प्रासादः, तत्र प्रवेशद्वार एव सशस्त्राणां यामिकानां सङ्घश्च तेषां वैभवं लोकोत्तरां कीर्तिं च प्रथयन्नास्ते।

प्रकृतलेखलेखकेन स्वच्छात्रजीवने बाल्यावस्थायां ते बहुवारं दृष्टाः—स्मरामि प्रायस्तदानीमहं द्वादशवर्षदेशीय आसम्। दरिद्रितां भविष्णूनां ब्राह्मणच्छात्राणां कृते तेषां प्रासादे सामान्यतः प्रत्यहं पर्वसु सविशेषं च आमान्न-वस्त्रादिकं वितीर्यते स्म। मित्रमहोदयनिर्देशानुसारं ते तेऽध्यापकाः स्वकीयान् योग्यांश्छात्रान् स्वदत्तप्रमाणपत्रेण सह तत्र प्रेषयन्ति स्म। इत्थमेव श्रीगुरुवरदत्तप्रमाणपत्रेण सहैकदाऽहमपि तत्र गतः। मित्रमहोदयानां पूजागृहस्य बहिःप्राङ्गणे मादृशा मदपेक्षयाऽधिकवयस्काः पञ्चषाश्छात्राः समवेताः सन्तः 'कदा वा लप्स्यते' इति कोलाहलं कुर्वन्त आसन्।

अहं तु तथाविधान् तानुपेक्ष्य मित्रमहोदयानां पूजागृहद्वारमेव समुपातिष्ठे। मां तत्रोपस्थितं दृष्ट्वा प्रधानपरिचारकस्तत्रागत्य बटुमूर्तिं मां सकौतुकं निरीक्ष्य 'कोऽसि, किं ते कार्यम्' इत्यप्राक्षीत्। मया तस्य हस्ते श्रीगुरुवरदत्तं पत्रं निधाय 'रायबहादुरमहोदयेभ्यो देहि' इत्युक्तम्। तेन चाचिरादेव प्रत्यावर्त्य 'आयाहि, मित्रमहोदयास्त्वामाह्वयन्ति' इत्युक्तम्। रायबहादुर-मित्रमहोदयानां नियम आसीद्यत् पूजाकाले देववाणीं विहाय न भाषान्तरेण भाषितव्यमिति। तदनुसारं तैर्गुरुवरपत्रमनुवाच्य मां सस्मितं निरीक्ष्य पृष्टम् 'किमधीषे' ? मयोक्तम्—'व्याकरणम्'। तदानीमहं कौमुदीमधीयान आसम्। तैरुक्तम्—'तर्हि वैयाकरणोऽसि', मयोक्तम्—'आम्, बुभूषामि'। मित्रमहोदयानां पूजा तदानीं समाप्तैवासीत्—ते मया सह भाषमाणा एव बहिः प्राङ्गणमागताः। अनन्तरं मया काव्यानि कानि कान्यधीतानीत्यादि पृष्ट्वा सविशेषं सन्तुष्टा इव मदीयगृहस्थितिविषयेऽप्यप्राक्षुः। प्रधानपूजकं च निरदीदिशन्—यदस्मै, बटवे प्रथमश्रेणिगतं नैवेद्यं देहीति। सोऽयं तैः सह मम प्रथमभाषणस्यावसरः। ततः परं प्रायश्चतुर्थे पञ्चमेऽहनि मया तेषां प्रासादे ससम्मानं प्रथमश्रेणिगतमेव दानं लभ्यते स्म। अध्ययनोपयुक्तानि पुस्तकान्यप्यनेकानि तैर्मह्यं दत्तानि। प्रायस्तैः सह सर्वदैव संस्कृतेनैव वार्तालापो जातः। तेषां प्रशान्ता गम्भीरा श्यामला चाकृतिरद्यापि मानसपथे स्फुरति।

ते च काशिकराजकीयमहाविद्यालयस्य भूतपूर्वाध्यक्षडॉक्टरबालंटाइनमहोदयानां शिष्या आसन्निति वृद्धमुखेभ्यः श्रूयते। साहित्यदर्पणस्य-आङ्ग्लभाषायां तैरनुवादः कृतः प्रकाशितश्च। तत्र भूमिकायां 'डॉ० बालंटाइनमहोदयैरारम्भात् १२८ पृष्ठपर्यन्तं कृतस्यानुवादस्यैवेदं शेषपूरणं तदुत्तराधिकारिणां विदुषां मम सन्मान्यशिक्षकाणां R. T. H. Griffith M. A. महोदयानां प्रोत्साहनेन मया क्रियते' इत्युक्तमस्ति। सरस्वतीभवनस्थे साहित्यदर्पणाङ्ग्लानुवादपुस्तके च मित्रमहोदयानां स्वहस्तलेखोऽपि वर्तते। तत्र तैरात्मानं आर० टी० एच्० ग्रिफिथ एम्० ए० महोदयस्य कृतज्ञं शिष्यं प्रख्यापयद्भिः १३।२।१८७५ समये पुस्तकार्पणं समुल्लिखितमस्ति।

पाश्चात्यदर्शनैः सह तुलनात्मके पौरस्त्यदर्शनानामध्ययने तेषां विशेषतोऽभिरुचिरासीत्। तैः Vedantic Conception of Brahma नामकः स्वकीयो दार्शनिको निबन्धः

प्राच्यपाश्चात्यदार्शनिकसंवादात्मकप्रणाल्यैव निबद्धः । एवं पण्डितपत्रेऽपि तैर्बहुधा प्रयतितम् ।

काशिकराजकीयमहाविद्यालयेन तदानीन्तनमहाविद्यालयीयपण्डितप्रकाण्डैः श्रीबापूदेवशास्त्रिबालशास्त्रिप्रभृतिभिश्च सह प्रगाढः सौहार्दसम्बन्ध आसीत्तेषाम् ।

तेषामेव प्रोत्साहनेन तेषामेव प्रासादे तात्कालिकानां महाविद्यालयप्रधानविदुषां 'संस्कृत-समाज' नाम्नी सभा स्थापिताऽऽसीत् । ई० सन् १८७५–७६ वत्सरयोः प्रकाशिते पण्डितपत्रे प्रकाशितेषु प्रोक्तसभाविवरणेषु सभाप्रोत्साहकमहाशयत्वेन, क्वचिन्निर्णेतृत्वेन च ससमादरं तेषां नामोल्लेखो दृश्यते ।

महाविद्यालयस्याङ्ग्लोसंस्कृतविभागे चिरकालं तैः सहायकप्राध्यापककार्यं कृतम् । तस्मिन्नेव विभागे मुख्यप्राध्यापकपदेऽपि ( यत्र ग्रिफ़िथ, गफ़, थिबो-प्रभृतिभिः कार्यं कृतम् ) किञ्चित्कालं तैः कार्यं कृतम् । जनश्रुतिर्वर्त्तते, यत्तैः Principal कार्यमपि कंचित् कालं साधु सम्पादितम् ।

महाविद्यालयीयपरीक्षासु साहित्याचार्यपरीक्षायां ते परीक्षका आसन् । एतावता आङ्ग्लभाषापाण्डित्ये सत्यपि साहित्ये दर्शनेऽपि च तेषां विशिष्टा योग्यताऽऽसीदित्यनुमीयते ।

संस्कृतभाषया भाषणे प्रवचने च निरर्गलैवासीत्तेषां प्रभुतेति प्रकृतलेखलेखकेन स्वच्छात्र-जीवनेऽसकृदनुभूतमस्ति ।

काशीस्थप्रधाननागरिकत्वेन वैदुष्यविशेषेण श्रीमत्त्वेन दातृतया च ते सविशेषं राजमान्या आसन् । सम्राट्प्रतिनिधिना च 'रायबहादुर'इत्युपाधिना ते समलङ्कृताः ।

राजपुरुषाणां पुरः संस्कृतविदुषां पक्षस्थापनस्य गौरवसमर्थनस्य च कार्यं तदानीं तदेकायत्तमासीत् ।

——

# अरुर्मघवधः

लेखकः—म० म० पं० सीतारामशास्त्री शेंडे

ऐतरेयब्राह्मण इन्द्रस्यापराधान्निमित्तीकृत्य देवैः सोमपानतो वियोगः कृत इत्युच्यते। तदीया अपराधा अपि तत्र पञ्च परिगणय्य प्रदर्शिताः। तत्रायमेकोऽपराधो यदरुर्मघवधो नाम। तत्र क एतेऽरुर्मघा य इन्द्रेण विनाशिताः, किन्निमित्तमिन्द्रेण तद्वधः, कुतश्च तद्वशात इन्द्रस्यापराध इत्येवमनेके संशयाः प्रादुर्भवन्ति। हित्वैतरेयं ब्राह्मणमन्यत्रैतस्यापराधस्यानुल्लेखो यत एतन्निर्णयकाठिन्यम्। तद्ब्राह्मणभाष्य उक्तापराधविवरणावसरे सायणाचार्यैः कृतव्याख्यानेऽपरसंशयप्रादुर्भावः। तत्र हि तैरुच्यते 'अरुर्मघनामकान्ब्राह्मणवेषधरानसुरानिन्द्रोऽवधीदिति'। तत्र कुत्रत्याः कुत एते ब्राह्मणवेषधारिणोऽसुरा इति संशयसमुत्थितिः। कदाचन भाष्यकृद्भिरत्रासुरत्वं ब्राह्मण्यं च कल्पनया गृहीतं भवेत्। यतोऽरुर्मघवध इन्द्रस्यापराधो ब्राह्मणे प्रोच्यते, इन्द्रश्चासुरहन्ता देवः, असुराणामपि वृत्रादीनां ब्राह्मण्यम्, ब्राह्मणहननमेवापराधो नासुरमात्रवधः, वृत्रादीनां हननमपि ब्राह्मणहननमिति कृत्वैवापराध इति पुराणादिषु वर्ण्यते, तस्मादिमे ब्राह्मणवेषधारिणोऽसुरा एवेति। एतावतापि पूर्वोक्तसंशयानपाकरणमेव।

किञ्चर्ग्वेदे ५-३४-१ इत्यत्रेन्द्रस्याजातशत्रुत्वमुच्यते। एवं सति शत्रूणामभावेन तद्वधोऽपि न वास्तव इन्द्रस्य भवितुमर्हति। अत एव निरुक्तकारो यास्क इन्द्रस्य युद्धवर्णनं न वास्तवं किन्त्वौपमिकमित्याह। ऋङ्मन्त्रेष्वपीन्द्रस्य युद्धवर्णना न वस्तुसती किन्तु काल्पनिकीति स्पष्टमेवोच्यते। "मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से" इत्यादिषु। तत इन्द्रस्याजातशत्रुत्वं स्पष्टमेव साधितं भवति। एवञ्चारुर्मघादीनामभावात्तेषामिन्द्रकृतवधाभावेन तन्निमित्तापराधित्वस्याप्यसम्भव इति। अथोच्येत काल्पनिकमेवारुर्मघवधवर्णनम्। तथा सति कथं तद्वशतः सोमपानवर्जनवर्णनं वास्तवं भवेत्। अथ तस्यापि काल्पनिकत्वम्। किं तर्हि तादृशकल्पननिमित्तम्। दृश्यते हि वेदे सर्वत्र सनिमित्तं कल्पनम्। यथा रुशद्वत्सेति मन्त्रे साहचर्याद्रसहरणाच्च निमित्तादादित्यस्योषःपुत्रत्वं कल्पितम्। अत एव निरुक्तकारः सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वेति उषःपुत्रत्वमादित्ये सनिमित्तं कल्पितमाह। एतेन शतपथब्राह्मणस्य भावार्थविवरणावसरेऽरुर्मघशब्देऽरुशब्दस्यारुशब्दसमानार्थत्वमाश्रित्यारुवध एवारुर्मघवध इत्येकलिङ्गमहोदयोक्तिरप्यपास्ता। उक्तदोषतादवस्थ्यात्। एवञ्चात्यन्तमस्पष्टेऽत्र विषयेऽर्थविवरणाय किञ्चित्प्रयत्यते।

ऋग्वेदे सर्वत्र सूक्तैर्देवतावर्णनमिति सर्वसंप्रतिपन्नम्। देवता चानुक्रमणिकाकारोक्त-प्राचीनमतानुसारेण सूर्यरूपिण्येवेति वैदिकसम्मतम्। तथा चेन्द्रोऽपि सूर्यरूप इत्यविवादम्। सूर्येण च तेजोरूपेण तमसो विनाशो लोकसिद्धः। तेजस्तमसोरसामानाधिकरण्यात्। अत एव तत्र तमसि आवरणादिहेतुभिर्वृत्रादिशब्दद्वाराऽसुरत्वकल्पनया युद्धद्वारेण तद्विनाशं प्रकल्प्य तद्वर्णना वेदे। अत एव युद्धस्य वस्तुसतोऽभावेनेन्द्रस्याजातशत्रुत्वमव्याहतम्। स च सूर्यो नैकविधनिमित्तैरनेकनामभिः स्तूयते वेदे। अत एव "**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान-माहुः॥" "सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।**" इत्यादि-भिर्मन्त्रैर्मित्रवरुणाद्यभिन्नत्वं प्रकारभेदेन चैकस्यैव सतस्तस्य भिन्नत्वकल्पनेति व्यक्तं प्रतिपाद्यते। यदा च भिन्नत्वं कल्पितं तदानीं भेदाधीनव्यवहाराणामपि कल्पितत्वमर्थायातम्। दृश्यते च वेदे बहुशस्तादृशो व्यवहारः। "आत्सूर्यं जनयन्", "अयमकृणोदुषसः", "सूर्यं दिव्यारोहयो दृशे" इत्यादिना इन्द्रस्य सूर्यतो भेदं प्रकल्प्य तेन तस्योत्पत्तिः स्वर्गे समारोहणं दर्शनार्थमित्यादिकं प्रतिपाद्यते। एवं "मुषायश्चक्रं सूर्यस्य", "चक्रमवृहत्सूर्यस्य", "वज्रेणान उषसः संपिपेष", "अपोषा अनसः सरत्संपिष्टादह बिभ्युषी", "उषासमिन्द्र संपिणक्", "स्त्रियं यद् दुर्हणायुवं वधी-र्दुहितरं दिवः" इत्यादिना तद्विनाशकत्वमपि तस्येति प्रतिपाद्यते। तत्रेन्द्रस्य मध्यमस्थानवासि-त्वस्य निघण्टुनिरुक्तकारादिभिर्वर्णनात्, "प्राच्या दिश इन्द्रः पातु", "प्राच्या दिशस्त्वमिन्द्रासि राजे"ति पूर्वस्या दिशो राजत्वस्य इन्द्रे प्रतिपादनात्, "दिवि मे अन्यः पक्षोऽधो अन्यमचीकृषमि" तीन्द्रेण स्वपक्षयोरूर्ध्वाधरभावेन दिवि भुवि वर्णनात्, सरणेन निमित्तेन सूर्यशब्दवाच्यताया निरुक्त-कारवचनात्, सूर्यस्य दिवि समारोहणमिन्द्रकृतमित्यादिवर्णनात्प्राच्या दिशः स्थानं क्रान्तिवृत्तस्य विषुववृत्ते पातबिन्दुर्मेषराशिप्रारम्भीयस्तत्र दृश्य आदित्य इन्द्र इति गृहीत्वा तस्य ततः कदाचनो-त्तरतः कदाचन दक्षिणतो गमनमिन्द्रकारितमिति भेदपक्षे स्वीकारेणोपपद्यते। स च मेषप्रार-म्भीयस्थानदृश्य आदित्यः सुमेरावुदयन्भवेत्। ततः क्रमिकभावेन उत्तरोत्तरमधिकमूर्ध्वीभावेन सरणात्स सूर्यस्तस्य दिवि समारोहणमिन्द्रकारितमिति वर्णनस्योपपत्तिः। अस्तावसरेऽस्तगतस्या-दित्यस्यादर्शनेनादर्शनस्यैतरेयब्राह्मणे "एताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्यो-ऽग्निः...आदित्यो वा अस्तं यन्नग्निमनु प्रविशति सोऽन्तर्धीयते तं न निर्जानन्ती"त्यादिना मरणोक्तेः स आदित्यस्यार्थात्सूर्यस्य विनाश इन्द्रकारित इति इन्द्रेण सूर्यस्य चक्रस्याथवा चक्राभि-न्नस्य सूर्यस्येन्द्रेण मोषो नाशो मरणमिति वर्णनस्योपपत्तिः। यथा सूर्यस्योत्पादविनाशाविन्द्र-कृतावेवमुषसोऽप्युत्पादविनाशाविन्द्रकृतौ भवतस्तौ च पूर्वोक्तवैदिकवचनैरुच्येते।

एवं सति उषसो विनाशनमभिप्रेत्येदं वर्णनमरुर्मघवधो नामेति। तथाहि अरुर्मघपदेऽरुस्-शब्दोऽरुषशब्दसमानार्थः। अरुषशब्दस्यारुणयार्थकत्वम्। अत एवोषसोऽरुषीति नाम निघण्टौ। त्र्यरुषीणामित्यत्र त्रिभागारुणानामिति व्याख्यानमप्युक्तार्थसाधकम्। "वहन्त्वरुणप्सव"इति

वर्णनेनोषसामरुणवर्णत्वमरुणरूपत्वं वा विस्पष्टं बोध्यते। एवं चारुशब्दस्यारुणार्थकत्वेनारुणवर्णस्यारुणरूपस्य वा ग्रहणम्। मघशब्दस्य निघण्टौ धननामसु पाठाद्धनार्थकत्वम्। एवञ्चारुणं रूपं धनं यस्यासावरुमघ इति भवति। मानधना इत्यादिषु यथा मानस्यैव धनत्वमेवमत्रारुणरूपस्यैव धनत्वम्। एवञ्चोषसामरुणवर्णत्वादुषस एवारुमघा भवितुमर्हन्ति।

उषसां बहुत्वकल्पनापि वेदसिद्धा। उषसि स्त्रीत्वस्य काल्पनिकत्वेनारुमघशब्देन पुंस्त्वेन वचनमपि तत्र न विरुध्यते। स्त्रीत्वादेस्तत्र कल्पितत्वं प्रबन्धान्तरे स्पष्टयिष्यते। निरुक्तकारेण देवतानामायुधवाहनादिकं सर्वं देवतास्वरूपतो भिन्नं न भवति, किन्तु स्वरूपमेवेति "आत्मैवैषामायुधमात्मैवैषां वाहनमात्मैवैषां सर्वम्" इति स्पष्टमेव बोध्यते। एवञ्चारुणवर्णप्रधाना अरुणवर्णतेजोधना अरुणवर्णतेजोरूपा वा उषसोऽरुमघास्तानिन्द्रोऽवधीत्। सायमुत्तरस्यां दिशि अर्थात्सुमेरौ तासां वधोऽपसारणं तस्मात्स्थानात्। प्रातःकाले उषसां रात्रावन्धकारेणासत्कल्पनां नीतानां सर्वेषां पदार्थानां प्रातःप्रकाशनरूपेण दानेनातीवोपकारिकाणां विनाशोऽपराध इति कल्पना। उषसः स्त्रीरूपत्वकल्पनया स्त्रीहननरूपत्वेनापि इन्द्रस्यापराधकल्पनेति तद्वशतो रात्रौ सोमपानाभाव इन्द्रस्य देवतावर्जनकृत इति कल्पनासाम्राज्यम्।

सोमस्तत्पानमित्यादिविषये निबन्धान्तरं द्रष्टव्यम्। अत्र लौकिकं सोमपानं नाभिप्रेतम्। तदुक्तं मन्त्रे "सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन" इति। सर्वथेन्द्रकृत उषोवध एवैतरेयब्राह्मणेऽरुमघवधशब्देनोच्यते। अरुमघशब्देऽरुमघानिति पुंस्त्ववचनमेव चेद्विशिष्याग्रहीत तदानीमरुषशब्दस्य रूपनामसु निघण्टौ पाठेन तत्र विशेषावचनाच्छुक्लरूपार्थत्वं तत्समानार्थकारुशब्दस्यापि शुक्लरूपार्थत्वेन तद्रूपवतां सूर्योषसामुभयेषां ग्रहणमरुमघशब्देन। उषसः शुक्लरूपत्वमपि श्वेत्येत्यादिनामभिर्निघण्टौ प्रोच्यते। त्र्यरुषीणामित्यत्र त्रिभागारुणानामिति व्याख्यातॄणां वचनेन तृतीयभागस्यारुणयेऽवशिष्टभागे शुक्लरूपत्वं न विरुद्ध्येत। आदित्यस्य शुक्लरूपत्वं प्रसिद्धमेव। एवं चादित्यार्थकस्यारुमघशब्दस्य पुंलिङ्गत्वेनोषोऽर्थकारुमघशब्दस्त्रीत्वेन, तयोरुभयोरेकशेषे पुंलिङ्गशेषस्य पाणिनिना "पुमान्स्त्रिये"ति सूत्रेण वचनात्पुंलिङ्गत्वमरुमघशब्दस्योपपद्यते। उषस इव सूर्यस्यापि वध इन्द्रेण क्रियत इति पूर्वोक्तमन्त्रत एव विज्ञायते। सर्वथा सूर्योषसां वध उषोमात्रस्य वा वधोऽरुमघवधशब्देनाभिप्रेयत इति निर्विवादम्। सूर्यस्यापि सर्वोपकारकस्य वधेनापराधितेन्द्रस्येति न विमतिः। सर्वथाऽविज्ञातार्थस्य वेदग्रन्थेषु अन्यत्र तदर्थविवरणादर्शनेन मन्त्रादिप्रसिद्ध्या तत्साहाय्येनोक्तार्थकरणमेवं वरमिति मन्यते।

---

# ऋतं च सत्यं च

लेखकः—म० म० गिरिधरशर्मा चतुर्वेदः, जयपुरम्

ऋतम्, सत्यम्—इति शब्दाविमौ पर्यायत्वेनामरसिंहादिभिः कोषकृद्भिः संगृहीतौ, प्रसिद्धौ च व्यवहारेऽपि तथैव। सत्यार्थे ऋतशब्दस्य तद्विपरीतार्थे चानृतशब्दस्य बहुलमुपलम्भात्। वैदिकनिघण्टुष्वपि सत्यनामसु ऋतशब्द आम्नातः, प्रयोगश्चापि सत्यसमानार्थतया मन्त्रब्राह्मणयोर्बहुलमस्य शब्दस्योपलब्धः। मन्त्रस्थ ऋतशब्दः सत्यपरतया शतपथादिषु बहुत्र व्याख्यातोऽपि। यद्यप्यर्थान्तरमपि च्छन्दसि ऋतशब्दस्य दृष्टम्, तथापि तत्रापि प्रायेण सत्यसमानार्थत्वं न व्यभिचरति। तथा हि—जलनामसु ऋतमिति निघण्टुषु पठ्यते, सत्यमित्यपि तत्र पठ्यते। यज्ञार्थतया ऋतशब्दो बहुत्र मन्त्रादिषु श्रीसायणाचार्यैर्व्याख्यातः तथैव सत्यशब्दोऽपि। 'ब्रह्म वा ऋतम्' इति शतपथादिषु श्रुतम्, तत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यपि न विस्मरणार्हम्। 'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादौ ऋतं कर्मफलमिति भाष्यकृद्भिर्व्याख्यातम्, तस्यापि सत्यसमानार्थतैव विचारपथमधिरोहति। किं विस्तरेण, बाहुल्येन शब्दयोरनयोः पर्यायतैव बुद्धावुपारोहति।

अथ क्वचित्तु द्वयोरनयोः सहप्रयोगमुपलभ्य पर्यायता नास्तीत्यप्युन्नीयते। तथा हि—अघमर्षणसूक्ते सुप्रसिद्धे 'ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत' इति सहप्रयोगं पश्यामः, नात्र पर्यायतया द्वयं व्याख्यातुं शक्यम्, पुनरुक्तिप्रसङ्गात्। अत्र भाष्यकृतः श्रीसायणाचार्याः 'ऋतं मानसं यथार्थसंकल्पनम्, सत्यं वाचिकं यथार्थभाषणम्' इति किंचिद्विशेषं परिकल्प्य व्याचख्युः। किमेवंविधभेदपरिकल्पने बीजमिति न तत्र तैः स्पष्टीकृतम्। किंच—सर्वलोकादिसृष्टिप्रतिपादकेऽस्मिन्मन्त्र उक्तरूपयोर्ऋतसत्ययोः प्रथममुत्पत्तिप्रदर्शनं न विचारसहम्, पृथिव्यादिलोकसृष्टेः प्राङ् मनुष्यादीनां स्थित्यसंभवात्, तानन्तरेण च मानसवाचिकयोर्ऋतसत्ययोर्निराधारायाः सृष्टेरसामञ्जस्यात्। याऽपि ऋतसत्ये सकलधर्मोपलक्षणे, धर्माणां च प्रथमं सृष्टिरित्युपपत्तिराचार्यैः प्रदर्शिता, सापि धर्मिणामन्तरेण धर्माणां निराधारताप्रसङ्गान्न व्यवतिष्ठते। बृहदारण्यके च वर्णसृष्टेरनन्तरं धर्मसृष्टिकथनात् (१।४।१४) ततो विरुद्धापि प्रतीयते। तस्मादर्थान्तरमत्रानयोः शब्दयोर्मृग्यं स्यात्। सूर्याचन्द्रमोभ्यां पूर्वमहोरात्रसृष्टिः, पृथिव्याः प्रागर्णवस्य सृष्टिरित्याद्यपि तत्र सूक्ते विचार्यमेव।

अथ 'सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ।।'
(श्रीमागवत १० स्क० पू० )

इतिभागवतीयपद्ये श्रीधरस्वामिनस्तु 'ऋतं च सूनृता वाणी सत्यं च समदर्शनम्' इति सायणाचार्यविपरीतमिव व्याचख्युः । श्रीवल्लभाचार्याश्च सुबोधिन्याम् 'ऋतसत्ये नेत्रे प्रापके यस्येति' विगृह्णन्तः 'ऋतं सूनृता वाणी, वेदः सत्यप्रतिपादकः, प्रमाणं वेदः, प्रमेयं भगवद्धर्माः (आद्यं सत्यम्, परमृतम्)' इत्यादि व्याचख्युः । इहापि तु 'सत्यव्रतम्' इत्यनेनैवोक्तस्यार्थस्य पुनरुक्तेरसामञ्जस्यात्पदार्थान्तरमेव ऋतसत्यशब्दाभ्यामभिहितमिति प्रतिभाति । एवंमन्यत्रापि—

व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ।
(ऋ० १।१४५।५)

इत्यादिषु मन्त्रेषु,

'ऋतमेव पूर्वं आधारः सत्यमुत्तरोऽत्र ह वा ऋतसत्ये रुन्धेऽयो यत्किंचर्तसत्याभ्यां जय्यम्, सर्वं हैव तज्जयति' (शतपथ ब्रा० ११।२।७।६)

इत्यादिषु ब्राह्मणेषु,

भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ।। (महाभारते आदि प० १।२८२-२८३)

इत्यादिषु पुराणेषु च न शब्दाविमौ पर्यायत्वेन व्याख्यातुं शक्यौ, भेदेन व्यपदेशात् । न चापि केवलं मानसवाचिकधर्मपरतात्र सामञ्जस्यमावहतीति सुसूक्ष्ममालोच्यतां सुधीभिरास्थायान्वेषणप्रवणताम् ।

तत्रास्मद्गुरुप्रवरवेदविज्ञानसमीक्षाचक्रवर्ति—विद्यावाचस्पति—श्रीमधुसूदनशर्मचरणैरिदं तत्त्वं स्वग्रन्थेषु प्रतिपादितम्, यद् द्विविधा भवन्ति वैज्ञानिकप्रक्रियायां पदार्थाः—हृदयरहिताः, सहृदयाश्चेति । आङ्गलभाषायां 'सेण्टर' ( centre ) शब्देन यद् व्यवह्रियते लौकिके संस्कृते च 'केन्द्र'शब्देन यदुच्यते, तदेव वेदे हृदयशब्देन, नाभिशब्देन च व्यपदिष्टं द्रष्टव्यम् । भवन्ति केचन पदार्थाः ये केन्द्रमाश्रित्यैव तिष्ठन्ति, यथा प्रस्तराद्याः, एते सहृदयाः सत्यशब्देन व्यवह्रियन्ते । हृदयाधारेणैवैषामवस्थितिः, हृदय एवैषां विधारणशक्तिः । अङ्गुल्यापि धृते केन्द्रे महामहान्तोऽपि प्रस्तराद्या विधृतास्तिष्ठन्ति, न विचलन्ति, तेन परिचितकेन्द्रः स्वल्पबलोऽपि मनुजो गुरुतमं भारमुद्वोढुमीशीतेति वैज्ञानिकाः प्रतिपादयन्ति । 'शरीरं हृदये (श्रितम्)' (तै० ब्रा० ३।१०।८.७) इत्याद्या श्रुतिरपि चैतमेवार्थमाह ।

तथा—

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥

इति मन्त्रे प्रजापतिपदेनापीयं केन्द्रशक्तिः प्रतिपादितेत्यास्तामिदमप्रकृतम्। अथापरे पदार्था विशकलिता एव तिष्ठन्ति, न केन्द्रं प्रकल्पयन्ति, यथा जलाद्याः, ते हृदयरहिता ऋत-शब्देन व्यपदिश्यन्ते। अत एव ऋतशब्दव्याख्यायां निरुक्तकृद्यास्क आह 'ऋतमित्युदकनाम, प्रत्यृतं भवति' (अ० २ खण्ड २५) इति। प्रत्यृतम् इतस्ततो विकीर्णम्। अकेन्द्रकमित्यर्थः।

अग्नीषोमात्मकं जगत्—इति हि वैदिकं दर्शनम्। तत्र सोमः ऋतम्, अहृदयत्वात्; अग्निस्तु सत्यम्, केन्द्रं प्रकल्प्य तदाधारेणैवावस्थानात्। सृष्टेरारम्भे सर्वमृतं भवति, सर्गात्प्राक् केन्द्रनिबन्धनाभावात्। अत एव 'ब्रह्म वा ऋतम्'.....'ब्रह्मो ह्यृतम्' (शत० ब्रा० ४।१।४।१०) इत्यादिषु सर्वप्रथमस्य ब्रह्मण ऋतत्वमाम्नातम्। प्रवृत्ते तु सर्गे केन्द्र-शक्तिस्तत्र तत्र प्रतिनियता भवतीति सत्यान्युत्पद्यन्ते। अथापि सोमजातीयाः सोमप्रधानाः पदार्थाः स्वभावेन हृदयरहिता एव तिष्ठन्ति, ते ऋतान्येवोच्यन्ते।

पञ्चसु महाभूतेषु प्रथममाकाशोत्पत्तिः श्रूयते। तच्चाकाशं शब्दघनात्मकम्। शब्दश्च केन्द्रं परिगृह्यैवावतिष्ठत इति आकाशः 'सत्यम्'। तदनन्तरो वायुस्तु 'ऋतम्', नहि वायुः क्वापि केन्द्रं प्रकल्प्य तिष्ठति, इतस्ततो विकीर्ण एव तु भवति। तदनु तेजः 'सत्यम्', तत आपः 'ऋतम्', तदनु पृथिवी च सत्यमिति क्रम उपलभ्यते। तथैव सप्तव्याहृतिप्रतिपाद्येषु सप्तसु लोकेषु भूरियं 'सत्यम्', भुव इत्यन्तरिक्षं च 'ऋतम्' शून्येऽन्तरिक्षे हृदयासंभवात्। 'अन्तरिक्षं वा ऋतस्य विभूमा' (तैत्ति० ३।३।५।४), 'ऋतमसि ऋतसदनमसि' (तैत्ति० सं० १।१।६।३) इत्याद्यासु श्रुतिषु चान्तरिक्षमृतमेव श्रूयते। ततः परं स्वरिति सूर्यमण्डलं 'सत्यम्', मह इति सूर्यात्परतोऽन्तरिक्षं च 'ऋतम्'। ततो जन इति परमेष्ठिमण्डलं 'सत्यम्', तप इति ततः परमन्तरिक्षम् 'ऋतम्'। अथ सत्यमिति स्वयम्भूमण्डलं 'सत्यम्' एवेति तत्रापि क्रमः। एषु हि सप्तसु लोकेषु चत्वारि मण्डलानि, त्रीणि तु मध्यगान्यन्तरिक्षाणीति मण्डलानि सत्यपदेन. अन्तरिक्षाणि तु ऋतपदेन व्यवह्रियन्ते। परमस्मान् परितो वर्तमाने द्यावा-पृथिव्योरस्मिन्नन्तरिक्षे परिभ्रमता चन्द्रमण्डलेन सार्धं घनिष्ठोऽस्माकं पृथिव्याः संबन्ध इति सोऽपि मण्डलेषु परिगणितः। तेन मण्डलपञ्चकसंपत्त्या 'पञ्चपुण्डीरेयं वल्शा (शाखा)' श्रुतौ व्यवहृता। तान्येतानि मण्डलानि अन्तरिक्षापेक्षया सर्वाण्यपि सत्यानि। परं परस्परं तारतम्य-पर्यालोचने (केन्द्रबन्धदार्ढ्यशैथिल्यविवेके) इहापि क्रम आम्नातः—स्वयम्भूमण्डलं सत्यम्, परमेष्ठिमण्डलं स्वप्प्राधान्यादृतम्, तदनु सूर्यः सत्यम्, चन्द्रमास्तु पूर्वोक्तन्यायेनैव ऋतम्, अथ पृथिवीयमग्निप्रधाना सत्यमिति त्रीणि सत्यानि, द्वे च ऋते इहापि द्रष्टव्ये। एतदभिप्रायेणैव—

ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन।<br>ऋते समुद्र आहित ऋते भूमिरियं श्रिता॥ (तैत्ति० ब्रा० १।५।५।१)

इति अप्प्रधानस्य परमेष्ठिन ऋतत्वमेवोक्तम्। ऋतस्य च व्यापकत्वमत्र प्रदर्शितम्, तन्मध्य एव भूम्यादीनामवस्थानवर्णनात्। तदिदं युक्तमेव, नहि केन्द्रनिबद्धाः पदार्था विभवो भवितुमर्हन्ति, अपरिच्छिन्नस्य केन्द्रकल्पनासंभवात्। ऋतं तु प्रसरणशीलं सर्वमभिव्याप्यापि शक्नोति स्थातुम्। अन्यत्रापि च—

'ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो......' ( ऋ० सं० १।१०५।१२ ) इत्यादिषु मन्त्रेषु सिन्धूनामृतवाहिता सूर्यस्य च सत्यविस्तारणं स्फुटमुक्तम्। तेन जलस्य ऋतत्वम्, सूर्यकिरणानां च सत्यत्वं स्थिरीभवति। सूर्यकिरणानां केन्द्रनिबद्धत्वाज्जलस्य च तथात्वाभावात्।

तथैव—'अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः' ( ऋ० सं० १।१।५ )

'वैश्वानर तव तत्सत्यमस्त्वस्मान् रायो मघवानः सचन्ताम्' (ऋ० सं० १।९८।३)

'त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने' ( ऋ० सं० ३।१४।६ )

'तद्यत्तत्सत्यम्, असौ स आदित्यः' ( शत० ब्रा० ६।७।१।२ )।

'अथास्यां हिरण्यं बध्नीते। द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च, सत्यमेव देवा अनृतं मनुष्याः। अग्निरेतसं वै हिरण्यम्। सत्येनांशूनुपस्पृशानि, सत्येन सोमं पराहणानीति' ( शत० ब्रा० ३।३।२।२ )

'सत्यं हैतद् यद्रुक्मः' ( शत० ब्रा० ६।७।१।१ )

इत्यादिषु मन्त्रब्राह्मणेषु सहृदयानामग्न्यादित्यादीनां तत्संबन्धिनां हिरण्यादीनां च सत्यत्वमाम्नायते। हृदयं हि सर्वेषां वस्तूनां 'प्रतिष्ठा' भवतीत्यवोचाम, तदाधारेणैव सर्वेषां पदार्थानामवस्थानात्। प्रतिष्ठायाश्च सत्यत्वं तत्र तत्र ब्राह्मणवाक्येषु श्रूयते। तेन हृदयसत्ययोरैक्यमेव प्रसिद्ध्यति। शतपथस्य चतुर्दशे काण्डे च ( ८ अ० ४-६ ब्राह्मणेषु ) 'एष प्रजापतिर्यद् हृदयम्...तदेतत् त्र्यक्षरं हृ-द-यमिति', 'तद्वै तदेतदेव तदास। सत्यमेव सः', 'तदेतत् त्र्यक्षरम् 'स-ति-यमिति' इत्यादिना प्रपञ्चेन हृदय-सत्ययोरेकत्वमेव दृढीकृतम्। प्रजापतेश्च केन्द्रशक्तिरूपस्य पूर्वोक्तस्य हृदयत्वमुक्तमिति सहृदयस्य पदार्थस्य सत्यत्वं स्फुटमुक्तं भवति। 'कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदये इति होवाच'। ( बृह० उप० ३।९।२३ ) इति शाकल्य-याज्ञवल्क्य-संवादेऽपि चायमर्थः स्फुटो भवति। यद्यपि वचनरूपं सत्यमत्र व्याख्यायते, अथापि बह्वभिप्रायगर्भाः श्रुतयो भवन्तीति पदार्थगतं सत्यत्वमपि शक्यमनुसन्धातुम्।

अथ—'वरुणस्य ऋतसदनमासीद' ( यजुः सं० ४।३६ )

'प्रसीमादित्यो असृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति' (ऋ० सं० २।२८।४)

'यास्ते प्रजा अमृतस्य परस्मिन् धामन्नृतस्य
मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः।' ( ऋ० सं० १।४३।९ )

'तन्म ऋतं पातु शतशारदाय' ( ऋ० सं० ७।१०१।६ )

'चारुर्ऋताय पीतये' ( ऋ० सं० १।१३७।२ )

'वायुरसि प्राणो नाम......ऋतमसि सत्यं नाम'..........

'ऋतस्य त्वा व्योमने, ऋतस्य त्वा विधर्मणे'

( तै० सं० ३।३।५ )

'ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति, वरुण्या वा एषा यद्रज्जुः' ( शत० ब्रा० ३।७।४।१ ) इत्यादिषु च वरुण-वायु-सोम-जलप्रभृतीनामहृदयानामृतत्वमाख्यायते।

'ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति' ( तैत्ति० सं० ४।३।११।५ ) इति मन्त्रे च उषा 'ऋतस्य गर्भः' इति स्तूयते, उषसि प्रत्यृतानां प्रकाशावश्यायादीनामकेन्द्रत्वात्, उषसो जनकानां वा प्रवृत्तानां प्रकाशानामृतत्वात्। तथैव—

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।

त आ ववृत्रन् सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते॥

( ऋ० सं० १।१६४।४७ )

इति मन्त्रे उत्तरस्या दिश ऋतसदनत्वमाम्नायते, उत्तरा हि दिक् सोमस्यापां च सदनं भवति, ततश्च अहृदयानामपां सोमस्य च ऋतत्वमत्र स्फुटमाख्यातं भवति। 'प्रत्यृतं भवतीति' निरुक्तव्याख्यया च सोऽयमर्थो दृढीभवति। इति।

सर्वमपि सत्यमृतगर्भं भवति, पिण्डस्य केन्द्रबद्धस्यावयवावयवधाराया विश्रान्तावन्ततः सर्वत्र ऋतस्यैवोपलम्भात्। ऋतान्येव हि केन्द्रबद्धानि सन्ति सत्यत्वमाप्नुवन्ति। अत एव शतपथब्राह्मणे ( ११।१।६।१ ) "आपो ह वा इदमग्रे सलिलमेवास ता अकामयन्त कथं नु प्रजायेमहीति। ता अश्राम्यन्, तास्तपोऽतप्यन्त, तासु तपस्तप्यमानासु हिरण्मयमाण्डं संबभूव........ततः संवत्सरे पुरुषः समभवत्, स प्रजापतिः" इत्यादिना प्रपञ्चेन ऋतास्वप्सु एव सत्यस्य संवत्सराग्नेः प्रजापतेरुत्पत्तिरभिहिता।

'ऋतचिद्धि सत्यः' ( ऋ० सं० १।१४५।५ ) इति मन्त्रेऽपि च सत्योऽग्निर्ऋतचयन-विशिष्टोऽभिहितः। 'ऋताषाड् ऋतधामाग्निः' इति मन्त्रेऽपि चाग्नेर्ऋतगर्भत्वाभिप्रायकमृत-धामत्वं श्रूयते। तथैवावयविभूतस्य ऋतस्यावयवाः सत्या भवन्तीत्यपि दृश्यते, यथा जलावयव-भूता बिन्दवः केन्द्रबद्धाः सत्या भवन्ति। एतदभिप्रायेणैव श्रुतिराह "ऋतं सत्येऽधायि, सत्यमृतेऽधायि, ऋतं च मे सत्यं चाभूताम्" इति ( तै० ब्रा० ३।७।७।४ )। ऋतं सत्यरूपेण परिणमद्भिरस्पष्टमवलोक्यते, यथा जलं हिमतां गतं सत्यभावमापद्यते। वायुर्वा व्यजनादि-परिचालितः केन्द्रनिबद्धः सत्यो भवति, सोमोऽपि चाग्नौ हूयमानोऽग्निरूपतां गच्छन् सत्य एव संपद्यते। तथैव सत्यमप्यृततां गच्छति। तथा ह्यग्निर्वा सूर्यतेजो वा यावत्केन्द्रसंबद्धं भवति, भवति तावत् सत्यम्। यदा तु पदार्थान्तरमनुप्रविशति, तदा केन्द्रात्प्रवृत्तमृतं भवति। यथा ग्रीष्मेऽस्तमितेऽप्यादित्ये बहुकालपर्यन्तं प्रस्तरादिषूष्मा प्रतीयते। अग्नौ शृतं चान्नाद्यग्नेः पृथक् कृतमपि चिरमुष्णं तिष्ठति। तत्रेदं तेजः केन्द्रादपवृत्तं पदार्थान्तराङ्गतां गतमिति

स्पष्टमेव। इदमेव 'प्रवर्ग्य' इति 'उच्छिष्टमिति' च श्रुतिष्वाख्यायते। तदित्थमृतसत्ययोः परस्पराङ्गतां परस्परं रूपपरिणतिं चाभिलक्ष्यैकत्वमेवानयोः पश्यन्ती श्रुतिः शब्दाविमौ पर्यायेणैव बहुत्र प्रयुङ्क्ते। एतदभिप्रायेणैव चाग्नेरादित्यस्य च क्वचित्सत्यत्वं क्वचिदृतत्वं चाम्नायते"ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति, सत्यं त्वर्तेन परिषिञ्चामीति प्रातः। अग्निर्वा ऋतम्, असावादित्यः सत्यम्" तैत्ति० ब्रा० २।१।११।१)। "अयं वा अग्निर्ऋतम्, असावादित्यः सत्यम्। यदि वाऽसावृतमियं सत्यम्। उभयम्वेतदयमग्निः" (शत० प० ११।२।७।६) इत्याद्यासु श्रुतिषु। तदिदं मूलतत्त्वस्यैकत्वाभिप्रायकं द्रष्टव्यम्।

सूर्यमण्डलादपवृक्तं पार्थिवपदार्थाङ्गतां भजत्सौरं तेजो यदाख्यातम्, तदेव 'ऋताग्निः' इति 'संवत्सराग्निः' इति च श्रुतिषु व्यवह्रियते। एतत्तारतम्यादेव पृथिव्यां समय मौसम)-परिवर्तनं भवतीति ते समया ऋतसंबन्धादेव 'ऋतवः' इत्याख्यायन्ते। पृथिव्यां चितः पृथिवीकेन्द्रनिबद्धश्च पार्थिवोऽग्निः 'सत्यः' इति साधितमेव। सोऽयमपि वस्तुतः सूर्यादेवोत्पन्नः। पृथिवीपिण्डस्य सूर्यपिण्डादेवोत्पत्तेः श्रुतिसम्मतत्वात्, तदग्नेरपि तत एवोत्पन्नत्वात्। इदं तु स्मर्तव्यम्—श्रुतिषु नायमग्निशब्द उष्णस्पर्शवद् द्रव्यस्यैवाभिधायकः, अपि तु सर्वपदार्थमूलभूतमन्नदप्राणमयमाह। उष्णताप्यस्यैवावस्थाविशेष इत्यन्यदेतत्। ततश्च सौराः प्राणाः, पार्थिवाः प्राणाश्च ऋतसत्यपदाभ्याममभिधीयन्ते।

तदिदं द्वयमेव 'ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत'—इत्यघमर्षणसूक्ते प्रक्रान्तम्। अनयोरेव कालविभाजकत्वम्, लोकनिर्मातृत्वं चेति तत्रोपदिष्टम्। तदिदं सर्वं सत्यवसरेऽन्यदा स्पष्टं निरूपयिष्यामः। इदानीं तु लेखविस्तरभियैतदेव निवेदयद्भिर्विरम्यते—यदेवंविधेषु शब्देष्वेव वैदिकविज्ञानकोषः सुनिहितो वर्तते। यदि विद्वांसो व्यावहारिकसुप्रसिद्धार्थनिदर्शनप्रधानेषु कोषेष्वेव केवलमनालम्ब्य शब्दार्थान्वेषणप्रक्रियामुररीकुर्युः, तर्हि निगूढस्य वैदिकस्य विज्ञानस्य भूयोऽपि प्रकाशेन दिश उज्ज्वलिताः स्युरिति पूरयतु भगवान् मनोरथमिमम्। इति।

——

# श्रौतदेवताविज्ञानम्

लेखकः—पं० श्रीभगवत्प्रसादमिश्रः

## उपक्रमः।

अद्यत्वेऽपि बहुषु समाजेषु येन केनापि प्रकारेण देवताराधनं तत्प्रसादनं वा श्रद्धालुभिर्धर्मनिष्ठैः परलोकहितार्थिभिः स्वर्गादिसुखकामैश्च सामाजिकैर्विधीयमानं दृश्यत एव। तत्रापि हिन्दुसमाजे देवताराधनस्योपदेशः प्रचारो वा तदितरसमाजापेक्षया बाहुल्येन वर्तत इत्यपि विदितमेव सर्वत्र।

तत्र प्राचीना ऋषयः साक्षात्कृतधर्मत्वादतीन्द्रियतत्त्वार्थविद उन्मीलितदिव्यनयनाः प्रत्यक्षीकृतदेवा आसन्। इदानीन्तना मनुष्याः पुनर्ब्रह्मचर्यानुष्ठान-योगाभ्यासाद्यभावादप्राप्तात्मसंपत्तयः पिहितनेत्रा रजस्तमोभूयिष्ठाः स्वयमसाक्षात्कृतदेवाः पूर्वाचार्यैरुपदिष्टमार्गेण गच्छन्तो देवप्रसादात्सश्रेष्ठफलमुपभुञ्जते।

देवतापदार्थविवेचनात्प्राक् पाणिनीयशब्दानुशासनानुकूलं क्रीडा-विजिगीषा-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गत्यर्थकेन दिव् ( दिवादि १ ) धातुना अच्प्रत्यये निष्पद्यमानात् देवशब्दाद् भावे तलि कृते सम्भूतस्य देवतापदस्य निरुक्तिः कीदृशी, कथं च ततः शास्त्रप्रतिपादितदेवतातत्त्वरहस्यमुन्नेतुं शक्यत इति निरूपयितुमादौ तावद् धात्वर्थविभजनक्रमेण देवताशब्दस्य निर्वचनमेव विधीयते।

## देवताशब्दनिरुक्तिः।

तत्र दिव्धातोः कैश्चिदर्थैर्निर्वचनम्—

( क ) दीव्यति=जगतः सृष्टिस्थितिसंहाररूपक्रियया क्रीडतीति देवः।

( ख ) दिव्यायां क्रीडनात्मिकायां प्रजापतितन्वां ये जातास्ते देवाः।

धातुर्दिवीति यः प्रोक्तः क्रीडायां स विभाव्यते।
तस्यां तन्वां तु दिव्यायां जज्ञिरे तेन देवताः॥

( वा० पु० ६।१० )

( ग ) दीव्यतः क्रीडतः प्रजापतेः समुत्पन्ना देवाः।

"देवनाद् वै देवोऽभूदिति तद्देवानां देवत्वम्" इति श्रुतेः।

ततो मुखे समुत्पन्नाः क्रीडतस्तस्य देवताः ।
यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्तिताः ॥ ( वा० पु० ६।६ )

( घ ) दीव्यति = द्योतते स्वयमात्मप्रकाशेन इति देवः ।

( ङ ) दीव्यते = स्तूयते सर्वैरिति देवः ।

दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि ।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ इति स्मृतेः

( च ) अथ निरुक्तमतमनुसृत्य 'दानात्'—

ददाति उपासकेभ्योऽभिलषितान् पदार्थानिति देवः ।
"देहि मे ददामि ते नि मे धेहि नि ते दधे" ( वा० सं० ३।५० ) इति श्रुतेः ।

( छ ) दीपनात् = द्योतनात्—

स्वात्मभिन्नपदार्थान् दीपयति द्योतयति वा इति देवः ।
"यस्य भासा सर्वमिदं विभाति" इति श्रुतेः ।

( ज ) देवानामुत्पादिका प्रजापतितनूर्दिवा ( अहोरूपा ) अभवत् । यत्सा दिवा इति तदुत्पन्ना देवाः । "दिवा वै नोऽभूदिति तद्देवानां देवत्वम्" ( तै० ब्रा० २।२।६।६ ) ।

वैदिकदेवतात्वं तु मन्त्रेषु स्तवनीयत्वम् । "यस्य वाक्यं स ऋषिः या तेनोच्यते सा देवता" ( ऋक्सर्वानुक्रमणी ) । "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति" ( निरु० ७।१ )

अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति ।
प्राधान्येन स्तुवञ्छक्त्या मन्त्रस्तद्देव एव सः ॥ ( बृहद्देवता १।६ )

## देवतासंख्या तत्स्वरूपं च

इतः परं निरुक्तदेवतायाः स्वरूपं परमार्थत एकमनेकं वेति शङ्कायां देवतासङ्ख्याया यथामति निरूपणं समुचितं प्रतिभाति ।

यद्यपि "यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति किंचित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" ( श्वेताश्वतरोप० ३।६ ), "पुरुष एवेदं सर्वम्" ( ऋ० १०।६०।२॥ वा० सं० ३१।२ ) इत्यादिश्रुतिभिरेका एव देवता प्रतीयते, तथापि "रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् । त्रिर्यद्दिवः परिमुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा" ( ऋ० ३।५३।८ ) इत्यादिश्रुत्या परमार्थत एकस्या अप्युपाधिभेदसम्बन्धादनेकत्वावगमात् खण्डदृष्ट्या देवताया अनेकत्वम् । तत्र

एकस्याः द्वि (२), त्रि (३), षट् (६), त्रयस्त्रिंशत् (३३), षष्टि (६६), षडुत्तरत्रयस्त्रिंशच्छत (३३०६), एकोनचत्वारिंशदधिकत्रयस्त्रिंशत्छत (३३३९) इत्यादिभेदाः समुपलभ्यन्ते ।

तत्र **एकमेव परं ब्रह्म** "कतम एको देव इति प्राण इति" (श० ब्रा० ११।६।३।१०) इत्यादिश्रुतिषु प्राणनाम्ना,

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
(कठोप० १।२।२२)

इत्यादिषु च आत्मशब्देन व्यवहृतम् ।

**द्वौ देवौ चाग्नीषोमौ** कुत्रचित् प्राणरय्यात्मना, कुत्रचिदन्नादान्नशब्दाभ्यां, कुत्रचिद्भोक्तृभोग्यशब्दाभ्यां व्यवह्रियेते । "आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः" (प्रश्नोप० १।५) इति श्रुतेः ।

दिव्यमनुष्यभेदेन वा द्वे देवते "द्वया वै देवा देवा अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः" (श० ब्रा० २।२।२।६) इति वाजसनेयश्रुतेः ।

विश्वकर्मा ह्यजनिष्ट देव आदिद् गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥
(तै० सं० ४।६।१।३ ॥ वा० सं० १७।३२)

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥
(ऋ० १।१६४।१ ॥ अ० सं० ६।६।१)

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ॥
(ऋ० १०।१५८।१)

इत्यादिमन्त्रैः पृथिव्यन्तरिक्षदिवाम् अग्निवायुसूर्या अधिपतय **इत्येवं तिस्रो देवताः** । "अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः" (७।५) इति निरुक्ते मध्यमेऽन्तरिक्षस्थाने वायुर्वेन्द्रो वेति वाय्विन्द्रयोर्वैकल्पिकत्वमुक्तम् । तत्र नैरुक्तानां मते इन्द्र एवान्तरिक्षस्थान इति दुर्गः । वायुरिति वररुचिः ।

**षड्देवतास्तु**—'कतमे षडिति अग्निश्च पृथिवी च वायुश्चान्तरिक्षं च आदित्यश्च द्यौश्चेति षट्' (श० ब्रा० १४।६।९।८ ॥ वा० सं० २६।१) इत्यादिषु त्रयो देवास्त्रयो लोका इति षड्देवता उक्ताः ।

"त्रिंशतं त्रींश्च देवान्" (ऋ० ३।६।९), "गिर्वणस्त्रयस्त्रिंशतमा वह" (ऋ० १।४५।२), "ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन्" (ऋ० ८।२८।१), "त्रयस्त्रिंशद् देवताः" (अ० सं० १२।३।१६) इत्यादिश्रुतिषु **देवानां त्रयस्त्रिंशत्त्वमुक्तम्** ।

तेषां नामानि तु—"कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति" (श० ११।६।३।५) श्रुत्युक्तानि। ऐतरेय-ब्राह्मणे (७।८) तु त्रयस्त्रिंशत्सोमपदेवपरिगणन इन्द्रस्थाने वषट्कारः परिगणितः।

त्रयस्त्रिंशतो देवानां प्रत्येकमेकादशानामेकैको गणः। तथा च—

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्॥
(वा० सं० ७।१९)

ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः।
त इदं यज्ञमवन्तु त इदं क्षेत्रमनु वि विशन्तु॥
(तै० सं० २।४।६)

इत्यादिषु एकैका एकादशिनी पृथिव्यादिलोकत्रये निवसतीत्युक्तम्।

**त्रयस्त्रिंशत् सोमपाः, त्रयस्त्रिंशदसोमपा इति सम्भूय षट्षष्टिर्देवाः।** तथा ह्यैतरेये श्रूयते—"त्रयस्त्रिंशद् वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाः, अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवाः सोमपाः, एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एतेऽसोमपाः पशुभाजनाः, सोमेन सोमपान् प्रीणाति पशुनाऽसोमपान्" (७।८) इति।

**"त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा"** इति शातपथश्रुतेः (१४।६।९।१) **षडुत्तरास्त्रयस्त्रिंशच्छतं देवाः।**

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्।
औक्षन् घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त॥
(वा० सं० ३३।७॥ तै० ब्रा० २।७।१२)

इत्यादिश्रुतिषु **एकोनचत्वारिंशदधिकत्रयस्त्रिंशच्छतमिता देवाः।**

---

(१) अत्र श्रीमद्भिर्माननीयैर्जयपुरनिवासि-दिवंगत पं० श्रीमधुसूदनशर्मभिरस्मभ्यं प्रदत्तं स्वकृतं मन्त्रव्याख्यानं पाठकानां प्रदर्शनाय सङ्गृह्यते।

ज्योतिः—गौः-आयुः-इति स्तोमभेदाद् देवास्त्रिधा भिद्यन्ते। तत्रेह मन्त्रे देवशब्देन गावो विवक्ष्यन्ते। अग्निरस्त्वयं ज्योतिर्देवः। स चाग्निर्लोकत्रयभेदात्त्रेधा व्यपदिश्यते, अग्निः वायुः सूर्यश्चेति। एकैकमेतमग्निं त्रीणि सहस्राणि त्रीणि शतानि त्रिंशच्च (३३३०) गावः परिचरन्ति। मन्त्रे च द्वयोपादानात् प्रक्रमभेदो विज्ञायते। तथा चात्र श्रुत्यन्तरैकवाक्यतानुरोधादिह नवपदं प्रक्रमपार्थक्येन प्रवर्तनीयम्। तथा हि अग्निवायुसूर्य्येत्यग्नित्रयसम्बन्धिनो ये गोदेवा नवसहस्राणि नवशतानि नवतिश्च (९९९०) निष्पद्यन्ते। तत्र नव चान्ये गोदेवा द्रष्टव्याः। तेनैकतो न्यूनानि दशसहस्राणि (९९९९) भवन्ति। तत्रैका कामगवी सर्वाग्निसाधारणी पुनरन्या पृथक्त्वेनोपनिविशते। सात्र मन्त्रेऽनुक्ताऽपि

अत्र महीधर :—

"नवैवाङ्कास्त्रिवृद्धाः स्युर्देवानां दशकैर्गणैः ।
ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदतः ।"

इति कारिकया आगमोक्ता देवता आह ।

यावदभिधानं देवता इति याज्ञिका मीमांसकाश्च ।

न यावदभिधानं देवता इति पौराणिकाः ।

त्रयस्त्रिंशत एव देवतानां ततोऽधिकसंख्यावत्त्वं महिम्नः प्रभावादेवेत्यपि श्रूयते । तथा हि वाजसनेयिनः साकल्यब्राह्मणे समामनन्ति—"महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" (श० ब्रा० ११।६।३।५)" । शुक्लयजुर्वेदे( १४।३१ )ऽपि प्रतिपादितमेतद्यत्परमेष्ठी परमव्योमनि चिदाकाशे वा स्थितः प्रजापतिः सर्वानपि पदार्थान् त्रयस्त्रिंशद्देवताद्वारा धारयति ।

अथर्ववेदे तु "यस्य त्रयस्त्रिंशद्देवा अङ्गे सर्वे समाहिताः" ( १०।७।१३) इति श्रुतेरद्वितीयस्य परमात्मनोऽवयवशक्तित्वेन देवा निरूपिताः । एता एव त्रयस्त्रिंशद्देवता विश्वस्य जगतः कारणभूताः, जानन्ति चैताः ब्रह्मविदो जनाः ।

---

प्रकरणान्तरानुरोधेनोपनिविष्टा द्रष्टव्या । तथा च दशसहस्राणि ( १०००० ) गावो लोकत्रयपर्याप्ता लोकत्रये विभज्योपनिविष्टमग्निं घृतैर्बर्हिषा च परिचरन्ति । तदनन्तरमेव चैतत्पृथिवीयज्ञर्त्विजं होतारं नामाग्निविशेषं पृथिव्यां प्रतिष्ठापयति । इति मन्त्रार्थः । एषां च गोदेवानामित्थं सन्निवेशक्रमः श्रुत्यन्तरे यत्र तत्र वैशेष्येनोपव्याख्यातो द्रष्टव्यः । तत्र विशेषतो द्रष्टव्यानि प्रकरणान्तराणि तावदिमानि भवन्ति । "चत्वार ईं बिभ्रति क्षेमयन्तो दश गर्भं चरसे धापयन्ते । त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान् ॥ ऋ० सं० ५।४७।४ ॥ सामाथर्वब्राह्मणयोरेतद्व्याख्यानं विज्ञानायोपयुज्यते । कृष्णयजुर्वेदे च ब्राह्मणे गोनामिकाध्यायो द्रष्टव्यः । महीधरस्त्वत्र भाष्ये तावदेतदर्थोपोद्बलकतया भिन्नप्रकरणस्थं संख्यासादृश्यं दर्शयति । "नवैवाङ्कास्त्रिवृद्धाः स्युर्देवानां दशकैर्गणैः । ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदतः" इति । ब्रह्मविष्णुरुद्रा इत्येते त्रय एव देवाः सन्तीति त्रय एवाङ्कास्तावत् सिद्ध्यन्ति । ते च पुनस्तैरेव कृतरूपास्त्रयस्त्रयो भवन्तीति नवाङ्का जायन्ते । तथा चैते नवाङ्काः त्रयस्त्रयस्त्रय इति त्रिवृत्ताः सन्ति । किन्त्वेते त्रिवृद्धाः कार्याः । एकदश-शत-सहस्रतिवृद्धिक्रमेणावस्थापितास्ते त्रयोऽङ्कास्त्रिवृद्धाः सन्तः त्रीणि शतानि त्रयस्त्रिंशदुपेतानि ( ३३३ ) सिध्यन्ति । ब्रह्मविष्णुरुद्रभेदात्तु त्रैगुण्योपपत्तौ नवशतानि नवनवतिश्चोपपद्यन्ते ( ९९९ ) । अत्रैका संख्या न्यूना भवतीति सा प्रकरणवशादध्याहर्तव्या तद्योगादियं सहस्रसंख्या निष्पद्यते ।

अथैषां ब्रह्मविष्णुरुद्राणां देवानां याः शक्तयस्तासामेकैका शक्तिः विद्यावर्णभेदाद् दशभेदा भवतीति कृत्वा त्रयाणां देवानां दशसहस्राणि ( १०००० ) शक्तयो निष्कृष्यन्ते ॥

इत्थञ्चैता या गावोऽग्निवायुसूर्याणां याश्च शक्तयो ब्रह्मविष्णुरुद्राणां तासामुभयीषां संख्यासाम्यमुपदिष्टं भवति । अपि वा अग्निवायुसूर्या एवैते ब्रह्मविष्णुरुद्राः स्युः । गाव एवैताः शक्तयः स्युः । शमिति ।

विमर्शेणावगम्यते यत् भोक्तृभोग्यभेदेन बाह्याभ्यन्तरभेदेन वा कार्यकरणकर्तृभेदेन वा एकस्यैव स्वतोऽनेकत्वव्यपदेश इति। अत्र प्रमाणानि :—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥

(ऋ० १।१६४।४६ ॥ अ० सं० ६।१०।२८)

"एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति" (नि० ७।४), "तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति" (निरु० ७।५)।

श्रुतिषु देवतानां पुरुषविधत्वम्, अपुरुषविधत्वम्, कर्मकालमात्रं कर्मार्थमुभयविधत्वं, नित्यमुभयविधत्वमिति चातुर्विध्यमुपलभ्यते।

तत्त्वतस्तु द्योतनशीला ज्योतीरूपा अनिमिषा एव देवताः परमात्मशक्तिभूताः कामरूपत्वात् स्वसङ्कल्पानुसारेण जगत्प्रयोजनानुसारेण वा गृहीततत्तद्विग्रहत्वेन साकारा अपि वस्तुतो निराकारा एव। निराकारा अपि तत्तद्विग्रहवत्त्वप्रतिभासेन साकाराश्चेति सर्वमुपपन्नम्। तद्विग्रहस्य मन्त्रमयत्वेन प्राकृतधर्मास्पर्शात् देवतानां मन्त्रशरीरत्वमशरीरत्वं च तत्र तत्र विवक्षाभेदेनाभिधीयमानं दृश्यते। तथा च श्रीमद्भागवते—"मन्त्रमूर्तिममूर्तिकम्" इति।

श्रुतिरपि भवति—

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः'। (अ० सं० १०।८।२७)।

निरुक्तेऽपि "यद्यद्रूपं कामयते तत्तद्देवता भवति" (निरु० १०।१७), "माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते" (नि० ७।४) इत्येवं स्मर्यते।

मीमांसकास्तु—"मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा" (वा० सं० २२।२८) इत्यादिषु मूलशाखादीनां लोकप्रसिद्धयाऽचेतनानां देवतात्वानुपपत्तेर्मान्त्रवर्णिक्य एव देवता न तु विग्रहवत्य इति मन्यन्ते। तथापि—"तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि। प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च" (मुं० २।१।७)। "पुरुष एवेदं सर्वम्" (ऋ० १०।९०।२॥ वा० सं० ३१।२) इत्यादिभिर्वृक्षमूलादिष्वपि सर्वव्यापकस्य ब्रह्मणोऽशतया व्यवह्रियमाणानामचिद्वस्तूनामधिष्ठात्रीणां देवतानां सत्त्वमवगन्तव्यमेव। अन्यथा शाखामूलादिषु वृद्ध्यादेरनुपपत्तिः स्यात्।

## देवतानां जातिः।

शतपथब्राह्मण-तैत्तिरीयारण्यकादिपर्यालोचनयावगम्यते—यत् आजानजदेवता-कर्मदेवता-आजानदेवताभेदेन देवतात्रैविध्यमिति।

**तत्र आजानजदेवताः—**

उदन्वती द्यौरवमा पीलुमतीति मध्यमा ।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते ॥
(अ० सं० १८।२।४८)

इत्यत्र प्रतिपादितपितृलोकादूर्ध्वे विशिष्टो देवलोक आस्ते, तस्य नाम आजानलोक इति । तत्राविर्भूताः सर्वेऽपि आजानजशब्देन व्यवह्रियन्ते । गच्छन्ति चैतस्मिँल्लोके स्मृतिप्रतिपादिते इष्टापूर्तादिकर्मानुष्ठानात्तसिद्धयः स्मार्ता जनाः ।

आजानो देवलोकः स्यात्तज्जा आजानजाः स्मृताः ।
स्मार्तकर्मकृतस्तत्र जायन्ते देवभूमिषु ॥

(तैत्तिरीयोपनिषद्भाष्यवार्त्तिके) इति वाक्यात् । पितृभ्यः शतगुणमानन्दं प्राप्नुवन्त्याजानजा देवताः । तथा च श्रुतिः—

"ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आजानजानां देवानामानन्दः" । (तै० आ० ८।२।२)

**कर्मदेवताः**—आजानलोकात्परस्मिन् लोके कर्मदेवता निवसन्ति । येऽग्निहोत्रादि-प्रत्यक्षश्रुत्युपदिष्टानि श्रौतकर्माण्यनुतिष्ठन्ति कर्मदेवास्ते भवन्ति । अस्ति चैतेषामानन्दाधिक्य-माजानजदेवताभ्यः । तथा च श्रुतिः—'ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानां देवानामानन्दः, ये कर्मणा देवानपियन्ति' (तै० आ० ८।२।३)

**आजानदेवताः**—या देवताः कल्पादौ प्रजापतिना सृष्टा आकल्पमजरत्वामरत्वादि-गुणसनाथास्ता आजानदेवताः (सूर्यादयः) ।

सर्गस्य जननादौ तु देवत्वं ये प्रपेदिरे ।
आजानदेवास्तेऽत्र स्युः पूर्वेभ्यः सूक्ष्ममूर्तयः ॥

(बृहदारण्यकभाष्यवार्तिके) इत्युक्तेः । कर्मदेवताभ्यः शतगुणमेतेषामानन्दाधिक्यम् । अत्र श्रुतिः—'ये शतं कर्मदेवानामानन्दाः स एको देवानामानन्दः' (तैत्तिरीयार० ८।२।३) ।

**आजानज-कर्मदेवतासाधारणधर्माः—**

तत्र तावदाजानजकर्मदेवतात्वं परकीयानुग्रहेण तपआदिभिरुपायविशेषैराप्तुं शक्यते । एतासां नियतः स्वर्गावस्थितिकालः कर्मफलमात्रम् । क्षीणे च पुण्ये पुनरपीमां मर्त्यभूमिमापद्यन्ते । एतासां क्षीणपुण्यत्वकाले सदा विकसन्त्यः स्रजो म्लायन्ते । निश्चल-मप्यासनं वेपते स्वयम् । एताः स्वकर्मफलजनितशक्तिमनतिक्रम्य सत्यसङ्कल्पाः निमेष-

जरामरणरहिताः। एतासां देवतानां साधारणभौतिकशरीरवत् "जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति" ( निरु० १।२ ) षड्भावविकारा न भवन्ति, अपि तु आविर्भाव-स्थितितिरोभावा इति त्रय एव। अत एवास्त्येतासां त्रिदशत्वम्। तथा चोक्तम्—

अष्टानां देवयोनीनां यतो जन्म च यौवनम्।
सद्य एव भवेत्तस्मात्सद्य एव च यौवनम्॥
( स्कं० पु० कुमारिकाखंड ४६।३० )।

तत्राविर्भावो नाम देवलोकस्थिततेजःपुञ्जीयपरमाणुसमष्टिभावः। तिरोभावश्च समष्टिभूततेजोऽवयवानां महति तेजःपुञ्जे समवायः।

**आजानदेवता** द्विविधा हविर्भाजः स्तुतिभाजश्च। याः किल यज्ञेषु अग्नावाहुतं हविर्भजन्ते ता हविर्भाजः। याश्च वाङ्मात्रेण स्तूयन्ते ताः स्तुतिभाजः। ये चात्र यास्क-शौनकदुर्गादिभिः सूक्तभाग्-ऋग्भाक्-पादभाग्-निपातभाक्-प्रभृतिभेदा उपन्यस्तास्तेऽत्रैव द्वये सन्निविशन्ते। इतरथा श्रुतिविरोधः स्यात्। तथा च श्रुतिः—"आहुतिभागा वा अन्या देवताः, अन्याः स्तोमभागाश्छन्दोभागास्ता या अग्नावाहुतयो हूयन्ते ताभिराहुतिभागाः प्रीणात्यथ यत्स्तुवन्ति च शंसन्ति च तेन स्तोमभागाश्छन्दोभागाः। उभय्यो हास्यैता देवताः प्रीता अभीष्टा भवन्ति" ( ऐ० ब्रा० ७।८ )

## मनुष्येभ्यो देवतानां वैशिष्ट्यम्

आत्मक्रीडार्थम् "तदैक्षत बहु स्यां प्रजायेय" (छा० ६।२।३ ।) इति कृतसंकल्पात्परब्रह्मणो देवतामयः सर्ग उत्पन्नः। तत्र "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥" (मुं० २।१।४), "देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै" ( तै० सं० २।४।२।४ ), "सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते" ( अ० सं० ११।८।३२ ) इत्यादिश्रुतिपर्यालोचनया मनुष्यचैतन्यं देवताश्रितमेवेति परिज्ञायते।[१] अत एव सत्यपि भूतपञ्चकारब्धे शवशरीरे चैतन्यानुपलब्धिर्देवताविप्रयोगात्तदधिष्ठिते-

---

(१) इन्द्रादग्नेर्यमाद्विष्णोर्धनदादपि भूपते। प्रभुत्वं च प्रभावं च कोपं चैव पराक्रमम्।
आदाय क्रियते नूनं शरीरमिति निश्चयः॥ ( स्कं० पु० कुमारिं० ६।१०।२४ )।

नादचक्रे स्थितः सूर्यो बिन्दुचक्रे च चन्द्रमाः।
लोचने मङ्गलः प्रोक्तो हृदि सोमसुतस्तथा॥
उदरे च गुरुश्चैव शुक्रे शुक्रस्तथैव च।
नाभिचक्रे स्थितो मन्दो मुखे राहुः स्थितः सदा।
पादे नाभौ च केतुश्च शरीरे ग्रहमण्डलम्॥ ( शाक्तानन्दतरङ्गिणी ४ )।

न्द्रियवर्गादिविप्रयोगाच्च। तथा च श्रुतिः—"कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशं ते यदास्मान्मर्त्याच्छरीरात् क्रामन्त्यथ रोदयन्ति तस्माद्रुद्रा इति" (श० ब्रा० ११।६।३।७)।

तत्रेमा देवता व्यष्टिभूतपुरुषपिण्डान्तर्वर्तिन्यः समष्ट्यात्मनो ब्रह्माण्डस्यावयवभूतसूर्यचन्द्रादिदेवतांशसम्बन्धाद्वा विद्योतन्ते। समष्ट्यसम्बन्धिन्या व्यष्टेरकिंचित्करत्वात्।

"मनुष्यधर्मविपरीतो हि देवताधर्म" इत्यभियुक्त( दुर्ग )प्रसिद्ध्या ह्यस्ति मनुष्येभ्यो देवतानां वैलक्षण्यम्।

मनुष्या हि स्वेष्टकार्यनिर्माणे समुचितमुपादानं निमित्तं चेति परस्परविलक्षणं कारणद्वयमपेक्षमाणा दृश्यन्ते, योगर्द्धिसम्पन्ना देवास्तु सङ्कल्पसिद्धिवशात् इच्छामात्रेणैव बाह्यमुपादानमनादाय निमित्तं चानपेक्ष्यैव तत्तत्कार्यमुत्पादयितुं क्षमा इति शास्त्रसिद्धान्तः। तथा चोच्यते—"आत्मजन्मानः। आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधमात्मेषव आत्मा सर्वं देवस्य" (निरु० ७।४)। शारीरकभाष्ये शङ्करभगवत्पादैरपि "कुलालादीनां देवानां च समाने चेनतत्वे कुलालादयः कार्यारम्भे बाह्यसाधनमपेक्षन्ते न देवादयः" इति बाह्यसाधननिरपेक्षत्वं स्ववचनेन स्पष्टं समर्थितम्।

इतो भिन्नं वैलक्षण्यान्तरमपि देवतासु दृश्यते। तथा हि मनुष्येषु पिता पुत्रं जनयतीति पिता प्रकृतिः पुत्रस्य। अथ न पुनरभिलषन्नपि सुतः पितरं जनयितुं प्रभवति। देवतास्तु—"अदितेर्दक्षो अजायत दक्षाद्वदितिः परि" (ऋ० १०।७२।४) इत्यादिश्रुतिभ्यः, "इतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः" (निरु० ७।४), "देवताधर्मेणेतरजन्मानौ स्यातामितरेतरप्रकृती" (निरु० ११।२३) इत्यादिवाक्येभ्यश्चावगम्यते यत् अन्योऽन्यं प्रति कर्मप्रयोजनमुद्दिश्य प्रकृतिर्भवति पिता पुत्रस्य, पुत्रः पितुश्चेति।

ईश्वरा अपि देवता लोकहिताय प्राणिनां फलसिद्ध्यर्थं च सूर्याग्न्यादिविभिन्नरूपेण परमात्मन आविर्भवन्ति-इत्यासां कर्मजन्मत्वमात्मजन्मत्वं चाव्याहतमेव। यद्यपि जगदिदं सर्वमपि परमात्मन एवाविर्भवति तथापि कर्मवशा मनुष्यादयस्तु प्राक्तनकर्मानुरोधेनोद्भवन्तीत्यन्यदपि मनुष्येभ्यो देवतानां वैलक्षण्यम्।

तदत्र दुर्विज्ञेयदेवतातत्त्वविषये किञ्चिदेव दिङ्मात्रेणैवेह दर्शितम्। श्रौता आतिवाहिक्यस्तान्त्रिक्यः पौराणिक्यः बौद्धशास्त्रोक्ता जैनशास्त्राभिमता इत्यादिरूपेण अन्येऽपि भेदा देवतानां प्रदर्शयितुं शक्यन्ते। ते भेदा यथावसरं कदाचिदग्रे विवेचयिष्यन्ते। अद्य पुनरत्रैव विरम्यते।

——

# अथ रुद्रीयम्

लेखकः—पं० अनन्तशास्त्री फडके

अथातो वेदमाश्रित्य रुद्रनामादिविवेचनमारभ्यते। तत्र प्रथमं प्रसिद्धतमे कोशे ( अमरकोशे ) प्रसिद्धानां रुद्रनाम्नां मध्ये यानि वैदिके संहिताभागे लभ्यन्ते तानि स्थलनिर्देशपूर्वकं प्रदर्श्य, ततोऽधुनातनकोशेष्वनुपलब्धानां परन्तु वेदभागे रुद्रनामत्वेन संभाव्यमानानां नाम्नां संकलनं च कृत्वा, श्रीरुद्रविषयकस्य कथाजातस्य पुराणेतिहासवाङ्मये प्राचुर्येणोपलब्धस्य बीजभूतानि वैदिकस्थलानि प्रदर्शयामहे।

प्रथमत आवश्यकमेकं निवेद्यते :—सर्वत्र प्रथमतो यौगिकार्थमुद्दिश्य प्रयुज्यमानानि सर्वाण्यपि पदानि विशेषणरूपाण्येव भवन्ति। ततः प्राचुर्येण प्रयोगे यौगिकार्थं विस्मार्य सर्वथा रूढत्वं प्राप्य विशेष्यरूपत्वमेव विदधतीति सार्वजनीनमेतत्। प्रकृते रुद्रविषयेऽप्येतत्सर्वं समानम्।

एकत्र रुद्रपदयुतान्यप्यनन्तरं केवलं प्रयुज्यमानानि सर्वविभक्त्यन्तानि नामपदानि विशेष्यत्वेनावगन्तव्यानीति स्वीकृत्याग्रिमो विचारः प्रवर्तत इति।

## रुद्रपदनिर्वचनादिकम्

ऋग्वेदादिसंहिताभागे स्थितं रुद्रपदं द्विविधम्, एकं साक्षाद्रुद्रवाचकमपरमग्न्यादिदेवताविशेषणभूतम्। तत्र रुद्रदेवतावाचकं रुद्रपदं द्वितीयगणीयाश्रुविमोचनार्थकरुदधातोर्णिजन्तादेव प्रथमतो निष्पन्नम्। श्रीभगवता यास्केन तु त्रिधा निरुक्तं रुद्रपदम्[1]। तत्र रुद्रदेवताविषये रोदयतेर्निष्पन्नं यास्कबोधितं स्वीक्रियते। उणादिसूत्रमपि सर्वथाऽनुकूलम्[2]। केचन रुद्-धातोरर्थविषये विवदन्ते[3], परन्तु तैत्तिरीयसंहितालोचनेन रुदधातोरश्रुविमोचनार्थकत्वमेव स्वीकार्यमिति प्रतीयते[4]। अत एव यास्केनापि निरुक्तित्रयं प्रदर्श्यार्थनिर्णयार्थं 'यदरुदद्' इति प्रदर्शितम्।

---

( १ ) "रुद्रः रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा, यदरुदत्तद्रुद्रस्य रुद्रत्वम्"। ( नि० १०,७ )

( २ ) 'रोदयतेर्णिलुक् च' ( उणादि सू० पा० २ )

( ३ ) ग्रासमन-पिशेलमहोदयाः पाश्चात्याः। ( ज्ञानको० भा० १ )

( ४ ) "देवासुराः संयत्ता आसन्, ते देवा विजयमुपयन्तोऽग्नौ वामं वसु संन्यदधत, इदमु नो भविष्यति, यदि नो जेष्यन्तीति, तदग्निर्न्यकामयत, तेनापाक्रामत्तद्देवा विजित्यावरुरुत्समाना अन्वायन्तदस्य सहसाऽऽदित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवशीयत

## रुद्रपदयुतानि नामानि ।

( १ ) ईशानः—इदं पञ्चम्यन्तं रुद्रपदघटितं विद्यते[1] । ऋग्वेदतोऽनन्तरं प्रादुर्भूतवैदिक-वाङ्मये विशेष्यरूपतयैवानेकविधं स्वरूपं धृत्वा केवलरुद्रस्यैव वाचकं संपन्नम्* ।

( २ ) उग्रः—इदमपि चतुर्थ्यन्तं रुद्रपदघटितं विद्यते[2] ।

( ३ ) उग्रदेवः—रुद्रवाचकप्रसिद्धपशुपतिमहादेवपदघटितम्[3] । ( विग्रहयुतम् )

( ४ ) कृत्तिवासाः—इदं विग्रहयुतमुपलभ्यते[4]; एतत्पूर्वास्वृक्षु बहुवारं रुद्रपदप्रयोगोऽस्ति ।

( ५ ) कपर्दी—चतुर्थ्यन्तं रुद्रपदयुतं समुपलभ्यते[5] ।

( ६ ) गिरिशः—इदं संबोधनं रुद्रसूक्ते बहुत्रोपलभ्यते ।[6]

( ७ ) त्र्यम्बकः—इदं द्वितीयान्तं, रुद्रपदघटितं केवलमपि ।[7]

( ८ ) पशुपतिः—इदं विग्रहयुतं केवलं चोपलभ्यते, रुद्रपदानि पूर्वत्र परत्र च विद्यन्ते ।[8]

( ९ ) पिनाकी—तथैव ।[9]

( १० ) भवः—इदं चतुर्थ्यन्तं रुद्रपदघटितम् ।[10]

---

( तद्रजतं हिरण्यमभवत् )" ( तै० सं० कां० १ प्र० ५ अनु० १ ) । अत्र यद्यप्यग्नि-विषयकमेतत्तथापि रुद्धातोरर्थनिर्णयार्थमुपयुक्तमेव ।

( १ ) "ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम्" । ( ऋ० अष्ट० २, अ० ७, व० १७, मं० ९ ) ( वा० सं० अ० ३९, ८ )

* अत्र विषये श्री० डा० मङ्गलदेवशास्त्रिभिर्विरचितो विशिष्टो निबन्धो द्रष्टव्यः । ( सरस्वती० स्ट० भाग १० )

( २ ) "रुद्राय च......नम उग्राय च भीमाय च" ( तै० सं० ४,५,८ ); "उग्रश्च भीमश्च ध्वान्तश्च" ( वा० सं० ३९,८ )

( ३ ) "महादेवमन्तः पर्शव्येनोग्रं देवं वनिष्ठुना" ( वा० सं० ३९,८ )

( ४ ) "मृडा जरित्रे रुद्र स्तवानो......कृत्तिं वसान आचर" ( तै० सं० ४, ५, १०, १० )

( ५ ) "इमा रुद्राय तवसे कपर्दिने" ( ऋ० १,८,५,१ )

( ६ ) "या ते रुद्र...शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।" ( तै० सं० ४, ५, १, ५ )

( ७ ) "त्र्यम्बकं यजामहे" ( ऋ० ५, ४, ३०, १२ ); "अव रुद्रमदीमह्यव देवं त्र्यम्बकम्" ( वा० सं० ३, ५८ )

( ८ ) "रुद्राय च...पशुपतये च" ( तै० ४, ५, ५ इ० )

( ९ ) "रुद्र स्तवानः...पिनाकं बिभ्रदागहि" ( तै० सं० ४, ५, १०, १० )

(१०) "नमो भवाय च रुद्राय च" ( तै० सं० ४, ५, ५ )

( ११ ) महादेवः—प्रथमान्तमन्यत्रान्यविभक्त्यन्तमपि ।[१]

( १२ ) मृडः—क्रियाबोधकं 'मृड' इति पदं रुद्रपदयुतं लभ्यते,[२] अतः कल्पितम् ।

( १३ ) शङ्करः—चतुर्थ्यन्तं रुद्रपदघटितम् ।[३]

( १४ ) शम्भुः— " " ।[४]

( १५ ) शर्वः— " " ।[५]

( १६ ) शिवः— " " ।[६]

( १७ ) शितिकण्ठः—रुद्रपदघटितं चतुर्थ्यन्तम् ।[७]

( १८ ) सोमः—लोकप्रसिद्धमिदं चतुर्थ्यन्तं रुद्रपदघटितमन्यविभक्त्यन्तमप्युपलभ्यते ।[८]

एतानि नामानि प्रायः सर्वत्र संहिताभागे रुद्रविषयेऽनेकविभक्त्यन्तान्युपलभ्यन्ते, रुद्रस्यैवैतानि नामानीति बोधनाय रुद्रपदयुतैतन्नामघटितप्रमाणप्रदर्शनप्रयासः संपादितः । अत्र प्रमाणस्थलनिर्देशो दिक्प्रदर्शनाय कृतः, विशेषविचारं तु समयान्तरे प्रदर्शयिष्यामः ।

## अप्रसिद्धानि नामानि

अप्रसिद्धनामानि यद्यपि वैदिकसंहिताभागे समुपलभ्यन्ते; परन्तु पुराणेतिहासयोर्मध्ये विशेषतो रुद्रसम्बद्धभागं परित्यज्य सामान्यरुद्रविषयवर्णने साहित्यादौ च नोपलभ्यन्ते, अतोऽप्रसिद्धानि ।

( १ ) अरुट्—आरोचमानः ( सायणप्रदर्शितोऽर्थः ) ( ऋ० १, ८, ५, ५ "अरुषं कपर्दिनम्" )

( २ ) अर्हन्—योग्यः, सम्बुद्ध्यन्तरुद्रपदयुक्तं पदम् । (ऋ० २,७,१७,१० "अर्हन्निदं दयसे...रुद्र त्वदस्ति" । )

( ३ ) कविः—क्रान्तदर्शी ( सा० ) "त्वेषं कविं" ( ऋ० १, ८, ५, ४ )

( ४ ) क्षयद्वीरः—वीरनाशकः ( सा० ) ( ऋ० १, ८, ५, १ "इमा रुद्राय...क्षयद्वीराय प्रभरामहे मतीः" )

---

(१) "महादेवमन्तः पर्शव्येन" (वा० सं० ३९, ८) "स रुद्रः स महादेवः" (अथर्व० सं० १३,४,४)

(२) "मृडा जरित्रे रुद्र स्तवानः" ( ऋ० २, ७, १८, २ इ० )

(३,४) "नमः शम्भवे च...शङ्कराय च" ( तै० सं० ४, ५, ८ इ० )

(५) "नमो रुद्राय च नमः शर्वाय च" ( तै० ०४, ५, ५ )

(६) "नमः शङ्कराय च...नमः शिवाय च" ( तै० सं० ४, ५, ८ इ० )

(७) "नमो नीलग्रीवाय च शितिकण्ठाय च" ( तै० सं० ४, ५, ५ )

(८) "नमः सोमाय च रुद्राय च" ( तै० सं० ४, ५, ८ )

( ५ ) तवाः—वृद्धवयस्कः ( सा० तवतिर्वृद्ध्यर्थः सौत्रो धातुः ) ( "रुद्राय तवसे" ऋ० १, ८, ५, १ )

( ६ ) त्वेट्—दीप्तः ( सा० ) ( ऋ० १, ८, ५, ४ "त्वेषं वयं रुद्रं यज्ञसाधम्" )

( ७ ) बभ्रुः—जगतः भर्ता ( सा० ) ( ऋ० २, ७, १८, १५ "एवा बभ्रो......। ......रुद्रेह बोधि" )

( ८ ) भिषक्तमः – अतिशयेन भैषज्यकर्ता ( सा० ) ( "भिषक्तमं त्वा भिषजां शृणोमि" ऋ० २, ७, १६, ४ )

( ९ ) मीढुष्टमः—अतिशयेन कामाभिवर्षकः ( सा० ) (तै० सं० रुद्राध्याये ४,५,१० "मीढुष्टम शिवतम")

(१०) मीढ्वा—कामाभिवर्षको नित्यतरुणो वा ( सा० ) ( ऋ० १, ८, ५, ३ "तव रुद्र मीढ्वः" )

(११) यज्ञसाधः—यज्ञस्य साधयिता ( सा० ) ( "रुद्रं यज्ञसाधम्" ऋ० १, ८, ५,४ )

(१२) वज्रबाहुः—आयुधहस्तो रुद्रः ( सा० ) ( "रुद्र श्रियासि । वज्रबाहो" ऋ० २, ७, १६, ३ )

(१३) वृषभः—कामानां वर्षिता ( सा० ) ( ऋ० २, ७, १८, १५ एवा बभ्रो वृषभ रुद्रेह बोधि । )

(१४) शिपिविष्टः—विष्णुमूर्तिधारी ( सा० ) ( तै० सं० ४, ५, ५ "नमो गिरिशाय च शिपिविष्टाय च" )

(१५) सहस्राक्षः –इन्द्रमूर्तिधारणेन सहस्राक्षः ( सा० ) ( तै० सं० ४, ५, ५ "नील-ग्रीवाय .....सहस्राक्षाय" )

इत्यादीनि बहूनि रुद्रसम्बन्धीन्यप्रसिद्धानि नामानि तै० सं० ४, ५, ४-७ अनुवाकेषु तथान्यत्रापि विद्यन्ते । दिक्प्रदर्शनार्थमत्रोदाहृतानीति ।

## अथ कथासूचकानि नामपदानि

( १ ) अर्धकघाती –सेनार्धघाती । "सेनाया अर्धं हन्तुं शीलं यस्य" ( सा० )[१] । इदमेव भारतादिष्वन्धकघातिरूपेण पठ्यमानं कदाचिदन्धकासुर-नाशकथासूचकं स्यादिति ।

---

(१) "रुद्रेणार्धकघातिना तेन मा समरामहि ।" ( अथर्व सं० ११, २, ७ )

( २ ) अर्हन्—योग्यः ( सा० ) कदाचिदेतदेव पदं रुद्रविशेषणं दृष्ट्वा पुराणेषु पाषण्ड-मताश्रयिणः रुद्रभक्ता इत्यादिमतं यज्ञीयाश्वहरणमिन्द्रकृतं विस्मृत्य प्रवृत्तं भवेत्[१] ।

( ३ ) कृत्तिं वसानः—व्याघ्रचर्ममात्रं परिदधानः ( सा० ) कदाचिदेतदेव विशेषणं दृष्ट्वा गजरूपधारिणं राक्षसं हत्वा तच्चर्म धृतवान् रुद्र इति कथा प्रचलिता स्यात्[२] ( पद्म० स्वर्गखं० ३४ )

( ४ ) गर्तसद्—गर्तो रथस्तत्र सीदन् ( सा० ) एतदेव विशेषणं कदाचिद्गर्तपदस्य श्मशानार्थं स्वीकृत्य रुद्रः श्मशानवासीतिकथाप्रबोधकं स्यात् ।[३]

( ५ ) गाथपति :—वाक्पतिः । "(गाथेतिवाङ्नाम गाथा गणः इति तन्नामसु पठितत्वाद् वाग्रूपायाः स्तुतेः पतिर्गाथपतिः" ( सा० )[४] इदं रुद्रविशेषणमा· लम्ब्यैव रुद्रः सर्वविद्याधिपतिरिति कथा प्रचलिता भवेत् ।

( ६ ) गिरित्रः—पर्वतत्राणकर्ता । "गिरिं कैलासाख्यं त्रायते पालयतीति गिरित्रः" ( सा० ) एतद्रुद्रविशेषणं रावणचालितं पर्वतं संरुध्य रावणाय दण्डं प्रदायोपकृतवान् शिव इतिकथाकारणं स्यात् ।[५]

( ७ ) गिरिशः—गिरिवास्तव्यः । "गिरौ कैलासे शेते तिष्ठतीति गिरिशः" ( सा० ) कैलासवास्तव्यः शिव इति कथाबीजं संभवति ।[६]

( ८ ) तारः— काश्यादितीर्थेषु मरणसमये शिवो मन्त्रोपदेशेन संसारात्तारयतीति तारकेश्वरेत्यादिकथासंसूचकम् ।[७]

( ९ ) दरिद्रत्— लक्ष्मीरहित-दिगम्बर-दारिद्र्ययुतेत्यादि कथाबीजम् ।[८]

(१०) दूतः—देव्याः दूतत्वं स्वीकृत्य गतवानितिकथासूचकम् ।[९]

(११) देवश्रेष्ठः—एतद्रुद्रस्य देवश्रेष्ठत्वं महादेवत्वं सूचयति ।[१०]

---

(१) "अर्हन्निदं दयसे...रुद्र त्वदस्ति ।" ( ऋ० २, ७, १७, १० )

(२) "कृत्तिं वसान आचर पिनाकम्"...( तै० सं० ४, ५, १० )

(३) "स्तुहि श्रुतं गर्तसदं युवानम्" ( ऋ० २, ७, १६, ११ ), "श्मशानसञ्चयोऽपि गर्त उच्यते" यास्कः ३, ५ )

(४) "गाथपतिं मेधपतिं रुद्रम्" ( ऋ० १, ३, २७, ४, )

(५) "शिवां गिरित्र तां कुरु" ( तै० सं० ४, ५, १ )

(६) "गिरिशाच्छा वदामसि" ( तै० सं० ४, ५, १ )

(७) "नमस्ताराय नमः शंभवे च" ( तै० सं० ४, ५, ८ )

(८) "दरिद्रन्नीललोहित" ( तै० सं० ४, ५, १० )

(९) "नमो दूताय च" ( तै० सं० ४, ५, ७ )

(१०) "श्रेष्ठो देवानां वसुः" ( ऋ० सं० १, ३, २६, ५ )

(१२) द्विबर्हाः— द्वयोः स्थानयोः बर्हते-प्रवर्धते इति (सा०), एतन्मेरु-कैलासनिवासीति कथाकारणं स्यात्।[1]

(१३) नीलग्रीवः—विषपानकरणेन नीलकण्ठः संजात इति कथासूचकम्।[2]

(१४) बभ्लुषः—वृषभवाहनकथासूचकम्।[3] बिभर्ति रुद्रमिति बभ्रुर्वृषभः...... तस्मिन्तिष्ठतीति बभ्लुशः। (सा०)

(१५) पशुपतिः—वृषभवाहनकथासूचकम्।[4]

(१६) बुध्नियः—बुध्ने वृक्षादिमूले (बिल्वादिवृक्षमूले) तिष्ठतीति कथासूचकम् संभवति।[5]

(१७) मखहा—दक्षयज्ञनाशकथाबीजम्।[6]

(१८) मीढुष्टमः—अतिकामफलदाता, पार्वत्यादिप्रदानकर्तेत्यादिकथासूचकम्।[7]

(१९) यज्ञसाधः—सर्वविष्णुप्रभृतिदेवस्तुतः सन् दक्षयज्ञसाधक इति कथासूचकम्।[8]

(२०) रुद्रः—रोदनकर्त्रेऽस्मै बहुस्थान-भार्या-नामानि पित्रा ब्रह्मणा दत्तानीतिकथा-बीजम्।[9]

(२१) शिपिविष्टः—कदाचित्संभवति विष्णुशिवाभेद-हरिहर-क्षेत्र-मूर्त्यादिकथाभाग-सूचकम्।[10]

(२२) स्रोतस्यः—गङ्गादिस्रोतोधारणकथासूचकं संभवति।[11]

(२३) क्षयद्वीरः—ब्रह्ममस्तकभेदनदक्षमस्तकभेदनकथासूचकं संभवति।[12]

---

(१) "नः शर्म यच्छ द्विबर्हाः" (ऋ० १, ८, ६, १०)

(२) "नमो नीलग्रीवाय च शितिकण्ठाय च" (तै० सं० ४, ५, ५)

(३) "नमो बभ्लुशाय विव्याधिने" (तै० सं० ४, ५, २)

(४) "पशूनां पतये नमः" (तै० सं० ४, ५, २)

(५) "बुध्नियाय च नमः सोम्याय च" (तै० सं० ४, ५, ६) "परमे वृक्षे आयुधं निधाय" (तै० सं० ४, ५, १०, १०)

(६) "नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहि" (तै० सं० ३, २, ४, २)

(७) "मीढुष्टम शिवतम" (तै० सं० ४, ५, १०)

(८) "त्वेषं वयं रुद्रं यज्ञसाधम्" (ऋ० सं० १, ८, ५, ४)

(९) "नमस्ते रुद्र मन्यवे" (तै० सं० ४, ५, १ इ०) ऋग्वेदादिषु सर्वत्रेदं पदमुपलभ्यते।

(१०) "नमो गिरिशाय च शिपिविष्टाय च" (तै० सं० ४, ५, ५)
"किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टोऽस्मि" (ऋ० सं० ५, ६, २५, ६)
'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः" (यास्कः ५, ८)

(११) "नमः स्रोतस्याय च द्वीप्याय च" (तै० सं० ४, ५, ५)

(१२) "इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय..." (ऋ० १, ८, ५, १)

इत्यादीनि बहूनि पदानि बहुकथासूचकानि विद्यन्ते तानि सति प्रसङ्गे तत्तत्पुराणस्थकथा-सूचकस्थलोद्घाटनपूर्वकमन्यत्र प्रदर्शयिष्यामः। अत्र दिक्प्रदर्शनमात्रं कृतम्।

## कथासूचकानि कर्माणि

रुद्रस्यानेककर्माण्यनेककथासूचकानि भवन्ति यथा—

(१) चन्द्रधारणम्—"सर्वा नक्षत्रा वशे चन्द्रमसा सह" (अथर्वसं० १३, ४, २८)

(२) त्रिपुरराक्षसनगरत्रयनाशकरणम्—"तेषामसुराणां तिस्रः पुर आसन्... ..ता देवता जेतुं नाशक्नुवन्त......ता रुद्रोऽवासृजत्स तिस्रः पुरो भित्त्वा... सर्वेभ्यो लोकेभ्योऽसुरान्प्राणुदत"। (तै० सं० ६, २, ३, १-२)

(३) गङ्गायाः स्वर्गादानयनम्—(ऋ० ८, ४, २३, ५) "प्र रुद्रेण ययिना यन्ति सिन्धवस्तिरो महीमरमतिं दधन्विरे"

(४) भैरवरूपेण श्वपालनादिकम्—"नमः श्वभ्यः श्वपतिभ्यः" (तै० सं० ४, ५, ४)

इत्यादीनि बहुकथासूचकानि क्रियावर्णनान्युपलभ्यन्ते। तानि सर्वाण्यपि वेद-सूत्र-स्मृति-इतिहास-पुराण-दर्शन-तन्त्र-आगम-साहित्य-शिष्टव्यवहार-शिल्प-भूखननज-प्राप्तप्रकारभेदेन नैकविधरुद्रवर्णनप्रसङ्गेन क्रमशोऽत्र सति संभवे प्रदर्शयिष्यामः।

—

# वेदकालीन हिन्दुविवाह

लेखक—पं० कुन्दनलाल शर्मा

भारतीय परम्परा के भण्डार महाभारत में कहा गया है कि विवाह की मर्यादा महर्षि उद्दालक के पुत्र श्वेतकेतु ने स्थापित की थी। उससे पूर्व विवाह की प्रथा नहीं थी। यहाँ तक कि महाभारत के समय भी उत्तरकुरु आदि कई देशों में स्त्री-पुरुष अनर्गल विचरते थे। वहाँ लिखा है :—

अनावृताः किल पुरा स्त्रिय आसन् वराननें।
कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि ॥ ४ ॥
तासां व्युच्चरमाणानां कौमारात् सुभगे पतीन्।
नाधर्मोऽभूद् वरारोहे स हि धर्मः पुराऽभवत् ॥ ५ ॥
प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः।
उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते ॥ ७ ॥
अस्मिंस्तु लोके न चिरान्मर्यादेयं शुचिस्मिते।
स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ॥ ११ ॥
बभूवोद्दालको नाम महर्षिरिति नः श्रुतम्।
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ॥ १२ ॥
मर्यादेयं कृता तेन धर्म्या वै श्वेतकेतुना ॥ १३ ॥
तदा प्रभृति मर्यादा स्थितेयमिति नः श्रुतम् ॥ ४४ ॥

( महाभारत १, १२८ )

अर्थात्—पहले स्त्रियाँ अविवाहिता रहकर कामचारिणी होती थीं। उत्तरकुरु में आज तक यही सनातनधर्म चला आ रहा है। हमारे देश में विवाह की मर्यादा श्वेतकेतु ने स्थापित की है।

इस वचन के रहते भी वेद में ऐसा कोई प्रमाण नहीं मिलता जिससे इसकी पुष्टि हो सके। वैदिक समय में विवाह न केवल स्थापित ही हो चुका था, अपि तु धार्मिक बन्धन बन चुका था। प्रत्येक आर्य का धर्म था कि वह अवश्य ही विवाह करे। ब्राह्मणों के अनुसार तो "अयज्ञो वा एषः। योऽपत्नीकः" ( तै० ब्रा० २, २, २, ६ );

=अपत्नीक यज्ञ के योग्य नहीं। वैदिक आर्य एक जीती-जागती रणवीर जाति थी। आर्यों को सदा दस्युओं के साथ संग्राम में लिप्त रहना पड़ता था। वह सदा प्रार्थना करते थे :—

"उदसौ सूर्यो अगादुदिदं मामकं वचः।
यथाहं शत्रुहोऽसान्यसपत्नः सपत्नहा।" (अथर्व-वेद १।२९।५)

अर्थात्—उधर सूर्य का उदय होता है। इधर मेरी वाणी पुकार उठती है कि मैं शत्रुओं का संहार करके निःसपत्न हो जाऊँ।

उनका उद्देश्य था :—

"ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम॥"
(ऋग्० १०।१२८।१; अथर्व० ५।३।१; तै० सं० ४।७।१४।१)

अर्थात्—हे अग्निदेव! संग्राम में हिम्मत मेरा साथ दे। हम देदीप्यमान होकर शक्तिशाली बनें! चारों दिशाएँ हमारे सामने शिर झुकायें। तेरी अध्यक्षता में युद्ध में हमारी विजय हो।

ऐसे दिग्विजय के लिए उन्हें वीरपुत्रों की आवश्यकता थी। इसी लिए हम उन्हें विवाह के समय ही प्रार्थना करते हुए पाते हैं—"दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" (ऋग्० १०।८५।४५); अर्थात्—हे इन्द्रदेव! इस स्त्री को दश पुत्र दो। ग्यारहवाँ इसका पति होवे।

इसलिये विवाह सबके लिए वाञ्छित था। यद्यपि ऐसी ऐसी कुमारियों का भी उल्लेख मिलता है जो पिता के घर ही बूढ़ी हो जाती थीं ('अमाजूः' ऋग्० २।१७।७), तो भी उनकी स्थिति विशेष होती थी। जैसे ऋग्वेद १०।३९ तथा १०।४० की ऋषि घोषा साठ वर्ष तक चर्मरोग के कारण अनूढा ही पिता के घर रही। "आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा। उवास षष्टिं वर्षाणि पितुरेव गृहे पुरा॥"(बृहद्देवता ७।४२; देखो ऋग्वेद १।११७।७ और उस पर सायण; नीतिमञ्जरी पृष्ठ १०५), अर्थात्—कक्षीवान् की कन्या घोषा चर्मरोग के कारण पिता ही के घर रही। अभ्रातृमती कन्याओं का विवाह होना भी कठिन था। "अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः" (श्रुति, निरुक्त ३।४ द्वारा उद्धृत; स्वल्प पाठान्तर से अथर्व० १।१७।१) इस पर यास्क लिखते हैं—"इत्यभ्रातृकाया अनिर्वाह औपमिकः"। अर्थात्—इस उपमा से भ्रातृहीन कन्या के विवाह का न होना बताया गया है। इस कठिनाई का कारण यह था कि भ्रातृहीन कन्या को पुत्रिकाधर्म का पालन करना पड़ता था। उसका पुत्र अपने नाना की सन्तान समझा जाता था। उसके वंशज कहलाने और पिण्डदानादि करने का पूर्णदायित्व नाती पर ही होता था। ऋग्वेद में कहा है :—

"शासद्वह्निर्दुहितुर्नप्त्यङ्गाद् विद्वान् ऋतस्य दीधितिं सपर्यन् ।"

( ऋग्० ३।३१।१; नि० ३।४ )

अर्थ—जामाता को वस्त्रालङ्कारादि से प्रसन्न करके अभ्रातृका कन्या का पिता दौहित्र को पौत्र बना लेता है। ( सायण; देखो यास्क नि० ३।४ )। अभ्रातृमती कन्या से विवाह का निषेध ब्राह्मण भी करता है—"नाभ्रात्रीमुपयच्छेत्तत्तोकं ह्यस्य भवतीति भाल्लविनां श्रुतेः" ( बालक्रीडा १।५३ )। अर्थात्—"भाल्लवियों के अनुसार अभ्रातृका से विवाह न करे क्योंकि उसका पुत्र अपने नाना का होता है।" वसिष्ठस्मृति के अनुसार पुत्रहीन पिता जामाता से शर्त करता है—"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति।" ( १७।१८ )। अर्थात् "मैं अभ्रातृका कन्या सालङ्कार तुम्हें दूँगा ताकि इससे जो पुत्र उत्पन्न हो वह मेरा पुत्र होवे।" यह शर्त पहले ही कर ली जाती थी—"पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिञ्चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्य।" (गौ० ध० सू० २८।१८)। अर्थात्—"पुत्रहीन पिता अग्नि और प्रजापति को आहुति देकर ( जामाता से ) 'इसका पुत्र मेरा पुत्र होगा' ऐसी शर्त करके कन्या का दान करे।" मनु ने भी कहा है "अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्" (६।१२७)। मनु महाराज ने अभ्रातृका कन्या से विवाह का भी निषेध किया है—"यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥" ( मनु० ३।११ ) अर्थात्—"जिस कन्या का भ्राता न हो उससे पुत्रिका होने की शङ्का से विवाह न करे। जिसके पिता का ज्ञान न हो उसे अधर्म की शंका से न विवाहे।" ( कुल्लूक;—तुलना करो मेधातिथि से )। विवाह पर इस कड़े प्रतिबन्ध के कारण भ्रातृहीन कन्याएँ दुश्चरित्रा हो सकती थीं। वेद उपमा देता है "अभ्रातरो न योषणो व्यन्तः" (ऋग् ४।५।५) = "जैसे भ्रातृहीन कन्याएँ कुमार्ग पर चलने लगती हैं।"

## विवाह के भेद

गृह्यसूत्रों और धर्मसूत्रों में विवाह के आठ भेदों का वर्णन मिलता है।

ब्राह्म, दैव, प्राजापत्य, आर्ष, गान्धर्व, आसुर, पैशाच और राक्षस। ( आश्व० १।६।१; देखो मनु० ३।२७–३४; याज्ञ० स्मृ० १।५८–६१; बौधायनधर्मसूत्र १।११।२–६; आप० ध० सू० २।११।१७–१२।२ )। इनमें से ब्राह्म और प्राजापत्य में इतना सूक्ष्मभेद है कि आपस्तम्ब ने प्राजापत्य को पृथक् नहीं गिना है ( आप० ध० २।११।१७–१२।२ )। ऐसे ही आर्ष और आसुर में इतना सूक्ष्म भेद है कि बहुत से विद्वान् आर्ष को आसुर का ही संशोधित रूप मानते हैं (डाक्टर आल्तेकर—The Position of Women in Hindu Civiliza-

tion, P. 53 ) और इसी कारण मनु को भी इनका भेद बतलाने का विशेष प्रयत्न करना पड़ा ( मनु ३।५३ )। जहाँ बौधायनादि ने पैशाच विवाह को भी आठ भेदों के अन्तर्गत स्थान दिया है, वहाँ आपस्तम्ब और वसिष्ठ ने इसे गर्हित समझ कर त्याग दिया (बौधा० ध० १।११।६; आप० ध० २।११।१७–१२।२; देखो Dr. Bühler, Int, S.B.E., Vol II, P.XX)। इन सब प्रभेदों का यद्यपि ऐतिहासिक तथा समाजशास्त्र की दृष्टि से बड़ा भारी महत्त्व है, तो भी आजकल हिन्दुसमाज में प्रायशः ब्राह्म अथवा कहीं कहीं आसुर विवाह के ही प्रचलित होने के कारण बाक़ी सबका विशेष महत्त्व नहीं रह गया है। ( विस्तार के लिये देखो डा० आल्तेकर, पृ० ४१–५७)। वेद में यद्यपि इन प्रभेदों का नामतः उल्लेख नहीं पाया जाता तो भी आर्ष, प्राजापत्य, दैव, गान्धर्व, राक्षस आदि अनेक प्रकार के विवाहों का सङ्केत मिलता है। उनमें विशेष उल्लेखनीय और सारे हिन्दु इतिहास में अपने ढङ्ग का एक ही उदाहरण पुरूरवा उर्वशी का अभिसन्धिपूर्वक सामयिक विवाह है। उर्वशी ने पुरूरवा से शर्त कर ली थी कि जब भी वह उसे नंगा देख लेगी वह गन्धर्वों के पास वापिस लौट जायगी।

आख़िर गन्धर्वों की चालाकी से एक रात को उर्वशी ने पुरूरवा को नङ्गा देख लिया और ग़ायब हो गई ( श० ब्रा० ११।५।१।१; वेदार्थदीपिका ऋग् १०।९५; बृहद्देवता ७।१४७–१५२; नीतिमञ्जरी पृ० ३२५–३२८; सायण ऋग् १०।९५ )। ऐसा विवाह शायद दूसरा हिन्दु समाज में नहीं हुआ। सम्भव है, उस समय किसी अनार्य जाति में ऐसे विवाह भी होते हों जिन्हें देखकर ऋषियों ने ऐसी कल्पना की हो। ( उर्वशी और पुरूरवा के स्वरूप पर देखो Max Müller, Chips, Vol IV, P. 109 f. )

## स्वयंवर

यह एक ग़लत और सर्वथा भ्रमात्मक विचार फैलाया जा रहा है कि "वैदिक साहित्य माता पिता द्वारा सन्तान के विवाह के नियन्त्रण की ओर सङ्केत नहीं करता, यद्यपि उसका प्रबन्ध करने तथा आर्थिक सहायता देने में उनका महत्त्वपूर्ण भाग होता था" ( डा० आल्तेकर पृ० ७७ ) और कि "युवतियाँ सामान्यतः अपना वर चुनने में स्वतन्त्र थीं, यद्यपि वह स्वतन्त्रता माता-पिता की अनुमति द्वारा नियन्त्रित थी" ( बी० एस० उपाध्याय Women in Ṛgveda, P. 46; देखो Ṛgvedic Culture, by A. C. Das, P. 371,372 ) वैदिक साहित्य इस विषय पर इतना स्पष्ट और प्रामाणिक है कि इन विद्वानों को अपने मत को स्थिर करने में बड़ी कठिनाई का सामना करना पड़ता है। महाशय मेक्डानेल और कीथ इस विषय पर लिखते हैं—"At any rate it is not clear that either the father or the mother controlled the marriage of son or daughter of mature age, though no donbt the parents or parent arranged a suitable

match." ( Vedic Index I, P. 482 ) अर्थात्—"कुछ भी हो, यह स्पष्ट नहीं है कि नौजवान कन्या अथवा पुत्र के विवाह का नियन्त्रण माता पिता करते थे। यद्यपि इसमें सन्देह नहीं कि वे बहुधा योग्य वर वधू का प्रबन्ध अवश्य करते थे।" आप देखें कि यह तीनों वाक्य "यद्यपि" द्वारा परिवेष्टित हैं। उपाध्याय जी कुछ ही पंक्तियाँ आगे चलकर लिखते हैं "किन्तु प्रायशः यह एक नैष्ठिक तथ्य है कि साधारणतया पिता अथवा भ्राता कन्या के लिए योग्य वर तलाश करता था।" (पृ० ४७)। हम नहीं समझ सके कि पहले वाक्य के "सामान्यतः" ( Ordinarily ) और दूसरे के "साधारणतया" ( Normally ) में क्या अन्तर है। वास्तव में इस सब व्यामोह का मूल कारण एक "सन्दिग्धार्थ" ( Vedic Index II, P. 429 ) शब्द "समन" है। और इन सब कल्पनाओं के आदिप्रवर्त्तक प्रतीच्य विद्वान् पिशेल ( Pischel) हैं। उन्होंने "समन" का अर्थ किया है "उत्सव", जहाँ पर अन्य खेलतमाशों के अतिरिक्त "नवयुवतियाँ तथा प्रौढा स्त्रियाँ पति खोजने जाया करती थीं" (Vedic Index II, P.429)। हम समझते हैं कि 'समन' शब्द आज भी उतना ही 'सन्दिग्धार्थ' है जितना कि Vedic Index में उपर्युक्त वाक्य लिखे जाने के समय था। सायण ने अनेक स्थलों पर इसका अर्थ 'यज्ञ' किया है। अतः जब तक इस पर और अधिक खोज नहीं हो जाती और निश्चित तौर पर 'समन' का अर्थ निर्धारित नहीं हो जाता, इसके आधार पर कोई कल्पना करना उचित नहीं है। अस्तु, अब हम डा० आल्तेकर के इस कथन की जाँच करते हैं कि "वैदिक साहित्य माता-पिता द्वारा सन्तान के विवाह के नियन्त्रण की ओर संकेत नहीं करता"।

ऋग्वेद में कहा है "पिता यत्र दुहितुः सेकमृञ्जन् संशग्म्येन मनसा दधन्वे" (३।३१।१) अर्थ—"पिता दुहिता के वर का प्रबन्ध करके मन में बड़ा सुखी होता है।" और देखिए, "सूर्यां यत्पत्ये शंसन्तीं मनसा सविता ददात्" ( ऋग्० १०।८५।९ ) अर्थात् "सूर्य देव ने पतिकामा सूर्या को ( सोम के लिये ) देने का सङ्कल्प किया।" यहाँ भी पिता ने ही कन्या के वर को देने का निश्चय किया है। जैसा कि ऊपर कह चुके हैं, अभ्रातृका कन्या का पिता विवाह से पहले जामाता से वचन ले लेता था कि कन्या का पुत्र उसका वंशज कहलाने का अधिकारी होगा। अब यदि युवतियाँ 'समनों' के अवसरों पर केवल अपने रूप-लावण्य और हाव-भाव के बल पर ही पति खोजने में स्वतन्त्र होतीं तो भ्रातृहीन कन्याओं को विवाह करने में इतनी कठिनाई न होती कि उनका 'हतवर्त्मत्व' उपमान बन जाता और वेद को कहना पड़ता "अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः"। स्वयं डाक्टर आल्तेकर के अनुसार वैदिक काल के नवयुवक भ्रातृहीन कन्या और उसकी जायदाद दोनों को अस्वीकार कर देते थे (P. 282)। इसके अतिरिक्त गुणहीन जामाता ( विजामाता ) कन्या के पिता को धन से सन्तुष्ट करके विवाह कर सकता था। वेद में स्पष्ट कहा है "अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्।"

( ऋग्० १।१०६।२ ) अर्थात् "हे इन्द्राग्नि! मैंने सुना है आपने इससे भी अधिक धन दिया जितना कि एक विजामाता ( श्वशुर को ) अथवा साला बहनोई को देता है।" यदि पिता धन के लोभ में आकर कन्या को गुणहीन जामाता के हवाले कर सकता था तो यह कदापि नहीं कहा जा सकता कि कन्या अपना वर चुनने में स्वतन्त्र थी और माता-पिता का अधिकार अनुमति मात्र ही देना शेष रह जाता था। ब्राह्मण का वचन है "सा ( सुकन्या ) होवाच यस्मै मां पितादान्नैवाहं तं जीवन्तं हास्यामीति" (श० ब्रा० ४।१।५।६)। सुकन्या ने कहा "मेरे पिता ने मुझे जिसके हवाले किया है उसके जीते जी मैं उसे नहीं छोड़ूँगी।" इन सब प्रमाणों से स्पष्ट है कि वास्तव में माता-पिता ही सन्तान के विवाह का प्रबन्ध करते थे और विशेषतः कन्या तो इस विषय में सर्वथा माता-पिता अथवा भ्राता के अधीन थी। स्वयंवर केवल क्षत्रियों तक और वह भी भाग्यशाली घरानों विशेषतः राजाओं तक ही सीमित था। ऋग्वेद में कहा है "भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित्।" ( १०।२७।१२ ) अर्थात्—"जो स्त्री रूपवती तथा भाग्यशालिनी होती है वह अपना पति स्वयं चुन लेती है।"

इतिहास इस बात का साक्षी है कि सावित्री, दमयन्ती, रुक्मिणी आदि जिन जिन कुमारियों ने स्वयं वरण किया था वे सब राजकन्याएँ थीं। कमद्यू (अथवा शुन्ध्यु) ने विमद ऋषि को स्वयं वरण किया था ( सायण, ऋग्० १।११६।१; १।११२।१६; १।११७।२०; १०।३६।७; १०।६५।१२ )। वह राजा पुरुमित्र की कन्या थी। दर्भ के पुत्र राजा रथवीति की कन्या पर श्यावाश्व के मुग्ध हो जाने पर उसके पिता अर्चनानाः ने राजा से कन्या को अपनी पुत्रवधू बनाने का प्रसङ्ग चलाया। राजा ने कन्या से न पूछकर अपनी रानी से पूछा। रानी ने श्यावाश्व से कन्या का विवाह करने से साफ़ इनकार कर दिया; क्योंकि वह राजर्षिकुल में उत्पन्न हुई थी। अतः उसकी पुत्री का विवाह ऋषि के अतिरिक्त अन्य किसी से होना संभव नहीं था। अन्त में फिर जब विवाह हुआ भी तो माता-पिता की मर्ज़ी से ही हुआ ( बृहद्देवता ५।५०—८०; सायण ऋग् ५।६१; नीतिमञ्जरी पृ० १८६–१६२ )। इससे और भी स्पष्ट हो जाता है कि कन्या का विवाह सर्वथा माता-पिता के हाथ में था और कि राजाओं में भी सब में स्वयंवर की प्रथा नहीं थी। सीताजी तथा द्रौपदी के विवाह को स्वयंवर कहना बड़ी भारी भूल है। उनका पति के वरण में तनिक भी हाथ नहीं था। जो कोई भी शर्त पूरी कर देता उन्हें उसी के गले का हार बनना ही पड़ता। रघुवंश में स्वयंवर का सबसे उत्तम उदाहरण कालिदास ने इन्दुमती के विवाह के अवसर पर पेश किया है। अतः सिद्ध होता है कि वैदिककाल में भी स्वयंवर की प्रथा सर्वसाधारण नहीं थी।

## विवाह की आयु

वैदिककाल में विवाह युवकों और युवतियों में ही होता था। समस्त ऋग्वेद में बालविवाह का एक भी उदाहरण नहीं मिलता। प्राचीन गृह्यसूत्रों तथा धर्मसूत्रों में यद्यपि

स्पष्टतया आयु का निर्देश नहीं किया गया तो भी जैसा हम आगे चलकर देखेंगे अल्पायु कन्या के विवाह का प्रतिपादन सामान्यतः नहीं किया गया। सूर्या-सूक्त में कहा है—"सोमो वधूयुरभवदश्विनास्तामुभा वरा। सूर्यां यत्पत्ये शंसन्तीं मनसा सविता ददात्॥" (ऋग् १०।८५।६) अर्थात्—"जब पतिकामा ('पर्याप्तयौवनामित्यर्थः' सायण) सूर्या को वधूकामी सोम को देने का सविता ने सङ्कल्प किया तब दोनों अश्विदेव वर बने थे।" सायण ने स्पष्ट 'पर्याप्तयौवनाम्' ऐसा अर्थ किया है। अथर्ववेद में 'कामिनीमनोऽभिमुखीकरण' नाम का प्रयोग आता है। उस प्रयोग में युवा इस मन्त्र को पढ़ता है "एयमगन्पतिकामा जनिकामोऽहमागमम्। अश्वः कनिक्रदद्यथा भगेनाहं सहागमम्।" (अथर्व २।३०।५)। अर्थ—"यह पतिकामा आ गई, इधर मैं पत्नीकामी आ गया।........" (सायण)। ऐसा प्रयोग सकाम युवक ही कर सकता है। इसके अतिरिक्त विवाह में कन्या को आशीर्वाद दिया जाता था—"सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव। ननान्दरि सम्राज्ञी भव सम्राज्ञी भव देवृषु।" (ऋग्० १०।८५।४६) अर्थात्—"तू श्वशुर, सास, ननद, देवर सबके ऊपर सम्राज्ञी होवे।" बाल्यावस्था में शासन करना तो दूर रहा उल्टा शासित होना पड़ता है। यदि सम्राज्ञी के समान सम्मान-प्राप्ति में विवक्षा की जाय तो वह भी युवती में चरितार्थ हो सकती है, बालिका में नहीं। कह सकते हैं कि आशीर्वाद भविष्य में चरितार्थ हो जायगा। अतः एक और प्रमाण देते हैं। गृह्यसूत्रों में विवाह के चौथे दिन रात्रि को विवाहशेष चतुर्थीकर्म का विधान है। "चतुर्थ्यामपररात्रे......जुहोति" (पार० गृ० १।११।१)। उस पर जयराम लिखते हैं "चतुर्थ्याम् = चतुर्थेऽहनि"। और देखिये "अथ चतुर्थीकर्म" (गोभिल गृ० २।५।१)। तर्कालङ्कार व्याख्या में कहते हैं "......तस्मादनुमिनुमो विवाहाच्चतुर्थे दिने रात्रावयं होम इति।" अतः यह निश्चित हुआ कि चतुर्थीकर्म विवाह के चौथे दिन होना चाहिये। तत्पश्चात् अगले दिन अथवा जब रजोदर्शन होकर शुद्धि हो जाय अभिगमन प्राप्त होता है। "तामुदुह्य यथर्तु प्रवेशनम्" (पार० गृ० १।११।७) "यथा कामी वा......" (१।११।८) "एवं पूर्वोक्तेन प्रकारेण तां वधूमुदुह्य विवाह्य विवाहकर्मणा भार्यात्वं सम्पाद्य यथर्तुप्रवेशनम् ऋतुकालमृतुकालम् प्रवेशनमभिगमनं कुर्यादिति शेषः। "यथाकामी वा" "स्त्रियाः काममनतिक्रम्य यथाकामं तदस्यास्तीति यथाकामी वा भवेन्न ऋतुकालाभिगमननियमः" इति हरिहरः। पारस्कर १।८।२१ पर भाष्य करते हुए हरिहर इस विषय पर स्पष्ट कहते हैं "संवत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयणेऽपि चतुर्थीकर्मानन्तरं पञ्चम्यादिरात्रावभिगमनम्। चतुर्थीकर्मणः प्राक् तस्या भार्यात्वमेव न संवृत्तम्। विवाहैकदेशत्वाच्चतुर्थीकर्मणः।" यहाँ पञ्चम्यादिरात्रौ यह शब्द ध्यान देने योग्य है। इससे स्पष्ट प्रतीत होता है कि कन्या विवाह के समय अभिगमन योग्य होनी चाहिए। गोभिलाचार्य कहते हैं "ऊर्ध्वं त्रिरात्रात्सम्भव इत्येके" (२।५।७)। अर्थात् "किसी किसी के मत में चतुर्थीकर्मानन्तर तीन दिन के बाद चौथे दिन गर्भाधान का काल है।" किन्तु उन्हें यह मत मान्य

नहीं। उनके अनुसार चतुर्थी के पश्चात् "यदर्तुमती भवत्युपरतशोणिता तदा सम्भवकालः" (२।५।८)। इससे स्पष्ट है कि गोभिलाचार्य के अनुसार भी विवाह के समय कन्या पूर्ण युवावस्था में होनी चाहिए (गो० गृ० २।५।७ की व्याख्यान्तर के लिए देखो तर्कालङ्कार तथा भट्टनारायण और उस पर चिन्तामणि भट्टाचार्य)। गोभिलाचार्य ने इसके अतिरिक्त कन्या के बारे में कहा है 'नग्निका तु श्रेष्ठा' (३।४।६)। इस पर आगे विचार करेंगे।

ऋग्वेद का मन्त्र है "उपोप मे परामृश मा मे दभ्राणि मन्यथाः। सर्वाहमस्मि रोमशा गन्धारीणामिवाविका॥" (ऋग० १।१२६।७) बृहस्पति की कन्या अपने पति भावयव्य से कहती है "हे राजन्! मुझे आलिंगन करो। मुझे अल्पलोमिका मत समझो। ..."। निरुक्त (३।२०) में इसी मन्त्र की व्याख्या करते हुए आचार्य दुर्ग रोमशा के इस कथन का कारण देते हैं "नाजातलोम्न्योपहासमिच्छेत्" (गोभिल० गृ० ३।५।३) इति स्मृतेः।" अर्थात् "स्मृति का आदेश है कि अजातलोम्नी से उपहास न करे।" इससे भी स्पष्ट है कि अभिगमन युवती से ही हो सकता था और वह विवाह के पाँचवें दिन अथवा रजोदर्शन के उपरान्त शुद्धि पर प्राप्त था। ऋग्वेद का ही एक और मन्त्र है—"उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे। अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि॥" (१०.८५।२१)= "हे विश्वावसो! यहाँ से उठ जा। यह स्त्री पतिवाली हो गई है। पिता के घर में बैठी हुई दूसरी किसी अप्रौढ़ा की इच्छा करो। उसे ही अपना जन्मसिद्ध भाग जानो।" और "उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा। अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज।" (ऋ० १०।८५।२२)। अर्थात् "हे विश्वावसो! हम आपकी नमस्कारपूर्वक स्तुति करते हैं। किसी दूसरी अल्पायु कन्या की इच्छा करो। इस पत्नी को पति से मिला दो।" "अल्पवयाः कन्या प्रफर्वी" (सायण, अथर्व० ३।१७।३)। इन वेदमन्त्रों से पता चलता है कि 'दूसरी' कन्या 'अप्रौढा' और 'अल्पवयाः' है और वह विश्वावसु का भाग है। किन्तु नवोढा 'प्रौढा' 'प्राप्तयौवना' (ऋग्० १०।८५।९) है और वह पति का भाग है। निम्नलिखित पंक्तियाँ हमारे इस विचार को और भी दृढ़ करती हैं। "विश्वावसु नाम का एक दण्ड विवाह के दिन से लेकर चतुर्थीकर्म तक कन्या के तल्प पर रहता था और वह इस बीच में ब्रह्मचर्यव्रत के पालन का साक्षी होता था। चतुर्थीकर्म हो चुकने पर अभिगमन के समय पति कन्या तल्प पर पाँव रखते हुए उपरोक्त दोनों ऋचाओं द्वारा विश्वावसु को सम्बोधन करता था।" (बी० एस० उपाध्याय Women in Ṛgveda. P.52), तुलना करो—बौधा० गृ० १।६१-६६। अथर्ववेद का मन्त्र है "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।" (११।५।१८)। "ब्रह्मचर्य द्वारा कन्या युवा पति को प्राप्त करती है।" यदि कन्या बालिका हो तो 'ब्रह्मचर्येण' पद व्यर्थ हो जाता है। हम पीछे देख चुके हैं कि रूपवती तथा भाग्यशालिनी राजकुमारी स्वयं वरण किया करती थी। कम से कम स्वयंवर द्वारा विवाहिता स्त्री तो कभी बालिका हो ही नहीं

सकती थी। वास्तव में उत्तरवर्ती काल में भी बालविवाह क्षत्रियों के लिए तो प्रतिपादित ही नहीं किया गया। वीरमित्रोदय में लिखा है "यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः। अत्र ब्राह्मणोपादानात् ब्राह्मणस्यैवायं निषेधो न क्षत्रियादीनाम्।" (वीरमित्र० संस्कार० पृ० ७७१)। यह तो ब्राह्मणों की देखादेखी क्षत्रियादि दूसरे वर्णों ने ग्रहण कर लिया। वस्तुतः स्मृतियों के सामान्य वचन मुख्यतया ब्राह्मणों के ही लिए हैं। किन्तु "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥" (भगवद्गीता ३।२१) के अनुसार धीरे धीरे दूसरे वर्णवाले भी ब्राह्मणों का ही अनुकरण करने लगे। अस्तु।

कई एक गृह्यसूत्रों तथा धर्मसूत्रों में नग्निका के विवाह का विधान पाया जाता है। जैसे, 'नग्निका तु श्रेष्ठा" (गोभिल गृ० ३।४।६)। तथा "भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम्" (हिरण्य० गृ० १।१९।२)। यहाँ ब्रह्मचारिणी शब्द से ही पता चलता है कि नग्निका से प्रौढा अभिप्रेत है। अत एव मातृदत्त लिखते हैं "तस्माद्वस्त्रविक्षेपणार्हा नग्निका, मैथुनार्हेत्यर्थः।" वीरमित्रोदयसंस्कारप्रकाश पृष्ठ ७६६ पर महाभारत का एक वचन उद्धृत है—"त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम्। एकविंशतिवर्षो वा स पूर्वेषामवाप्नुयात्।" अर्थात्—"तीस अथवा इक्कीस वर्ष का युवक षोडशवर्षीया नग्निका से विवाह करके पितृलोक को प्राप्त होता है।" यहाँ 'नग्निका' का विशेषण 'षोडशवर्षा' महत्त्वपूर्ण है। इससे इतना अवश्य प्रतीत होता है कि किसी समय नग्निका षोडशवर्षीया कन्या को कहते थे। किन्तु बाद में जब से अल्पवयस्का कन्याओं का विवाह करने की प्रवृत्ति बलवती हो गई तो उसका यह लक्षण कर दिया गया—"यावन्न लज्जयाङ्गानि कन्या पुरुषसन्निधौ। योन्यादीन्यवगूहेत तावद् भवति नग्निका।" (पुराण—स्मृति चं० सं० पृ० २१३; भट्टनारायण गो० गृ० ३।४।५), और आठ दश वर्ष की कन्याओं के विवाह का प्रतिपादन ज़ोरों से होने लगा। महाभारत का वचन है "कामो यस्यां निषिद्धश्च केचिदिच्छन्ति चापदि" (म० भा० १३।७९।१५)। अर्थात् "कई लोगों के मत में आपत्तिकाल में कामोत्पत्ति से पूर्व ही विवाह कर देना उचित है।" इससे स्पष्ट है कि कई लोग ऐसे भी थे जो केवल आपत्काल में ही बालविवाह का प्रतिपादन करते थे। अन्यथा नहीं। किन्तु बाद में वही आपत्कालीन धर्म साधारण अवस्था का धर्म बन गया और मनुस्मृति ने कन्या के विवाह की आयु १२ वर्ष नियत कर दी। "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" (मनु० ९।९४)। यम ने इस आयु को विवाह की चरम सीमा बना दिया—"प्राप्ते द्वादशमे वर्षे कन्यां यो न प्रयच्छति। मासि मासि रजस्तस्याः पिता पिबति शोणितम्॥" (बृहद्यम ३।२०)। ब्रह्मपुराण ने इस पर सन्तोष न करके कन्या के विवाह की आयु घटाकर दश वर्ष कर दी—"चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः। तावद् विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः" (१६५।८); और चार पाँच वर्ष की कन्या का विवाह रिवाज

१७

पकड़ गया। ब्राह्मणों ने इस वचन का इतना पालन नहीं किया जितना छोटी जातियों ने किया है।

मनु महाराज ने व्यवस्था दी थी कि "त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्" (मनु ९।९०)। अर्थात्—"ऋतुमती कन्या तीन वर्ष तक प्रतीक्षा करे। तदनन्तर योग्य वर से स्वयं विवाह कर सकती है।" बैाधायन ने जहाँ इतना स्वीकार किया कि कन्या तीन वर्ष तक प्रतीक्षा करके चौथे वर्ष योग्य वर को स्वयं चुन लेवे (बैाधा० ध० ४।१।१५), वहाँ यह भी कह दिया कि "अविद्यमाने सदृशे गुणहीनमपि श्रयेत्" (४।१।१६)=यदि अनुकूल वर न मिले तो गुणहीन का ही आश्रय लेवे। वसिष्ठ ने भी मनु के उपर्युक्त वचन का समर्थन किया (वा० ध० सू० १७।६७, ६६), किन्तु गौतम ने इस अवधि को घटाकर तीन मास कर दिया। "त्रीन् कुमार्यृतूनतीत्य स्वयं युज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान्" (गौ० ध० १८।२०) अर्थ—"तीन मासिक धर्म अतीत होने पर कन्या पिता से प्राप्त अलङ्कारादि को त्यागकर श्रेष्ठ वर से स्वयं सम्बन्ध कर लेवे"। इसी मानसिक परिवर्तन का एक उदाहरण और देखिए। मनुस्मृति ने वर के गुणों पर ज़ोर देते हुए कहा था कि "काममा मरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्।" (९।८९) अर्थात्—"चाहे कन्या को आयु भर पिता के घर बैठना पड़े तो भी गुणहीन को कदापि न देवे"। वहाँ बैाधायन ने यह नियम कर दिया "दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे। अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्॥" (बैाधा० ध० सू० ४।१।१२)। अर्थात् "नग्निका कन्या को गुणवान् ब्रह्मचारी को देवे। अथवा गुणहीन को भले ही दे देवे किन्तु रजस्वला का विवाह न रोके।" कितना महान् अन्तर है! और कितना स्पष्ट विरोध! इस विरोध को इस युक्ति से दूर करने का प्रयत्न किया गया "काममामरणादिति। तद् गुणवति सति गुणहीनाय निषेधपरम्। न तु सर्वथा गुणहीननिषेधपरम्। ऋतुमत्यपि तिष्ठेदिति वचनमुक्तरीत्या न स्वार्थे तात्पर्यवत्।" (माधवपराशर १।२। पृ० ७८) अर्थात्—'कामम्' इस वचन में गुणवान् के होने पर गुणहीन का निषेध है न कि सर्वथा गुणहीन का निषेध है। "ऋतुमती आयु भर घर पर रहे—इसका तात्पर्य स्वार्थ में नहीं है।" ऐसे सब वचन और समाधान अर्वाचीन विचारों के प्रतिबिम्ब हैं। "४०० वर्ष ईसा से पूर्व सभ्य घरानों की कन्याओं का विवाह १६ वर्ष की आयु में होता था" (डा० आल्तेकर, पृ० ६२)। यहाँ यह स्पष्ट कर देना आवश्यक है कि कहीं कहीं अपेक्षाकृत प्राचीन सूत्रों तथा स्मृतियों में भी इन विचारों का प्रतिपादन पाया जाता है। तो भी विचार की दृष्टि से वे अर्वाचीन ही कहे जायँगे। क्योंकि, जहाँ एक अर्वाचीन ग्रन्थकार प्राचीन विचारों का पोषक होता है, वहाँ अपेक्षाकृत प्राचीन ग्रन्थकार भी अपेक्षाकृत अर्वाचीन विचारों का समर्थक हो सकता है। भिन्न तथा परस्पर सर्वथा विरुद्ध विचारों का संघर्ष सदा रहता है और इस संघर्ष का सबसे उत्तम उदाहरण महाभारत में

मिलेगा जहाँ एक ही विषय पर भिन्न-भिन्न विचार भिन्न भिन्न लोगों ने भिन्न भिन्न समयों पर प्रकट किये हैं। और यह सर्वथा स्वाभाविक है। स्मृति सदा देश और काल के अनुसार बदलती और व्यवस्था करती रहती है। जैसे माधव ने स्वयं पराशरस्मृति में कहा है "केरलदेशे कन्याया ऋतुमतीत्वं न दोषाय।" ( पराशर-माधव ३।१। पृ० १६ ) अर्थात्—केरल देश में कन्या का ऋतुमतीत्व दोष नहीं। यह व्यवस्था देश की चाल के अनुकूल है। ऐसे ही समय के भी अनुकूल स्मृति बनती और बदलती रहती है।

## बहुविवाह

यद्यपि सामान्यतः वैदिक आर्य एक ही विवाह करता था तो भी बहुविवाह की प्रथा भी प्रचलित थी। ऋग्वेद में एक पुरुष की अनेक स्त्रियों का उल्लेख बहुत स्थलों पर आता है। "पतिं न नित्यं जनयः सनीळाः" ( १।७१।१ ), "जनीरिव पतिरेकः समानः" ( ७।२६।३; और देखो १०।४३।१;१०।१०१।११ इत्यादि)। और सपत्नियों के आपस के लड़ाई झगड़े और उनसे तंग आये हुए पति की हालत का चित्रण भी बहुत बढ़िया मिलता है। "सं मा तपन्त्यभितः सपत्नीरिव पर्शवः" ( १।१०५।८ )। वेद में सपत्नीबाधक प्रयोगों का भी उल्लेख है ( ऋग्० १०।१४५; अथर्व० ३।१८; ऋग् १०।१५६ )। प्रत्येक पत्नी पति को अपने वश में करने के लिये प्रयत्नशील रहती थी (ऋग् १०।१५६।६)। किन्तु यह सब राजाओं और रईसों के लिये ही सम्भव था। कहा भी है "सपत्न्यो हि भवन्तीह प्रायः श्रीमति भर्तरि। दरिद्रो बिभृयादेका-मपि कष्टं कुतो बहूः॥" ( कथासरित्० ४६।२०८ )। ऋषि इन्द्र की स्तुति करते हुए कहते हैं "राजेव जनिभिः क्षेष्येव।" ( ऋग् ७।१८।२; तुलना करो २।१६।३; १०।६५।६ ) अर्थ—"तू राजा के समान अनेक पत्नियों के साथ रहता है"। राजाओं की चार प्रकार की पत्नियाँ होती थीं—(१) महिषी ( तै० ब्रा० ३।९।४।४ )। यह क्षत्रिया होने के साथ साथ पटरानी भी होती थी ( श० ब्रा० ६।५।३।१ )। ( २ ) परिवृक्ती ( तै० ब्रा० १।७।३।४; 'परिवृक्ता' ऋग् १०।१०२।११; अथर्व० ७।११३।२ )। डा० वेबर के अनुसार पुत्रहीन पत्नी परिवृक्ती कहाती थी (Indische Studien 10.6)। ( ३ ) वावाता ( ऐ० ब्रा० १२।११ ) चहीती पत्नी होती थी। ( ४ ) पालागली (श० ब्रा० १३।४।१।८;१३।५।२।८)। डा० वेबर के मत में राजदरबार के सब से छोटे अफ़सर की कन्या होती थी। सायण ने तीन ही प्रकार की पत्नियों का उल्लेख किया है। वह पालागली को नहीं गिनते। "राज्ञां हि त्रिविधाः स्त्रियस्तत्रोत्तमजातेर्महिषीति नाम। मध्यमजातेर्वावातेति। अधमजातेः परिवृक्तिरिति।" ( ऐ० ब्रा० भाष्य १२।११ )। किन्तु वैदिक साहित्य चार प्रकार की ही पुष्टि करता है। इन चारों के होते हुए भी प्रथम पत्नी ही वास्तव में पत्नी का दर्जा रखती थी। (Vedic Index, Vol. I, P. 479)। न केवल राजाओं की बल्कि राजपुरोहितों और ऋषियों तक की अनेक पत्नियों का उल्लेख वेद में मिलता

है। कक्षीवान् की दो स्त्रियाँ थी ( ऋग् १।१२६।३ )। च्यवन ऋषि की बहुत सी पत्नियाँ थीं (ऋग् १।११६।१०)। सोभरि ऋषि को त्रसदस्यु पौरुकुत्स ने पचास कन्याएँ और विपुल धन दिया था ( ऋग्वेद ८।१६।३६,३७ )। और उसने इन्द्र से वर माँगा था कि "काकुत्स्थकन्याः पञ्चाशद्युगपद्रमये प्रभो।" ( बृहद्देवता ६।५४; देखो नीतिमञ्जरी पृ० २६०-२६२ )। याज्ञवल्क्य की दो स्त्रियाँ थीं ( बृहदारण्यक २।४।४-५ )

## दहेज

दहेज की प्रथा वैदिककाल से आज तक हिन्दुसमाज में अक्षुण्ण रूप से चली आ रही है। कक्षीवान् को भावयव्य के पुत्र स्वनय ने दश कन्याएँ और बहुत सा धन, रथ, पशु, घोड़े आदि दहेज में दिये थे ( ऋग् १।१२६।१–३; बृहद्देवता ३।१४२–१५१ )। पिता के अतिरिक्त कन्या के भ्राता का नाम दहेज देनेवालों के विषय में विशेष कर लिया गया है। "उत वा घा स्यालात्।" ( ऋग्० १।१०६।२ )। सूर्यासूक्त में कहा है "चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम्। द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिम्" (ऋग् १०।८५।७)। अर्थात्—"जब सूर्या पति के घर आई तो विचार उसका तकिया था। दृष्टि उसकी आँखों का काजल था। द्यावापृथिवी निधि थी।" इससे प्रतीत होता है कि ये वस्तुएँ कन्या के साथ भेजी जाती थीं। किन्तु कोश के विषय में आजकल की तरह किसी प्रकार दबाव नहीं डाला जाता था। बल्कि वह स्त्रीधन होता था। जिस पर पत्नी का पूर्ण अधिकार रहता था। "विवाह से पहले किसी प्रकार के शुल्क का रिवाज नहीं था। यदि होता भी तो स्मृतिकार उसकी तीव्र निन्दा करते" ( डा० आल्तेकर, पृ० ८४ )

——

# साहित्यस्य दर्शनत्वम्

लेखकः—श्रीमन्माध्वसम्प्रदायाचार्य दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामि-दामोदरशास्त्री ।

अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य ।
तरणिरिव तिमिरपटलं जयति जगन्मङ्गलं हरेर्नाम ॥

अयि विपश्चिदपश्चिमाः !

नाविदितमेतद् भवादृशां यत् किल चेतनाचेतनात्मकत्वेन परिचीयमाने वैरिञ्चे प्रपञ्चे चेतनस्य प्रधानत्वेन प्रतिपादकं शास्त्रं "दर्शन"पदव्यवहार्यं; तद्भिन्नस्य तु तथात्वेन तादृशं तद् विज्ञानशब्दव्यपदेश्यं भवति, एवं चौपनिषदस्य 'पराऽपरा'भेदाभ्यां विद्याया द्वैविध्यस्य तात्पर्यादपीदमेव पर्यवस्यति यत्साक्षादात्मवेदननिदानत्वेनास्याः पराया दर्शनत्वं; द्राघीयस्याऽपि परम्परया तदनुस्मृतिमुपेयुष्या अपरात्वेन तदन्यत्वम्, एवं स्थितौ चेतनस्यैवेष्टावेप्सयाऽनिष्टनिरसिसिषया च साक्षात्परम्परासाधारण्येनाचेतनप्रवर्त्तकताऽऽजानिकतयाऽऽनुभविकीत्यत्र न कस्यापि विप्रतिपत्तिः ।

किन्तु चेतनप्रवृत्तेः स्वार्थकारुण्यान्यतरप्रयुक्तत्वव्याप्यत्वनियमेन प्रवृत्तिं प्रति तु कारणत्वेन क्लृप्तज्ञानस्येष्टसाधनत्वविषयकतायामप्यविवादादावश्यके प्रवर्त्तकज्ञानीयविषयताऽऽपन्नेष्टस्य प्रवर्त्तमानप्रयोजनस्वरूपत्वे; फलस्य चेच्छाऽन्तरानधीनेच्छाविषयत्वेच्छाऽन्तराधीनेच्छाविषयत्वाभ्यां-मुख्यगौणभेदतो द्वैविध्यात् सुखतत्साधनरूपस्य पुनरपि नित्यत्वानित्यत्वाभ्यां मुख्यस्य दृष्टत्वादृष्टत्वाभ्यां च गौणस्य प्रत्येकं द्विरूपता; तत्रादृष्टगौणस्य धर्मत्वेन दृष्टगौणस्यार्थत्वेनानित्यमुख्यस्य कामत्वेन नित्यमुख्यस्य मोक्षत्वेन व्यवहाराद् धर्मार्थकाममोक्षाख्यपुमर्थत्वेन प्रायशश्चातुर्विध्यं पर्यवस्यति साधारणतयाऽखिलतीर्थेषु ।

निगूढत्वेन शास्त्रविशेषे तु भगवत्प्रेमनामा खलु पञ्चमोऽपि पुमर्थः प्रतीतोऽस्ति, यमेनं प्रामाणिकाः प्रमाणप्राचुर्येण पटिष्ठप्रौढिम्नोपापीपदन्, परन्त्वत्राप्रसक्तो न वितानार्हः ।

यद्यपि नितान्तसम्पाद्यसर्वसमन्वयसिद्धान्तदिशोक्तैव सरणिः श्रेयसितमेति निर्विचिकित्सं; तथाऽप्यान्तरालिकप्रस्थानभेदभिन्नप्रतितन्त्रसिद्धान्तानुयायिनामस्ति मोक्षस्वरूपमवलम्ब्य महान् मतभेदः ।

तथा हि—मोक्षाध्वनीनानामस्ति तावत्सार्धद्वयी; केचिन्मोक्षमभावरूपमभ्युपगच्छन्ति, परे त्वेनं भावात्मकं सिद्धान्तयन्ति ।

प्रथमेष्वपीतरे किलात्मत्वेनोपगतस्य कायस्य करणेष्वन्यतमस्य चेतसोऽन्यस्य वा कस्य चनोच्छेद एव स इति मन्यन्ते ।

तादृशा एवावरणराहित्यमेनमास्थिषत ।

तद्देशीयाः पुनर्ज्ञानात्मोच्छेदं तत्स्वरूपं रोचयन्ते, एवमभावेष्वपि यावद्भाविदुःख-प्रागभावमेके ।

तादृशादुःखात्यन्ताभावमन्ये ।

तथाविधनिखिलदुःखध्वंसं च मोक्षं बहवो हि प्रतिजानते ।

परे पुनः प्रागभावध्वंसावनुपगम्य तत्पदाभिषिक्ते अनागतत्वातीतत्वे कृत्वा भाविदुःख मात्रस्य सर्वथाऽनागतत्वरूपं व्यवस्थापयन्ति ।

एवमिदमीयाभावात्मकतां कथयतामपि सन्ति तादृशोऽवान्तरभेदा येऽमीष्वेव स्वन्तर्भावा-नातस्ते शृङ्गग्राहिकयोपादर्शिषत ।

चरमेष्वपि केचनाखण्डसच्चिदानन्दात्मकब्रह्मणि सायुज्यमेवायमिति संगिरन्ते, परे तु मुमुक्षोः स्वरूपघटकोऽप्यानन्दोऽनादिकालादनभिव्यक्तोऽपि स्वाभिव्यञ्जकनिबन्धनानन्तकालाव-च्छिन्नाभिव्यक्तिरूप एवैष इति वदन्ति ।

अपरे पुनरप्राकृतसच्चिदानन्दविग्रहस्य भगवतोऽनन्तसमयस्थायिसामीप्यादिकमसाविति सिद्धान्तयन्ति ।

इत्थमेतानि सर्वाण्येव मतानि "यत्परः शब्दः स शब्दार्थ"—इति नयमुपजीवन्ति समञ्जसतामेव जिहते, कथमन्यथाऽधिगतार्थाधिगमयितृत्वेन प्रामाण्यपदवीतश्च्यवमानानात्मनो दधीरन्निति नातीव तिरोहितमभिरूपरूपाणाम् ।

यद्यप्यपराया भूयिष्ठभेदप्रभेदायाः प्रतिस्वमुद्देश्यान्यपि विभिन्नानि तथाऽपि चरमसमन्वय-दिशा सर्वेऽप्यदसीयप्रकाराः क्वचनैकत्र विश्रमयितव्याः, अन्यथा पदवन्निरपेक्षा नार्थक्रियाविशेष-माधातुमलङ्कर्मीणाः स्युः, भवेयुश्च वाक्यवत् तथयितुं तदा प्रभूष्णवो यदा "सर्वे वेदा यत्पद-मामनन्ती"-ति नयेन यत्र समन्वाययिषितव्यास्तत्रैव समन्वाय्येरन् ।

एवं च साक्षात्परम्परासाधारण्येनाखिलानि शास्त्राणि, यत्पर्यवसायीनि सन्ति; तदस्ति किमपि सर्वथैव दुःखं जिहासूनामभिलषणीयमिति विवेकिनां डिण्डिमाघोषणा ।

एतदेव तत्त्वमुद्दिश्य; "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"—त्यादिना भगवत्या श्रुत्या स्वसर्वस्वमगायितमाम् ।

एतत्साक्षात्कृत्यर्थमेव चासम्भावनाविपरीतभावनापारोक्ष्यनिरसनप्रयोजनकानि श्रवणमन-ननिदिध्यासनानि कर्त्तव्यत्वेनावबोधिषतागमशिरोभिः, रुचिसाधनाधिकारभेदानाश्रित्य तैस्तैरुपासकै-रिदमेवाद्वितीयं तत्त्वं ब्रह्मपरमात्मभगवदादिपदबोध्यं प्राकृतगुणराहित्यान्निर्गुणं निर्विशेषं वाऽप्राकृ-तान्तरङ्गशक्तित्रयनित्यविकस्वरगुणशालित्वात् सगुणं सविशेषं वोपासकविशेषैराराराध्यते ।

निर्णेतुकामाश्चेदमेव विवदिषया प्रवृत्ता व्यामुग्धमतयो मिथः कलहायन्ते, जिजल्पयिषयोत्तिष्ठमानास्तु मूढधानुष्कास्तनाराचा इव लक्ष्यतो नियमेन सनीस्रस्यन्त एव चेत् किमिवाश्चर्यम् ।

ईदृशोऽस्य प्रत्याहृतकरणकदम्बैर्निगृहीतमानसैः कुशाग्रीयधिषणैरपि दीर्घकालनैरन्तर्यसत्कारासेवनतोऽपि दुरधिगमस्य स्वरूपलक्षणप्रमाणानामेकतममेव किञ्च-नैदमित्थम्येन निर्दिधारयिषुषु दर्शनेषु जागर्त्ति किल यथायथं भिन्नोपपादनधोरणी ।

तत्र संक्षेपतो दर्शनानि चेतनस्यैकत्वमेकजातीयत्वं जीवेशत्वाभ्यां द्वैविध्यं वा सङ्गिरमाणानि त्रैविध्यभाञ्ज्येव ।

अत्र प्रथमपक्षे द्विविधा वादिनः—सच्चिदानन्दरूपमात्मानं मन्यमाना अद्वैतिनः, पराशब्दस्वरूपमेनं सिद्धान्तयन्तः शब्दब्रह्मवादिनः ।

द्वितीयपक्षगास्तु—चतुर्विधाः—चिदानन्दाश्रयं तं भणन्तो मीमांसकादयः, चिन्मात्राश्रयं-वदन्तो—विवसनादयः, चिदानन्दात्मकमुपयन्तः प्रात्यभिज्ञादयः, चिन्मात्रात्मकं व्यवस्थापयन्तः कापिलादयः ।

तृतीयाध्वाश्रयिणोऽपि चतुर्विधाः—जीवेशयोरुभयोरपि चिन्मात्ररूपत्वमानिनः पातञ्जलादयः, तयोरीशस्य चिन्मात्राश्रयत्वं जीवानां तु चिदानन्दाश्रयत्वं प्रतिजानाना नैयायिकवैशेषिकादयः, मुक्तजीवानां च नोभयाश्रयत्वमिति मतेऽत्र विशेषः, तयोरेव चिदानन्दाश्रयत्वं निर्णयन्तः पाशुपतादयः, तयोरेव चिदानन्दात्मकत्वं राद्धान्तयन्तः पुनश्चतुर्विधाः—विशिष्टाद्वैतिनः, शुद्धाद्वैतिनः, द्वैताद्वैतिनः, सान्तर्गणा द्वैतिनश्च, तथा चैनमेव द्वैतसिद्धान्तमुपजीव्योपयन्तो महर्षिभरताचार्योपज्ञदर्शनिनो द्विविधाः—गान्धर्वागमानुसारेण नादब्रह्मवादिनः, साहित्यापरपर्यायरसदर्शनविदो रसब्रह्मवादिनश्च । अस्य दर्शनस्य साहित्यनाम्ना प्रसिद्धेर्निदानं त्वेवं प्रतिभाति—भावार्थकष्यञन्तसाहित्यशब्दप्रकृतिकमत्वर्थीयाच्प्रत्ययान्तसाहित्यपदार्थः सङ्कोचकमानाभावेनाविशेषात् प्रत्यासत्तेश्च यावद्वस्तुमिलनवैशिष्ट्ययोग्यं शास्त्रं निष्कृष्यते ।

उपोद्बलितश्चायमर्थोऽभियुक्तैरपि—

न सा विद्या न तच्छास्त्रं न सा रीतिर्न सा कला ।
जायते यन्न काव्याङ्गमहो ! भारो महान् कवेः ॥

इति वदद्भिः, दर्शनत्वमप्येतस्य रसब्रह्मवादित्वेन चेतनविवेचकत्वान्निर्विवादमेव ।

यद्यपि भूयसां विषयाणां मीमांसकमिदं शास्त्रं तथाऽपि रसस्यात्मत्वेन प्राधान्यात् "प्रधानेन व्यपदेशा भवन्ती"-ति विश्वजनीनव्यवहारः ।

ईदृशस्य साहित्यदर्शनस्य द्विविधो विषयः—सान्तर्भेदकाव्यात्मकं लक्ष्यं, तद्विचारकं च लक्षणम् । एनयोर्लक्षणस्य लक्ष्याधीनत्वेन तदङ्गत्वादुपायरूपता, सुतरामुपेयं लक्ष्यात्मकं काव्यम् । अस्यापि दृश्यश्रव्यत्वाभ्यां द्वैविध्येऽपि दृश्यस्य रससाक्षात्कृतिप्रयोजकत्वेनाभ्यर्हितत्वं सकलसहृदय-

संवेद्यम्। यद्यपि दर्शनशास्त्रमात्र एव प्रमाणप्रमेयतदवान्तरविचारसरण्योऽवश्यं व्यवस्थितास्तथाऽपि ताः क्वचिच्छृङ्गग्राहिकया निर्दिष्टाः क्वचित्तु समानतन्त्राद्युक्ताः "परमतमप्रतिषिद्धमनुमतं भवती"-तिन्यायेनेपेयन्ते।

एवं च प्रकृतेऽप्युपजीव्यत्वात् प्रधानं रसमुपपादयच्छास्त्रं तदानुषङ्गिकान् पदार्थानुक्तदिशैवानुमोदते।

दर्शने चात्र प्रायशो वैयाकरणाद्यैवानुगुणतया पर्यशीलीति व्यञ्जनावृत्ति-शब्दप्रवृत्ति-चातुर्विध्य-प्रत्यक्षादिप्रमाणत्रयव्यापारमुख्यविशेष्यकशाब्दबोधादिप्रतिपादनविधया स्फुटमेव जागर्त्ति।

इदमीयराद्धान्तसिद्धिनिदानतां भजन्ती "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"ति तैत्तिरीयश्रुतिरिव भगवती स्वतः प्रमाणं विराजते।

एनया किल—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इति सकलशास्त्रानुमतसर्वपथीनवाक्यार्थनिर्णयसुभगङ्करणीं षड्लिङ्गीं सध्रीचीनां विधाय जन्मस्थेमलयकर्त्तुरानन्दघनस्य ब्रह्मणः परमात्मनो भगवतोऽनुपमत्वमप्रामाण्यज्ञानानास्कन्दित-नित्यबोधमयत्वरूपस्वतःप्रकाशत्वानन्दस्वरूपविग्रहत्वं मुमुक्षुप्राप्यत्वमेतदनधिगत्याऽनादिसंसार-बन्धनिवृत्त्यसंभवः; जीवतत्त्वस्यापि वस्तुगत्याऽऽनन्दरूपत्वं च स्वघटकतत्तत्पदस्वारस्यैनोन्मील्यन्ते; प्रपञ्चस्त्वत्रत्यः प्रतीपोक्तिनाडिन्धमप्रमाणैर्विवक्षितसाधकतां गृहयालुभिर्युक्तिव्रातैरुत्तरमीमांसाप्रथमाध्यायस्थादिमचरणगतानन्दमयाधिकरणे पूर्वाचार्य्यैः साधु पराक्रम्य समर्थितोऽत्र संचिक्षिप्सया न व्यतानि।

न चान्यश्रुत्या जीवेशयोरभेदबोधनादुक्तश्रुतेर्भेदप्रत्यायनं विरुद्धं स्यादिति विचिकित्सनीयम्।

वेदत्वावच्छेदेन प्रामाण्येऽवधारिते किलोद्देश्यताऽवच्छेदकव्यापकत्वस्य विधेयतत्संसर्गयोरन्यतरस्मिन् भासमानतायाः सर्वपथीनव्युत्पत्तिसिद्धतायामविवादस्यानुभविकत्वेन वेदघटिकानां सर्वासामेव ब्रह्मपराणां श्रुतीनां तात्पर्यनिर्णायकषड्लिङ्गीतः प्रतिपिपादयिषितव्यांशादेशि विरोधाभावस्य समन्वयवादे सिद्धान्तनीयत्वस्यावश्यकत्वात्, परस्य रसात्मकत्वं प्रमापयन्त्यां श्रुतौ निर्दिष्टाभ्यां लाभकर्त्तृत्वकर्मत्वाभ्यां समुज्जीवितभेदस्योत्पत्तिशिष्टत्वादुत्पन्नशिष्टाभिदातः प्राबल्याच्च, यथोक्तं—पूर्वतन्त्रे द्वैतीयीकाध्याये तादृशे चरणे नवमाधिकरणे "गुणश्चापूर्वसंयोगे वाक्ययोः समत्वाद्"अनेन सूत्रेण; "आमिक्षोत्पत्तिशिष्टत्वात् प्रबले"त्यादिना तत्रत्यन्यायमालाग्रन्थेन च, इयांस्त्वत्र दर्शनेऽन्यतो विशेषः—ब्रह्मविद्या तावदसंभावनाविपरीतभावनापारोक्ष्योत्पाटनपटिष्ठश्रवणमनननिदिध्यासनादिसाधनसंपन्नं परतत्त्वं साक्षात्कारयति; परमर्षिभरताचार्योपज्ञरसविद्या तु संसारिणमननुष्ठितवोकसाधनमपि रसात्मकं ब्रह्म गोचरयन्ती जननीवासत्ये

वर्त्मनि स्थित्वा ततः सत्यं समीहत-इत्याद्युपोद्बलितेन गुडजिह्विकान्यायेन नाट्यवेदोक्तालौकिको-पायैरविद्योच्छेदतः पूर्वमेव सच्चिदानन्दघनरसतत्त्वस्यासेचनकतादिग्दर्शनया विषयव्यालेभ्यो वैमुख्य-मानीय तदीयानुपमास्वादचारिमणि गृध्नुतां संपाद्य प्रकृतपथाध्वनीनतायामुन्मुखयतीति।

न च सत्यामविद्यायां कथमिव ब्रह्मावगतिरिति हठादारेकणीयम् ?

मोक्षाख्यतदवगतावेवाविद्यानिवृत्तिपूर्वकत्वनियमात्, न चाविद्याविलयानन्तरमेव तदवगति-रिति नैगमिकनियमव्याहतिरिति भ्रमितव्यम् ?

तन्नियम्यावगतित एव मुक्तिरित्यत्र तत्त्वारस्यात्, न च तत्साक्षात्कृतौ "तरति शोक-मात्मविद्" इति श्रुतितो मुक्तेरवश्यंभाविताया अनुपपत्तिरिति वाच्यम् ? तस्यां तदव्यव-हितोत्तरत्वस्य जीवन्मुक्ते व्यभिचारेण तथानियमानभ्युपगमात्।

न च जीवन्मुक्तादन्यस्य कृतब्रह्मसाक्षात्कारस्य संसारित्वाभावो ब्रह्ममीमांसयोक्तः, कृतरससाक्षात्कारस्य तु संसारतादवस्थ्यदर्शनादेनयोर्मिथो विरोधो दुष्परिहर इति प्रत्यवस्थेयम् ?

अत्रेदं विवेचनीयम्—एकशास्त्रेण तुल्यानेकमुख्यप्रतिपादने महावाक्यभेदप्रसङ्गादेकमेव वस्तु मुख्यत्वेन प्रतिपाद्यते; तन्मुख्यत्वं च षड्लिङ्गीप्रयोज्येन "यत्पर" इतिन्यायेन निर्धार्यते, विषयान्तरप्रतिपादनं तु मुख्याङ्गकल्पत्वादानुषङ्गिकम्, एवं चेदृशमुख्यान्तरेण विरोधस्तु शास्त्र-प्रामाण्यरक्षार्थं सर्वथैव निराकर्त्तव्य एव, अनेकशास्त्रीयानुषङ्गिकयोर्मिथो विरोधस्त्वतात्पर्यविष-यत्वान्न क्षतिकरः, तथैवैकमुख्येनान्यामुख्यस्य विरोधेऽमुख्यमुपेक्ष्य मुख्यमेवाहत्य संरक्षणीयम्।

एतादृक् सुव्यवस्थायां च ब्रह्मणोऽद्वितीयत्वमात्रैकप्रतिपादनप्रवणाया ब्रह्मविद्याया विषया-न्तरविवेचनं गौणम्।

एवं श्रवणादिसाधनविकलस्याप्यधिकारिणो रसास्वाददिग्दर्शनया तदुन्मुखीकृतये प्रवर्त्तन-मात्रं रसविद्यायाः प्रधानमुद्देश्यमेतदन्यदङ्गम्।

एवं चैनयोर्मुख्योद्देश्ययोर्विरोधाभावादुक्तविरोधो नैव हानिकरः, विशेषस्त्वा-करादिष्वनुसंधेयः।

इत्थं 'साहित्यस्य दर्शनत्वं' निर्व्यूढं, रसस्य स्वरूप-लक्षण-प्रतीतिप्रक्रिया-भेद-विमतनि-रासादिप्रदर्शनायां वक्तव्यभूम्ना लेखविस्तृतिभयादत्रैवोपरम्यते।

लेखेऽस्मिन् यदा कदाऽपि यस्य कस्यापि विवक्षा पर्यनुयुयुक्षा च प्रसज्येयातां— तेनानुकम्पयाऽस्य प्रतिभूर्लेखकः सूचनीयः।

वेदव्याकृतिसाहितीकपिलकाकूपातञ्जलप्रक्रिया-
मीमांसायुगलाक्षपादकणभुकन्त्रस्मृतिच्छन्दसाम्।
पारं यत्कृपयाऽऽश्वनायिषितमां लोकोत्तरस्निग्धया
श्रीगङ्गाधरदेशिकेन्द्रचरणं तं नौमि भक्त्याऽन्वहम्॥

---

# दर्शनेषु साहित्यस्य स्थानम्

लेखकः—पं० राजेश्वरशास्त्री द्राविडः

तत्र साहित्यं नाम शब्दार्थयोः सम्बन्धविशेषाः—

द्वादशधा सम्बन्धः शब्दस्यार्थस्य यः स साहित्यम् ।
त्रिस्कन्धः स चतुर्भिस्तनुभिः स्याच्चतुश्चतुर्भिश्च ॥
वृत्तिर्विवक्षा तात्पर्यप्रविभागाविहोदितौ ।
ततो व्यपेक्षा सामर्थ्यान्वयश्चैकार्थभावना ।
दोषहानं गुणादानं तथाऽलङ्कारयोगिता ।
रसावियोग इत्येते सम्बन्धाः कथिता बुधैः ।

इति भावप्रकाशने शारदातनयवचनात् । विवक्षादीनां स्वरूपं तत्रैव द्रष्टव्यम् ।

द्वादशसम्बन्धात्मकस्य राशेरेकैकचतुष्कात्मकस्य स्कन्धत्रयस्य तृतीयोऽवयवः दोषहानगुणादानालङ्कारयोगरसावियोगात्मकः सम्बन्धसमूहोऽन्तरङ्गः । काव्यस्यात्मनि ध्वनौ साक्षाद्व्याप्रियमाणत्वात् । पूर्वन्तु स्कन्धद्वयं बहिरङ्गं काव्यात्मकशब्द-शास्त्रात्मकशब्दोभयसाधारणत्वाद्व्याकरणमीमांसादिशास्त्रान्तरैर्व्युत्पादितमेवेति साहित्यशास्त्रस्य नान्तरङ्गो विषयः ।

तदुक्तं सरस्वतीकण्ठाभरणव्याख्याने रत्नदर्पणे —

सर्वस्वायमानस्तु सम्बन्धो नान्यत्रेत्यस्मिन्नायतते । स चतुर्विधः दोषहानं, गुणोपादानं, अलङ्कारयोगः रसाभियोगश्चेति ।

अन्तरङ्गत्वं च साक्षात्कारणव्यापारत्वम् । अन्तरङ्गद्वारककारणत्वं च बहिरङ्गत्वमिति विवेकः । तत्रान्तरङ्गात्मकव्यापारस्य दर्शनत्वे सिद्धे तद्द्वारकबहिरङ्गस्यापि तत्सिद्धिरिति अन्तरङ्गानेवाधिकृत्य विचार्यते, किमेतेषां दर्शनत्वं सम्भवति नवेति ।

तत्र नैतेषां दर्शनत्वं सम्भवति षड्दर्शनपरिगणनानुपपत्तेः । न्यायवैशेषिकसाङ्ख्ययोगपूर्वोत्तरमीमांसाव्यतिरिक्तेषु दर्शनशब्दप्रयोगस्य क्वचिदप्यदृष्टत्वात् । साक्षात्कारार्थकस्य दृशेर्धातोः करणादिषु ल्युटि व्युत्पन्नस्य दर्शनशब्दस्य साक्षात्परम्परया वा आत्मदर्शनसाधनेषु षड्दर्शनेषु प्रवृत्त्युपपत्तावपि साहित्ये तदवयवार्थस्याप्यभावात् । कथञ्चित्सत्यप्यवयवयोगे पद्मादाविव पङ्कजशब्दस्य षट्स्वेव दर्शनेष्वेतस्य योगरूढत्वेन अन्यत्र प्रयोगानुपपत्तेः । पूर्वमीमांसाया अपि चित्त-

शुद्ध्युपयोगिधर्मप्रतिपादनद्वारा आत्मदर्शनसाधनत्वम्। इति सिद्धं षड्दर्शन्या एव दर्शनत्वम्, अतः साहित्यस्य कथं दर्शनत्वमिति केचिदाचक्षते।

तन्न सम्यगिति ब्रूमः। दर्शनशब्दस्य हि शास्त्रपर्यायत्वं मेदिन्यादिकोशेभ्योऽवगम्यते। शास्त्रं च—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तद्धि शास्त्रं प्रचक्षते।

इत्युक्तरीत्या विधिनिषेधयोग्य एव शब्दराशिरुच्यते, कृतकोऽकृतको वा। अत एव—

अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः।

इति मनुना वेदेऽपि शास्त्रशब्दः प्रयुक्तः।

"शास्त्रस्था वा तन्निमित्तत्वात्" इति सूत्रयता जैमिनिना च त्रिवृच्चर्वाश्ववालादिशब्देषु शास्त्रे वेदे स्थितैव प्रसिद्धिर्ग्राह्या अर्थनिर्णये, न तु लौकिकी इति वदता वेदस्य शास्त्रत्वमुक्तम्।

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।" इति वदता भगवता च।

षड्दर्शन्या एव शास्त्रत्वे इदं सर्वं व्याकुप्यते।

अतः त्रिकट्वादिशब्देन शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्ननिरूढलाक्षणिकत्रिशब्दार्थस्य कटुतैलादौ अन्वयायोगेन त्रिकटुशब्दव्यपदेशाभावेपि केवलकटुशब्दव्यपदेशो यथा सम्भवति। तदुक्तं शब्दशक्तिप्रकाशिकायाम्—

"त्रिकट्वादिकस्तु कर्मधारयः शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्वपदालक्ष्यार्थस्य बोधकः। त्रिकटुप्रभृतिभ्यः कटुत्रयादिसामान्याप्रतीतेः।" इति।

तथा षड्दर्शनशब्दघटकषट्पदस्यापि न्यायवैशेषिकादिगतषट्त्वावच्छिन्नरूपनिरूढलाक्षणिकार्थबोधकस्याङ्गीकृतत्वात्तदन्यत्र षड्दर्शनपदाप्रयोगेऽपि केवलदर्शनशब्दप्रयोगे न किञ्चिद् बाधकम्। अतः साहित्यस्यापि काव्यजशिक्षारूपविधिनिषेधात्मकशास्त्रार्थत्वस्याक्षुण्णत्वात् मेदिन्यादिकोशप्रामाण्यानुसारेण दर्शनत्वोपपत्तिः। आत्मदर्शनसाधनत्वात् दर्शनशब्दावयवान्वयोऽप्युपपद्यते। तथाहि—

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।

इत्यनेन माधुर्यौजःप्रसादाख्यरसाविनाभूतगुणवत्त्वं काव्यलक्षणे निवेशयता वाग्देवतावतारमम्मटभट्टेन काव्यस्य सरसत्वनैयत्यमाविष्कृतम्। रसश्च—

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।"

इत्युक्तस्वरूपस्तेनैव। रसगङ्गाधरे च—

"व्यक्तो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणा चित्।"

इति व्यक्तेः स्वरूपमुपवर्ण्य "विभावानुभावव्यभिचारिभिश्चर्व्यमाणैः सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्तितानन्दांशावरणाज्ञानेन अत एव प्रमुष्टपरिमितप्रमातृत्वादि-

निजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राङ्निविष्ट-वासनारूपो रत्यादिस्थायिभाव एव रसः ।"

इति तत्स्वरूपं निरूप्य यद्वा कल्पानुसारेण तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारां वृत्ति-मानन्दांशे निर्विकल्पिकामङ्गीकृत्य—

"सा शब्दव्यापारभाव्यत्वाच्छाब्दी अपरोक्षसुखालम्बनत्वाच्चापरोक्षात्मिका, तत्त्वं वाक्यज-बुद्धिव"दित्यभिनवगुप्तपादाचार्यमम्मटभट्टयोर्मतमुपसंहृतम् ।

तेन तत्त्वमस्यादिमहावाक्यैकवाक्यतया वेदान्तानामिव काव्यस्य तत्प्रतिपादकस्य शास्त्रस्य च तत्तत्स्थाय्युपहितब्रह्मचैतन्यसुखसाक्षात्कारसाधनत्वाद्दर्शनपदयोगः समुपपन्नः ।

उक्तरीत्या ब्रह्मसाक्षात्कारहेतुत्वादेव च काव्यस्य—

"काव्यालापाश्च ये केचिद् गीतकान्यखिलान्यपि ।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ।" इति पुराणम् ।

काव्यस्य शिवतत्त्वस्य प्रकाशः काव्यप्रकाश इति तद्व्याख्यातारश्च ।

षड्भ्यो दर्शनेभ्योऽन्यत्र दर्शनशब्दाप्रयोगस्त्वसिद्धः ।

"दर्शनात्तस्य सुदृशो विद्यानां पारदृश्वनः ।"

इति कामन्दकेन कौटिलीयार्थशास्त्रे दर्शनपदप्रयोगात् । अत एव व्याकरणादिषु दर्शनशब्दप्रयोगश्च सर्वदर्शनसङ्ग्रहे उपपद्यते । एवं साहित्यशास्त्रस्यापि दर्शनत्वं रमणीयमेवेति ।

—

# साहित्यस्य तदितरदर्शनेभ्यो वैलक्षण्यम्

लेखकः—पं० नारायणशास्त्री खिस्ते

येन केनाप्यध्वनाऽऽत्मदर्शनसाधनत्वमेव दर्शनत्वमिति प्रायः सर्वेऽपि दार्शनिका मन्यन्ते। साहित्यस्यापि रससाक्षात्कारविधया स्वस्वरूपानन्दचर्वणासम्पादकत्वेनात्मदर्शनसाधनत्वाद्दर्शनत्वमव्याहतमेव।

दर्शनान्तरैरुपदिष्टेष्वात्मदर्शनपथेषु चातुर्वर्ण्यचातुराश्रम्यपालनपुरःसरं देहदण्डनशिरोमुण्डनदण्डग्रहणश्रवणमनननिदिध्यासनगुरुपरिचरणादिभिर्महानायासः। साहित्याध्वन्यानां तु अकृत्वैव दुष्कराणि श्रवणमननादीनि, सर्वानर्थनिदानमनाद्यविद्यापाशमनुन्मोच्यैव, कर्मकलापमदग्ध्वैव, येन पथा रसास्वादो भवति, पर्यवसाने च भगवत्संमुखीनतासम्पत्तिपूर्वकं रसस्य सम्यक् शुद्धिरपि सुलभा भवति तथाविधः पन्थाः प्रायः सर्वैरेव श्रीमदाचार्याभिनवगुप्तपादमम्मटभट्टपण्डितराजादिभिः प्राचीनार्वाचीनैराचार्यैः स्वस्वग्रन्थेषु ससन्नाहं प्रदर्शित इति नेह प्रस्तूयते। किं नेदं साहित्यदर्शनस्य दर्शनान्तरेभ्यो वैलक्षण्यम्?

अन्यच्चैकं विचारपथमवतरति—उपमाऽनन्वयरूपकव्यतिरेकातिशयोक्त्यादीनलङ्कारांस्तल्लक्षणानि च समालोचयन्तो वयं तर्कयामः—यन्नैतेऽलङ्काराः केवलं लौकिकोदाहरणचमत्कृत्यादिप्रदर्शनद्वारा जनमनोविनोदैकफलकत्वं पुष्णन्ति, अपितु किमपि सहृदयैकसंवेद्यं दार्शनिकं रहस्यं ध्वनयन्त इव प्रतीयन्ते।

दर्शनेषु द्वैतं, द्वैताद्वैतं, विशिष्टाद्वैतमद्वैतं चेत्यादिमतान्यादृत्य स्वस्वमतस्यैव सर्वोत्तमत्वे श्रुतिसम्मतत्वे च बाढं विवदन्ते तत्तद्दर्शनवादिनः।

साहित्ये च किल सर्वाण्येतानि दर्शनानि भूमिकाविशेषा इति न तेषां परस्परविरोधोऽङ्गीक्रियते। सहितानां दर्शनानां भावः साहित्यमिति निर्वचने न कोऽपि दोषः।

यद्वाऽष्टादशप्रस्थानभिन्नानां विद्यानां सहभावः साहित्यम्, उक्तं च भामहेन—

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहो! भारो महान् कवेः॥ इति।

भट्टश्रीतोतेनाप्युक्तम्—

नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥

स तत्त्वदर्शनादेव शास्त्रेषु कथितः कविः ।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः ॥
तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ॥ इति ।

अलङ्कारेषु—पूर्णोपमायामुपमानोपमेययोः साम्येऽपि तयोः सर्वथा भेदः प्रतीयते । द्वैतदशायां जीवशिवयोरेवमेव भेदः । अनन्वये तूपमानोपमेययोरेकत्वम् । जीवशिवयोर्न मिथः साम्यम्, अपितु जीवो जीव इव, शिवः शिव इवेति द्वैतवादपराकाष्ठा । उपमेयोपमायां द्वयोः पर्यायेणोपमानोपमेयत्वम् । जीव इव शिवः, शिव इव जीवः । रूपके उपमेयस्य उपमानात्मना रञ्जनम् । मुखं चन्द्रः, जीवः शिव इत्यभेददार्ढ्यम् ।

अतिशयोक्तौ मुखेऽपि चन्द्रोऽयमित्युक्तिवज्जीवेऽपि शिवोऽयमित्यभेदप्रतिपत्तिदार्ढ्यम् । अत्यन्तातिशयोक्तौ तु चन्द्रेऽपि मुखमिदमितिवत् शिवेऽपि जीवोऽयमित्यपि प्रतिपत्तिरिति दार्शनिकैरनाविष्कृतपूर्वोऽयमपूर्वः पन्थाः प्रकटीकृत आलङ्कारिकैः ।

इत्थं च साहित्ये सर्वेषामपि दार्शनिकमतानां भूमिकाभेदेन स्वीकारात् सर्वमतसमन्वयकरणाच्च सर्वदर्शनातिशायीदं साहित्यदर्शनमिति तस्य दर्शनान्तरेभ्यो वैलक्षण्यं स्पष्टमेवेति दिग्दर्शनमात्रमिदम् ।

तत्तदलङ्कारैस्तानि तानि दार्शनिकरहस्यानि कथमाविष्क्रियन्त इति सत्यवसरे विस्तीर्णे निबन्धे दर्शयिष्यामः ।

---

# अथ साहित्यदर्शनप्रतिपाद्यरससंबद्धो विवेकः

लेखकः—पं० विद्याविलासशुक्लः

आदौ तावद् वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादुक्तप्रतिज्ञावाक्यघटकसाहित्यदर्शनपदार्थयोः स्वरूपपरिचयो नान्तरीयकनिरूपणः, अत्र साहित्यपदार्थस्यानेकधा विवृत्तिसम्भवेऽपि प्रकृते सहितानां मिलितानां भावः साहित्यं तद् विद्यतेऽस्मिन्निति साहित्यम् अर्शआदेराकृतिगणत्वेन मत्वर्थीयेऽचि साहित्यपदे निष्पन्ने संकोचकाभावेन यावद्वस्तूनामेव मिलितत्वं विवक्षितवर्णनायामेकसमुदायघटकत्वरूपं—कवितासर्यानुसारेण सुघटमेव। यथोक्तमभियुक्तैः—

"अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथास्मै रोचते विश्वं तथैव परिवर्त्तते"॥

अन्यच्च—"न सा विद्या न तच्छास्त्रं न सा रीतिर्न सा कला॥ जायते यन्न काव्याङ्गमहो भारो महाकवेः"॥ तदनौचित्ये विगानञ्च,

"गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति"॥

औचित्ये तु महानभ्युदयः प्रोक्तः—

"काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥
"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिं च साधुकाव्यनिषेवणम्"॥
"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते"॥ इत्यादिभिः।

एवञ्च सकलप्रमेयवैशिष्ट्यवत्त्वेन साहित्यस्य "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः" इति रीत्या सर्वप्रधानतया विश्वजनीनस्यात्मसाक्षात्कृतिरूपोपेयस्य प्रस्थानभेदैर्विभिन्नप्रकारकोपायेषु भरताचार्य्योपज्ञशास्त्रोक्तवर्त्माध्वन्यै रसात्मकचैतन्यस्यात्र प्रतिपादितत्वेन दृश्यते ज्ञायते चैतन्यतत्त्वमनेनेति चैतन्यज्ञानसाधनतया दर्शनत्वे च निर्व्यूढे साहित्यदर्शनपदार्थोऽपि सुज्ञानो जातः। दर्शनेऽस्मिन् किल चैतन्यस्वरूप आत्मैव रसः, प्रमाणं त्वत्र "रसो वै सः" इत्यादिश्रुतिरेवेति मन्तव्यम्। एतद्व्यक्तिप्रतिपादकञ्च—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि"ति भरतसूत्रमास्थेयम्, अस्यार्थस्तु भरत-मुनिकृतनाट्यसूत्रकारैः स्वस्वसिद्धान्तानुसारेण कृतः।

तत्रोक्तसूत्रघटकसंयोगपदप्रकृतिकपञ्चम्या विभक्त्या हेतुत्वमर्थः, तच्च कारकत्वं ज्ञापकत्वं वा, ज्ञापकत्वमपि तद्विषयकानुमितिजनकज्ञानविषयत्वं वा तद्विषयकप्रत्यक्षजनकज्ञानविषयत्वं वा तद्विषयकशाब्दजनकज्ञानविषयत्वं वेति चत्वारः पक्षाः सम्भवन्ति। तत्र कारकत्वमतानुयायिनो भट्टलोल्लटप्रभृतयः।

तेषामयमाशयः—रत्यादयो हि न समवायेन नटे सामाजिके वा सम्भवन्ति, तदानीं तयोस्तदुत्पादकसामग्र्यभावात्। शिक्षाऽभ्यासादिमात्रेण रामादिरूपतां दर्शयतो नटस्य रत्युत्पादनसामग्र्या लेशोऽपि न शक्यते वक्तुम्, एवं सामाजिकेऽपि, प्रत्युत सीताऽऽदिगतपूज्यत्वबुद्धेर्जागरूकत्वेन वैरस्यप्रसक्तिश्च।

तस्मात् सीताऽऽदिदर्शनेन तत्कार्यभूतेन भ्रूविक्षेपादिनाऽनुभावेन, सहकारिणा चौत्सुक्यादिनाऽनुकार्य्ये रामादावेव रतिरुत्पद्यते, सैव च रतिर्निरतिशयाऽऽस्वादरूपत्वेन रसो नाम, नटे तु न तस्य वास्तविकी स्थितिः, किन्तु तस्य तद्रूपेण रूपितत्वाद् अत्यन्तं सहृशयोस्तयोर्भेदस्याप्रतीतेः सा भ्रमरूपैव। कथमन्यथाऽन्यदीयसुखकारणैरन्यस्य रसोत्पत्तिरिति वदन्ति।

इदं न सम्यग्—अनुकार्य्ये रामादौ रसोत्पत्त्यङ्गीकारे कथं सामाजिकेषु रसोद्बोधः, तथात्वे च कथं तेषां नाट्यादौ प्रवृत्तिः, न च रामादिशृङ्गारदर्शनेनैव सामाजिकानां रसोद्बोध इति शक्यं वक्तुम्, लौकिकशृङ्गारादिवत्तस्य चमत्काराहेतुत्वात्। किंच रामादिगतलौकिकरतेर्यदि रसत्वं तर्हि तद्गतक्रोधादेरपि तथात्वमनिवार्य्यमेवञ्च स्पष्ट एवानुभवविरोधः।

ततश्च न पूर्वोक्तलक्षणको रसो नापि च सूत्रे कारकत्वात्मकं हेतुत्वं पञ्चम्यर्थः, किन्तु विभावादिभिः संयोगाद् गम्यगमकभावात् तस्य निष्पत्तिरनुमितिरिति सूत्रार्थः श्रीशङ्कुकेन संयोगोत्तरविभक्तेर्ज्ञापकत्वमर्थमवलम्ब्य तद्विषयकानुमितिजनकज्ञानविषयत्वरूपार्थादरेणोक्तः।

तथाहि—अयमेव रामो राम एवायमिति निश्चयतो न रामोऽयमिति परश्चीनबाधसंभवे रामोऽयमिति भ्रमाद् रामः स्यान्नवेति संशयाद् रामसदृशोऽयमिति सादृश्यप्रतीतेश्च विलक्षणया चित्रतुरगादिन्यायेन प्रतिपत्त्या पक्षीभूते नटे सीताविषयककटाक्षादिकारित्वहेतुना तद्विषयकरतिमत्त्वानुमानेन तत्रासत्या अपि पाटवसध्रीचीनाभिनयसौष्ठवेनानन्दमयत्वेनानुमीयमानो रसस्तेनाभिप्रेयते।

किन्त्विदमपि न चारु, यतो नटेऽसाधारणधर्मेण सीताविषयकरत्यादेर्बोधेन रामत्वेन तद्ग्रहेऽपि रामस्तद्विषयकरतिमानित्यादिज्ञानस्य सभ्यानन्दं प्रत्यौदासीन्येन तत्र तेषामप्रवृत्त्या अनुमितिपक्षोऽपि न हृद्यः।

तस्मान्नाट्ये प्रथमतो नियतव्यक्तिनिष्ठत्वनिरूपितत्वाभ्यां जनिते स्थायिज्ञाने साधारणीकरणमहिम्ना तयोः प्रमोषाद् रतित्वादिपूर्वकं प्रतीयमानरत्यादेः स्वसमवेतरत्यादितोऽभेदावसाया-

ऽस्वसंस्कारोद्बोधे तस्यैव विषयत्वौचित्यम्, भयव्रीडाऽऽदिप्रयोजकतायास्त्वनुभवस्वारस्येनासाधारण्यातादशायामेव कल्पनात्, प्रकृते च सत्त्वोद्रेकादानन्दाविर्भूतेर्निर्विवादतयाऽऽनन्दरूपो रसः प्रत्यक्ष एवेति दिग् भट्टनायकीया, अत्रापि मतेऽस्त्येवांशतोऽरुचिः— तथाहि मन्यते हि तावदभिधया पदार्थोपस्थितिः। आनुभविक्या च भावनया साधारणीकृतिः।

व्यापारापेक्षिण्यां साक्षात्कृतौ तु तद्व्यापारिणोऽन्यस्य शब्दमन्तरेणासंनिहितत्वादगत्या कल्पिते तदीये भोजकत्वापरनामके तृतीये तस्मिन् मानाभाव एवेति।

सुतरामभिधाऽऽदिविरामे क्लृप्तया व्यञ्जनयैव प्रकृतो व्यवहारो निर्वोढव्यस्ततश्च रसादिबोधस्य वैयञ्जनिकतया शाब्दत्वमपि निर्व्यूढम्।

स्वसाक्षिकं भवच्च प्रत्यक्षमपि न प्रतिकूलं नः।

संमतं हि दशमस्त्वमसीत्यादौ शाब्दत्वप्रत्यक्षत्वसामानाधिकरण्यमप्यनुभवसिद्धं ज्ञानस्य स्वप्रकाशत्वसिद्धान्तिभिरखिलदार्शनिकैरिति संक्षेपः।

———

# उपमायाः सर्वालङ्कारघटकत्वम्

लेखकः—पं० मुकुन्दशास्त्री खिस्ते

काव्यस्यात्मभूतं रसादिरूपव्यङ्ग्यार्थमुपकुर्वन्त उपमादयोऽलङ्कारा भवन्ति। रसादिरूपव्यङ्ग्याभावे एषां सन्निवेशनं मृतशरीरमण्डनमिव सहृदयहृदयोद्वेगजननायैव भवति। क्वचिद्रसादितात्पर्यविरहेऽप्यलङ्कारत्वव्यपदेशस्तु सादृश्यहेतुकत्वादौपचारिक एव। इत्थं च रसादिरूपव्यङ्ग्यार्थोपकारकत्वमेवालङ्काराणामलङ्कारत्वम्। यथा लोके जीवसत्त्वे परिधृताः सुवर्णालङ्कारा लोकानन्दहेतवस्तथैव काव्येऽपि जीवातुभूतरसादिरूपव्यङ्ग्यार्थसत्त्व एवालङ्काराणां सहृदयहृदयाह्लादहेतुत्वम्। न चात्मोपकारकत्वाविशेषाद् गुणानामलङ्काराणां चैक्यमापतितमिति वाच्यम्, साक्षादात्मसंश्रितत्वे सत्यात्मोपकारकत्वं गुणत्वम्, शरीराश्रितत्वे सत्यात्मोपकारकत्वमलङ्कारत्वमिति भेदात्।

तथाऽलङ्कारेषूपमाया एव प्राधान्यम्, सर्वालङ्कारघटकत्वात्, लोकवेदसिद्धत्वाच्च। 'हृद्यं सादृश्यमुपमा' इति तल्लक्षणम्। न हि सादृश्यं विना केऽप्यलङ्काराः चमत्कृतिं जनयितुं प्रभवन्ति। अत्र नानालङ्काराणां पृथक् पृथग् रूपेण स्वीकारे युक्तीरनालोच्य केवलं सादृश्यस्य व्यङ्ग्योपकारकत्वं सर्वालङ्कारेषु विद्यत एवैतावन्मात्रं विविच्यते।

तथा हि—इदं सादृश्यं क्वचिन्मुख्यार्थस्य साक्षादुपस्कारकम्, क्वचिच्चोपस्कारकान्तरोपस्करणद्वारा। तत्र साक्षादुपस्कारकं यथा—'चन्द्र इव मुखम्' इत्यत्र सादृश्यवर्णनं मुखे उत्कर्षरूपव्यङ्ग्यस्य साक्षादेवोपकारकम्। एवं 'धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि' इत्युपमेयोपमायां धर्मार्थयोः मिथः पूर्णश्रीत्वरूपं साधर्म्यं तृतीयसदृशव्यवच्छेदरूपं व्यङ्ग्यं व्यञ्जयति। 'इन्दुरिन्दुरिव श्रीमान्' इत्यनन्वये स्वस्य स्वेन वर्ण्यमानं सादृश्यं बाधितं सत् द्वितीयसदृशव्यवच्छेदरूपं व्यङ्ग्यं व्यञ्जयति। 'त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः' इति प्रतीपे लोचनवक्त्रयोः प्रतियोगित्वविधया वर्ण्यमानं सादृश्यमेव तयोरुत्कर्षं व्यनक्ति। 'सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च' इति तुल्ययोगितोदाहरणे सङ्कोचात्मकस्साधारणो धर्मः सरोजवदनयोः सादृश्यं बोधयन् चन्द्रोदयात्मकस्य व्यङ्ग्यार्थस्योपकारकः। साधारणधर्मस्य सादृश्यप्रयोजकत्वात्। एवं दीपकालङ्कारेऽपि बोध्यम्।

स्मृतिभ्रान्तिसन्देहालङ्कारेषु 'पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः', 'अयं प्रमत्तमधुपस्त्वन्मुखं वेत्ति पङ्कजम्', 'पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः' इत्यादिषु सादृश्यं

स्मृतिभ्रान्तिसन्देहानामुत्थापकं सत् प्रकृतस्य कान्तामुखस्योत्कर्षरूपं व्यङ्ग्यं प्रकाशयतीति सादृश्यस्य परम्परया व्यङ्ग्योपकारकत्वं बोध्यम्। अथ लक्षणाघटकसादृश्यस्य व्यङ्ग्योपकारकत्वे उदाहरणानि प्रदर्श्यन्ते।

'स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः' इत्युल्लेखे एक एव राजा कामः, कल्पतरुः, कालरूपश्च दृष्ट इति कथनेन राजनि कामादीनां बाधितत्वात्तत्सदृशे लक्षणा कार्या, ततश्च लक्षणाघटकं सादृश्यमेव क्रमेण सौन्दर्यशालित्वबहुप्रदत्वशत्रुविनाशकत्वरूपाणि व्यङ्ग्यानि प्रकाशयति। अभेदगर्भे रूपके तथा परिणामालङ्कारे 'अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणाद्' तथा 'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' इत्यादौ चाभेदः बाधितः सन् सदृशं लक्षयति, तत्र लक्षणाघटकं सादृश्यं प्रकृतस्य भूपस्य तथा दृशोश्च वर्णनीयावस्थायां पूर्वावस्थात उत्कर्षरूपं व्यङ्ग्यं द्योतयति। 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' इत्यतिशयोक्तौ नीलोत्पलशरशब्दयोः तत्सदृशे लाक्षणिकतया लक्षणाघटकं सादृश्यमेव लोचनयोः कटाक्षाणां च सौन्दर्यशालित्वं तीक्ष्णत्वरूपं च व्यङ्ग्यार्थं व्यनक्ति। अपह्नुतौ 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यादौ सुधांशुपदस्य तत्सदृशे लाक्षणिकतया तद्घटकं सादृश्यमेव प्रेयसीमुखगतोत्कर्षं व्यञ्जनया बोधयति। निदर्शनायां 'त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः' इत्यत्र नेत्रयुगलेन नीलाम्बुजशोभायाः धारणं बाधितं सत् सदृशं लक्षयति, तत्र लक्षणाघटकं सादृश्यमेव नेत्रयुगलगतोत्कर्षरूपं व्यङ्ग्यं बोधयति।

इदानीं गम्यसादृश्यस्य व्यङ्ग्योपकारकत्वे उदाहरणानि प्रदर्श्यन्ते—तत्र दृष्टान्तालङ्कारे 'त्वमेव कीर्तिमान् राजन् विधुरेव हि कान्तिमान्' इत्यादौ श्वेतत्वेन कीर्तिकान्त्योः गम्यमानं सादृश्यमेव कीर्तेरौज्ज्वल्यरूपं व्यङ्ग्यं प्रकाशयति।

व्यतिरेकालङ्कारे—'पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर। भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते' इत्यादौ रक्तत्वकोमलत्वादिप्रयुक्तं गम्यं पल्लवसादृश्यमेव करस्योत्कर्षं द्योतयति।

विनोक्तौ—'विद्या हृद्याऽपि सावद्या विना विनयसम्पद'मित्यादौ यथा लोके विनयसम्पदा शौर्यादिगुणाः शोभन्ते तथैव विद्याऽपीति गम्यं साम्यमेव विद्यायाः विनयसम्पदा उत्कर्षं द्योतयति।

समासोक्तौ—'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादौ प्रस्तुते चन्द्रेऽप्रस्तुतकामुकव्यवहारसमारोपस्तद्धर्मसम्बन्धं विना न सम्भवतीति तद्धर्मसम्बन्धस्य सादृश्यप्रयोजकत्वात् गम्यं सादृश्यमेवाप्रस्तुतकामुकव्यवहारसमारोपाङ्गम्। सारालङ्कारेऽपि 'मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः' इत्यत्रैकशब्दोपात्तं सर्वेषां मधुराणां गम्यं सादृश्यमेव व्यङ्ग्यार्थोपस्कारकम्। विकल्पालङ्कारे 'सद्यः शिरांसि चापान् वा नमयन्तु महीभुजः' इत्यादावेतत्सम्भावना-

कर्तुः पौरुषाश्रयत्वेन शिरोनमनचापनमनयोस्तुल्यबलत्वेन सम्भावनाविषयतयैव चमत्कारित्वं तदभावेनायमलङ्कारः सम्भवतीति तुल्यबलत्वेन गम्यं सादृश्यमेव राजपौरुषरूपव्यङ्ग्यार्थोपकारकम्।

अथ प्रतियोगिविधया सादृश्यस्य व्यङ्ग्योपकारकत्वे उदाहरणानि प्रदर्श्यन्ते।

विशेषोक्तौ 'हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि' इत्यादौ लोके दीपे ज्वलति सति यथा स्नेहक्षयो भवति तथा नायिकायां स्मरदीपे ज्वलत्यपि स्नेहक्षयो नाभूदिति लोकप्रसिद्धसादृश्याभाव-कथनेन प्रतियोगिविधया सादृश्यस्यापि नायिकायां स्नेहक्षयाभावकथनेन स्नेहस्य कामोद्दीपक-त्वात् कामोद्दीप्तिरूपव्यङ्ग्योत्कर्षकत्वमस्त्येव। असम्भवालङ्कारे 'को वेद गोपशिशुकः शैलमुत्पा-टयेदिति' इत्यादौ लोके शिशुकर्तृकं शैलोत्पाटनमसम्भूतमेव भगवता तत्कृतमिति लोकसादृश्य-विलक्षणतया चमत्कारजनकं शैलोत्पाटनं भगवतोऽद्भुतपौरुषरूपव्यङ्ग्यव्यञ्जने प्रतियोगिविधया सादृश्यं स्पृशत्येव।

ननु विभावनायां 'अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः' इत्यत्र लोके तीक्ष्णकठिनैरे-वास्त्रैः जगज्जयस्य प्रसिद्धत्वात् प्रकृते मन्मथे त्वतीक्ष्णकठिनैरस्त्रैः जगज्जयस्य वर्णितत्वात्कथं सादृश्यं व्यङ्ग्योपकारकमिति चेत्—इत्थम्, केवलास्त्रकरणकविजयकर्तृत्वमात्रं लोकप्रसिद्धं साद-श्यमपेक्ष्य विभावनायामुपमालङ्कारघटितत्वम्, अतीक्ष्णकठिनत्व त्वतिरिक्तविभावनालङ्कारप्रयोजकम्।

इत्थं क्वचिद्वाच्यं, क्वचिल्लक्षणाघटकं, क्वचिद्व्यङ्ग्यं, क्वचिच्च प्रतियोगिस्वरूपं सादृश्यं सर्वालङ्कारेषु व्यङ्ग्योपस्कारकमित्युपमामूलका एव सर्वेऽलङ्काराः। विस्तरभयात्सर्वेषां विवेचनं नैव कर्तुं पार्यते, अनयैव दिशा सुधीभिः स्वयं विज्ञेयाः।

उपमायाः प्राधान्ये अन्यान्यपि प्रमाणानि। तत्र ऋग्वेदे—उपमालङ्कारः प्राधान्येन दृश्यते नान्येऽलङ्काराः, यथा—'वाश्रा इव धेनवः स्यन्दमाना, अञ्जः समुद्रमवजग्मुरापः' म० १ सू० ३२। 'परा मे यन्ति धीतयो गावो न गव्यूतीरनु' (मे—मम, धीतयः—स्तोत्राणि, गावः गव्यूतीरनु—गोष्ठस्थानानि, न=इव, त्वां परायन्ति—उपगच्छन्तीति तदर्थः) ऋ० १—२५। 'प्रतद्वि-ष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः' अस्यार्थः (विष्णुः वीर्येण स्तूयते, भीमः कुचरः गिरिष्ठाः मृगो न=सिंह इवेति) ऋ० मं० १ सू० १५४।

यास्कीयनिरुक्तेऽप्युपमाविचारः—

'अथात उपमा। यदतत् तत्सदृशमिति गार्ग्यः। तदासां कर्म। ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाप्रख्यातं वोपमिमीते। अथापि कनीयसा ज्यायांसम्'।

भरतनाट्यशास्त्रेऽपि—

'काव्यस्यैते ह्यलङ्काराश्चत्वारः परिकीर्तिताः।
उपमा रूपकञ्चैव दीपकं यमकं तथा॥'

एतैः प्रमाणैरिदमेव ज्ञायते यदुपमातः पूर्वमलङ्काराणां भेद एव नासीदुपमामुपजीव्यैवं सर्वेषामलङ्काराणां प्रवृत्तिरित्युपमाया एव सर्वालङ्कारेषु प्राधान्यम् । एतत्सर्वमभिप्रेत्य श्रीमदप्पय्यदीक्षितैरुक्तम्—

'उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः' ॥

इत्यलम् ।

---

# वक्रोक्ति-वैभवम्

लेखकः—पं० श्री बटुकनाथशास्त्री खिस्ते

चूडामणीकृतो येन वक्रोऽपि मृगलाञ्छनः।
वक्रोक्तिचिन्तने प्रज्ञां स मे दद्यादुमापतिः॥

अये सहृदयचूडामणयः! कविकुल-कमनीयवाङ्माधुरीमकरन्दमधुव्रताः! साहित्यार्णव-समवगाहकरतलामलकीकृतनिखिलालङ्कार-चिन्तामणयो विद्वन्मणयः! अवदधतु तत्र-भवन्तो भवन्तः!

यदिह सकलाऽलङ्कारसन्निबन्ध-विवेचनवेलासु तत्र तत्राऽभियुक्तवरैः पापठ्यमानमिदं पद्यरत्नं श्रवणाऽऽभरणीकृतमेव भवेत्तत्रभवद्भिः श्रीमद्भिः। तथा च—

'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना' इति॥

यदुपज्ञमेतदनवद्यं पद्यं, स किल सकलाऽऽलङ्कारिकशेखरायमाणः श्रीमानाचार्यभामहः। तेन हि स्वीये काव्याऽलङ्कारे द्वितीयपरिच्छेदे क्रमेणाऽलङ्कारविशेषान् लक्षयताऽतिशयोक्तिप्रस्तावे पद्यान्येतान्युपन्यस्तानि। यथा—

'निमित्ततो वचो यत्तु लोकाऽतिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा॥
स्वपुष्पच्छविहारिण्या चन्द्रभासा तिरोहिताः।
अन्वमीयन्त भृङ्गालिवाचा सप्तच्छदद्रुमाः॥
अपां यदि त्वक् शिथिला च्युता स्यात् फणिनामिव।
तदा शुक्लांशुकानि स्युरङ्गेष्वम्भसि योषिताम्॥
इत्येवमादिरुदिता गुणाऽतिशययोगतः।
सर्वैवाऽतिशयोक्तिस्तु तर्कयेत् तां यथागमम्॥'
'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥' इति।

अनेनोपक्रमेण—लोकातिक्रान्तं कविसमयसिद्धं वस्तुमात्रवर्णनं लक्षणकोटौ निविशति। अत एव 'विभाव्यते' इति पदस्वारस्यमखिलद्दयीकुर्वाणो राजानककुन्तकाचार्यो वक्रोक्तेः' काव्य-जीवितत्वोद्घोषणे पराक्रान्तम्।

अथ तत्रभवान् विवेचकमूर्धन्यः स्वनामधन्यो भट्टमम्मटः किमत्र प्रतिपद्यत इत्युद्यता वयं समवलोकयामः—

काव्यप्रकाशे – विशेषालङ्कारनिरूपणानन्तरं विशेषगतमेकाधिककार्यनिष्पत्त्यादिरूपं वैशिष्ट्यमतिशयोक्त्यनुप्राणनं विना नाऽवतिष्ठत इति दिध्व .यिषुराचार्यः प्रमिताक्षरमुपसंहार-वाक्यमेतदवतारयति—

'सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनाऽवतिष्ठते, तां विना प्रायेणाऽलङ्कारत्वा-ऽयोगात्। अत एवोक्तं, 'सैषा सर्वत्र वक्रोक्ति'रित्यादि।

अत्र किञ्चिदालुलोचयिषितमस्माकम्। प्रमिताक्षरया रचनया बह्वर्थप्रकटनपटुराचार्यः 'प्रायेणे'तिपदेन कमभिप्रायमवभासयति ? । अमुमेव—यत्—शृङ्खलादिकतिपयधर्मान्तरमूल-कानपहायाऽलङ्कारान्, सर्वत्र वक्रोक्तिर्जागरूकैवेति। वस्तुतस्तु—तत्राऽप्येतत्सत्ताकृतैव चमत्कृ-तिरावर्जयति सहृदयहृदयानीति कथने न खलु स्खलितसंभावनाऽस्माकम्।

यद्यपि विशिष्टयोः शब्दार्थयोः काव्यत्वमङ्गीकृत्य व्यापारमुखेन वैशिष्ट्यं वक्रोक्तिरूप-मिति स्वतन्त्रं स्व-तन्त्रं प्रस्थानं प्रवर्तयामास कुन्तकाचार्यः, तदनुसारेण सर्वानपि ध्वनि-भेदांस्तदन्तर्भूतांश्च प्रतिपादयांचक्रे, तत्र नाऽस्माकं काऽपि प्रतिपिपादयिषा।

परन्तु काव्यशरीरभूषणायमानेषूपमाप्रभृतिष्वशेषाऽलङ्कारेषु चमत्कृतिजनकतावच्छेद-कतयाऽनुगतधर्मरूपत्वं वक्रोक्तेरङ्गीक्रियमाणं न दुष्यतीति मन्यामहे। तथाहि—न केवलं श्लेष-काकु-वक्रोक्तिसंज्ञः सङ्कुचितोऽर्थोऽत्राऽस्माकमभीष्टः, किन्तु लोकोल्लङ्घितया यत्किञ्चिदति-शयप्रतिपादनपटुः कवि-वाग्गुम्फ-सुवर्ण-सौरभावहोऽलौकिक एव। पर्यन्ते तादृशस्यैवार्थस्य रस-समरसीभावोऽप्यनायाससंपाद्यो भवतीति समालोचयन्तु विचारलोचनाः।

यत्तु कुन्तकाचार्यः—'स्वभावोक्तेर्नालङ्कारत्वं, तस्या अलङ्कार्यत्वादात्माश्रयदोषप्रसक्ति'-रित्युवाच, तत्राऽपि न संमतिरस्माकम्। उक्तिवैचित्र्यस्यैवाऽलङ्कारत्वेऽपि काव्यात्मभूत-रसोत्कर्षसम्पादिकायाः स्वभावोक्तेरप्यलङ्कारत्वं न नाम क्षोदक्षमम्। अलङ्कार्यत्वं च वस्तुतो रसस्यैवेति न पूर्वोपात्तदोषोन्मेषशङ्काऽपि। एवंविधस्वभावोक्तिस्थलेऽपि काचन चित्च-मत्कारकणिका चतुरैरनुभूयते यदि तदपि वक्रोक्तिवैशिष्ट्यमेव समुल्लसति, लोकोत्तरत्वमेव वक्रत्वमिति तात्पर्यात्।

न चैतदस्मत्कपोल-कल्पना-वल्लरीविलसितमात्रं मन्तव्यम्। आचार्या अप्यत्र अनुकूलवाचो विलोक्यन्ते। तथाहि—ध्वन्यालोके तृतीयोद्योते गुणीभूतव्यङ्ग्यविवेकप्रसङ्गे श्रीमानानन्दवर्धनाचार्यः—'यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया।

कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत्? भामहेनाऽप्यतिशयोक्तिलक्षणे यदुक्तं—'सैषा सर्वत्र वक्रोक्ति'रित्यादि। एतदर्थोन्मीलनाय 'लोचने' श्रीमदभिनवगुप्तदेशिकेन्द्रचरणा अप्यूचुः—'सैषेति। याऽतिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिरलङ्कारप्रकारः सर्वः। 'वक्राऽभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' इति वचनात्। शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणाऽवस्थानमित्ययमेवाऽसावलङ्कारस्य अलङ्कारान्तरभावः। लोकोत्तरेण चैवाऽतिशयः। तेनाऽतिशयोक्तिः सर्वालङ्कारसामान्यम्। तथा ह्यनयाऽतिशयोक्त्याऽर्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते। तथा प्रमदोद्यानादिर्विभावतां नीयते, विशेषेण च भाव्यते रसमयीक्रियते' इति।

तदेवमाचार्यवचोऽप्यत्राऽनुग्राहकतममेव दृश्यत इत्यतिशयोक्तेः सर्वालङ्कारमूलभूतत्वे नाऽवशिष्यते लवोऽपि संशीतेः।

एवं यद्यप्युपमाया अपि 'उपमैका शैलूषी'त्यादि प्रशंसनपुरस्सरं सकलालङ्कारजीवितायमानत्वमाचार्य्यवर्यैस्तत्र तत्र प्रत्यपादि, तथापि मूलान्वेषणे क्रियमाणे सैषा वक्रोक्तिरेव तज्जननीपदं भजते। तत्र दिङ्मात्रं विविच्यते—

'मुखं चन्द्र इवाभाती'त्यादौ वर्त्तमानं सादृश्यं 'गोसदृशो गवय' इत्येतत्स्थलीयसादृश्यात्कुतो भिन्नमिति प्रश्ने कविसमयसिद्धवर्णनमात्रादित्येतावदेवोत्तरमुदीर्येत। गो-गवयसादृश्यस्येव न खलु मुखचन्द्रसादृश्यस्याऽऽपामरमनुभवः सिद्ध्येत्, ततश्च लोकोत्तरत्वमनन्यगतिकतयाऽवश्यमभ्युपेयं भवति। तदेव वक्रत्वं नाम चमत्कृतिजनकतावच्छेदकीभूतो धर्म इति निवेदितचरम्।

अत एव—'नियतिकृतनियमरहिता'मित्युक्तिः सङ्गच्छते। एतट्टीकाकारैरपि तत्राऽयमर्थः स्फुटीकृत एवाऽऽस्ते।

नन्वेवं वक्रोक्तेरेव सकलार्थधूर्धरत्वे कृतं शृङ्गारादिरसोल्लासैरिति चेन्मर्षयत क्षणम्।

यन्मते 'वक्रोक्तिः काव्यजीवितम्', तन्मते तु तथैव प्रतिपत्तिः, सर्वेषामपि भेदानां तत्रैवान्तर्भाव-भावनापरवशत्वात्। अस्मन्मते—ध्वनिरेव काव्यस्यात्मा, स च पर्यन्ते रसात्मक एव। वक्रोक्तिस्त्वलङ्कारमूलतया, चमत्कृतिजननजागरूकतया, च विचिन्तनीयेत्येष संरम्भः। उपमाया दीपकादिष्विवाऽस्याः सर्वालङ्कारेष्वनुस्यूतत्वं जागर्ति, उपमाऽपि स्वात्मोपलब्धये एतन्मुखप्रेक्षिणीति वास्तविकी स्थितिः।

तदेवमियमद्यावधि साहित्यसाम्राज्यमाणिक्यमञ्जूषा परिचिताऽप्याचार्यवराणां किमित्युपेक्षा-पक्ष-निक्षिप्ताऽऽसीदिति न विज्ञायते। यत्किमप्यस्तु तदेतत्प्रस्तुतं किमप्यसंस्तुतं वस्तु श्रीमतां पुरो न्यस्तमास्ते।

बहुवक्तव्यविशदीकरणीयेऽप्यमुष्मिन् वस्तुनि, लेख-कलेवरवृद्धिभिया समास-न्यास एवाऽऽदृतः। आचार्यदण्डिन इमां भणितिं चाऽत्र—

'अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम्' ॥

अनुल्लिख्य न विश्राम्यति लेखनी। पर्यन्ते—

'अन्यैरनुल्लिखितपूर्वमिदं ब्रुवाणो
नूनं स्मृतेर्विषयतां विदुषामुपेयाम्।
इत्यैककारणगवेषणया, नवार्थ-
तत्त्वावमर्शपरितोषसमीहया वा' ॥

इति महिमभट्टभणितिं श्रीमतः स्मारयन् विरमामि विस्तरादिति शिवम्।

---

# शब्दब्रह्मविमर्शः

लेखकः—पं० श्री सभापतिशर्मोपाध्यायः

नातितिरोहितमेतन्मनीषावैभवावभासितविचारवर्त्मनां यदिह निखिलं दृष्टादृष्टकार्यजातं सकारणकमेवेति। तत्र सन्त्यनेकानि दर्शनानि, किन्तु दर्शनषट्कमेव प्रायः प्रसिद्धिपथमनुसरति। परन्तु सूक्ष्मेक्षिकयाऽऽलोचने व्याकरणाद्यङ्गाद्यनुयायिनां महर्षीणामपि प्रपञ्चकारणप्रदर्शनावतारे वाक्यपदीय-निर्मातृ-भर्तृहरिप्रभृतिभिर्वैयाकरणाभिमतो दार्शनिकसिद्धान्तः, शब्दब्रह्मणो विवर्तभूतमिदं सर्वमिति श्रुतिस्मृत्यादिविविधप्रमाणपुरस्सरं निर्णीतः। तद्यथा—उपसंहृतवाच्यवाचकविभागं नामरूपात्मकजगज्जन्मादिहेतुभूतं शब्दब्रह्मैवेति तदेव "स्फोटः" इति व्याकरणतत्त्वविदः।

तथा च श्रुतिः—"वाग्वै ब्रह्म" (बृ० ४।१।२)। वाक्यपदीयेऽपि "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥"। शिवदृष्टौ—"इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम्। तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्॥" इति। स एवात्मा सर्वदेहव्यापकत्वेन वर्तते—"अन्तःपश्यदवस्थैव चिद्रूपत्वमरूपकम्॥" इति। यद्यपि परब्रह्मणश्चिद्रूपत्वमेव श्रुत्यादिसिद्धं तथापि चिद्रूपस्य यच्चिद्रूपत्वं तद् वाग्रूपमेव। तच्च शब्दब्रह्म प्रणवरूपमखण्डम्। तथा च श्रुतिः—"ओङ्कार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति"। बह्वी = वाक्यपदादिरूपा। नानारूपा = आकाशाद्यर्थरूपा।

शब्दब्रह्मैव "नामरूपे व्याकरवाणि" (छा० ६-३-२) इति श्रुतिबोधितशब्दार्थात्मक-जगद्रूपेण विवर्त्तते (अपरित्यक्तस्वस्वरूपं नानाशब्दार्थरूपेण प्रतीयते)। छान्दोग्येऽपि "ओङ्कारेण सर्वा वाक् संतृण्णोङ्कार एवेदं सर्वमोङ्कार एवेदं सर्वम्" (छा० २-२३-३)। एवञ्च "तस्मादेतस्मादात्मन आकाशः सम्भूतः" (तै० २—१), "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति च" (तै० ३—१) इत्यादिश्रुतयोऽपि शब्दब्रह्मपरतयैव योजनीयाः।

न च "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २—१) इति श्रुतिविरोधः, तत्र 'वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति" (बृ० ४—१—२) इति श्रुतेः "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" इति वाक्यपदीयाच्च सत्यादिशब्देन शब्दानुविद्धस्यैवार्थस्य भानेन शब्दविशेष्यकबोधस्यापि

विनिगमनाविरहात्सम्भवेन श्रुतेः शब्दब्रह्मपरकत्वेनापि सुयोज्यत्वात्। न च ज्ञानादिशब्दपरकत्वे तस्यानुपूर्वीविशिष्टतया ब्रह्मणः सखण्डत्वापत्तिः, शब्दस्य ब्रह्मरूपत्वेऽवयवमानस्य काल्पनिकत्वात्। तदुक्तम्—"पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च। वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥" इति। न चोक्तरीत्या शब्दब्रह्मणः प्रणवरूपत्वे "ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्। यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः" ( भा० स्क० १२ अ० ६ ) इति वचनविरोधः, तद्वचनस्य किञ्चित्स्थूलप्रणवाभिप्रायपरत्वात्। "नामरूपे व्याकरवाणि" ( छा० ६—३—२ ), "नामरूपात्मकं हीदं सर्वम्" इत्यादि श्रुतिप्रामाण्यान्नामरूपात्मकप्रपञ्चस्य ब्रह्मणो विवर्त्तत्वपक्षे मूलब्रह्मणोऽर्थरूपत्वे शब्दरूपत्वे वा बाधकाभावाद् विनिगमनाविरहाच्च वैयाकरणाभ्युपेतशब्दात्मकत्वं ब्रह्मणः सिद्ध्यति। सर्वत्र सत्ताया अनुगतत्वाद्यथा सत्तात्मकत्वं वेदान्तिभिरुरीक्रियते तथा शाब्दिकैरपि प्रत्यक्षानुमित्युपमितिशाब्दादिज्ञानमात्रे शब्दविषयकत्वस्याभावाप्रतियोगित्वस्यानुभवसिद्धत्वात्तदात्मकत्वे वैयाकरणानां वेदान्तिभिः सह तुल्ययोगक्षेमत्वम्।

न च जगद्भासकत्वानुपपत्तिः, "ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते" इति वाक्यपदीयवचनप्रदर्शितसाम्येन तत्त्वोपपत्तेः। अत एवाधोनिर्दिष्टवचनानि संगच्छन्ते। "स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमेश्वरः। स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्॥ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह। धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः॥" ( भा० स्क० १२ अ० ६ )। यैः = अकाराद्यैः। त्रयो भावाः = सत्त्वरजस्तमोगुणरूपाः, ऋग्यजुःसामाद्यात्मकनामरूपाः, भूर्भुवःस्वर्लोकाद्यर्थरूपाः, जाग्रत्स्वप्नसुषुप्त्यादिवृत्तिरूपाः। "अकाराद्यास्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः। अन्त्ये प्रतीयमानो यो ध्वनिर्ब्रह्मेति गीयते।", "अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्। प्राहुर्महान्तमृषभं येन सायुज्यमाप्नुयात्।" अत्रोद्योतकारः—"द्वौ शब्दात्मानौ कार्यो नित्यश्च। तत्रान्त्यः सर्वेश्वरः सर्वज्ञः सर्वशक्तिमान् शब्दवृषभस्तस्मिन् खलु वाग्योगवित् शास्त्रजन्यशब्दज्ञानपूर्वकप्रयोगेण क्षीणपापः पुरुषो विच्छिन्नाहङ्कारग्रन्थीन् अत्यन्तं संसृज्यते इति तदर्थं तद्व्याख्यातार इति"।

अत्र द्विविधो हि वादः—अर्थब्रह्माद्वैतवादः, शब्दब्रह्माद्वैतवादश्च। तत्रार्थब्रह्माद्वैतवादो वेदान्तिनाम्। शब्दब्रह्माद्वैतवादश्च वैयाकरणानाम्। तत्रार्थाद्वैतब्रह्मवादिनये अर्थात्मकशब्दात्मकसृष्टिद्वयस्योपपादकानि यानि प्रमाणानि तान्येव शब्दाद्वैतब्रह्मवादिनयेऽपि बोद्धव्यानि। इत्थञ्च सृष्टिद्वयस्योभयाभिमतत्वेऽर्थात्मिकायाः सृष्टेः वेदान्तशास्त्राभिमतक्रम एव शाब्दिकानामपि अभिप्रेतस्तत्र तैः क्रमान्तरस्यानुक्तत्वात्।

साम्प्रतं शब्दात्मकसृष्टिक्रमो वैयाकरणाभिप्रेतपथेन समासतः प्रदर्श्यते। तथाहि—प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षयाल्लीन-सर्वजगत्का माया ईश्वरे चेतने लीयते ( सुप्त्वेव तिष्ठति )। ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकावस्थैः स्वफलप्रदानाय भगवतोऽबुद्धि-( अविद्या )पूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः। ततः पुरुषस्य

सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुण-( प्रकृतिः )मुत्पद्यते। एतदेव जगदुपादानमित्युच्यते, "ख" "परा" आदिशब्दैर्व्यवह्रियते च। तदुक्तं प्रपञ्चसारे :—

"सच्चिदानन्दविभवात्सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः॥
बिन्दुश्शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
समवायः समाख्यातः सर्वागमविशारदैः॥
भिद्यमानात्ततो बिन्दोरव्यक्तात्मा ततोऽभवत्।
शब्दब्रह्मेति तं प्राहुः सर्वागम-विशारदाः॥" इति॥

अत्र जन्याया अपि पराख्यवाचः सूक्ष्मत्वाज्जगत्कारणत्वरूपसाजात्यादतीन्द्रियत्वाच्च शब्दब्रह्मशब्देन व्यवहारविषयत्वम्। एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनेनाभिव्यज्यते। तथाहि—"षण्णवत्यङ्गुलो देहायामः। तत्राङ्गुल्यर्द्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमध उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं मूलाधार इत्युच्यते। तदुक्तम् :—

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे॥
आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम्॥"

( संगी० रत्ना० १-२-१९-२०-४१ ) इति।

पवनसंस्कारश्च ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव। तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दम् "परा" वागित्युच्यते। तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः "पश्यन्ती" इत्युच्यते। तत्र परा वाक्सूक्ष्मतमा ईश्वराधिदैवा। पश्यन्ती च सूक्ष्मतरा ईश्वराधिदैवा च। ते उभे योगिनां समाधौ क्रमेण निर्विकल्पक-सविकल्पकज्ञानविषयौ। ततो हृदयपर्यन्तमागच्छता तेन वायुना हृद्देशेऽभिव्यक्तं तत्तदर्थविशेष-तत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृतं हिरण्यगर्भदेवत्या परश्रवणायोग्यत्वेन सूक्ष्मा मध्यमेत्युच्यते। तत आस्यपर्यन्तमागच्छता वायुना कण्ठदेशं गत्वा मूर्द्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्तं परश्रवणयोग्या विराडधिदेवत्या "वैखरी" इत्युच्यते। एवं वेणुदुन्दुभिवीणादिषु अभिघातादिवैलक्षण्येनाभिव्यक्तं तत्तच्छब्दरूपा वाग् ज्ञेया। एषु च शब्देषु,एकब्रह्मप्रभवत्वादोषध्यादिष्विव सर्वाः शक्तयस्सन्निहिता वर्तन्ते। परन्तु अर्थेषु यथायुर्वेदादौ तत्तच्छक्तय उपवर्णिता अनुभूताश्चोपलभ्यन्ते न तथा शब्देषु। यद्यप्यागमेषु मन्त्राणामाश्चर्यकरी शक्तिर्निर्णीताऽस्ति तथापि न सा सर्वसाधारण्येन फलप्रदाभिमन्यते। उक्तञ्च वाक्यपदीये :—

"रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु॥
यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम्।
साधूनां साधुभिस्तस्माद्वाच्यमभ्युदयार्थिभिः॥
सर्वोऽदृष्टफलानर्थानागमात्प्रतिपद्यते।
विपरीतं च सर्वत्र शक्यते वक्तुमागमे॥" इति॥

यथा शरीराश्रितरोगाणां निवृत्तये उपायप्रदर्शकं चिकित्साशास्त्रम्, यथा वा बुद्ध्याश्रितानुचितरागद्वेषादिदोषाणामपनुत्तये अध्यात्मशास्त्रं पुराणस्मृत्यादिकञ्च तथा वागाश्रितदोषाणां निवारणाय व्याकरणशास्त्रम्। तदुक्तं वाक्यपदीये :—

"कायवाग्बुद्धिविषया ये मलाः समवस्थिताः।
चिकित्सालक्षणा(व्याकरण)ध्यात्मशास्त्रैस्तेषां विशुद्धयः"॥

इत्थञ्चार्थेष्विव शब्देष्वपि सर्वासु शक्तिषु सतीषु तासामाविर्भावाय शास्त्रप्रमाणकैर्विद्वद्भिर्वैज्ञानिकैरिव भूयो भूयो यत्नो विधेयः।

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥

॥ इति शम्॥

---

# *पाणिनिव्याकरण की पारिभाषिकप्रक्रिया का आधार

लेखक :—डाक्टर मङ्गलदेव शास्त्री

संस्कृत-व्याकरण के इतिहास में पाणिनि-व्याकरण का स्थान सबसे ऊँचा है। पाणिनि आचार्य्य का सब से अधिक प्रसिद्ध ग्रन्थ, 'अष्टाध्यायी' है। अपनी विषय-प्रतिपादन की प्रक्रिया के गम्भीर, व्यापक तथा निर्दोष वैज्ञानिक ढंग के कारण यह संस्कृत-साहित्य के प्रधान रत्नों में से एक कहा जा सकता है। इसीसे इसके प्रभाव की थोड़ी बहुत छाप इसके पीछे लिखे गये प्राय: समस्त संस्कृत-व्याकरणों पर देखी जाती है। इसमें सन्देह नहीं कि भारतवर्ष में अत्यन्त प्राचीनकाल से ही व्याकरण-विषयक खोज प्रारम्भ हो गई थी। उस खोज के फल-स्वरूप पाणिनि आचार्य से पहले भी अनेक वैयाकरणों ने अपने अपने व्याकरण लिखे थे। इसका एक प्रमाण 'अष्टाध्यायी' में ही अनेक आचार्य्यों के मतों के उल्लेख का मिलना है। उन आचार्य्यों के ग्रन्थों का अब कोई पता नहीं। इसका मुख्य कारण पाणिनि-व्याकरण की श्रेष्ठता तथा प्रचार-बाहुल्य है। पाणिनि आचार्य्य के पीछे भी अनेक आचार्य्य हुए हैं जिन्होंने अपने अपने व्याकरण लिखे; परन्तु पाणिनि-व्याकरण की समकक्षता किसी को प्राप्त नहीं हुई। इन कारणों से, बिना किसी अतिशयोक्ति के, पाणिनि-व्याकरण को संस्कृत-व्याकरण के उत्कर्ष की चरम-काष्ठा कहा जा सकता है।

पाणिनि-व्याकरण की उत्कृष्टता को सम्पादन करनेवाले कारणों में से एक मुख्य कारण उसकी पारिभाषिक प्रक्रिया है। यहाँ हम इसकी तीन मुख्य पारिभाषिक विशेषताओं पर विचार करेंगे—(१) प्रत्याहार, (२) अनुबन्ध और (३) संज्ञायें। इन विशेषताओं के विषय में अधिकतर पूर्वीय और पाश्चात्य विद्वानों (बर्नेल आदि) की यही धारणा है कि इनका प्रारम्भ पाणिनि आचार्य से ही हुआ है। दूसरे शब्दों में इनको पाणिनि आचार्य की ही नवीनतायें समझना चाहिए। परन्तु नीचे के लेख से प्रतीत होगा कि वस्तुस्थिति में ऐसा नहीं है।

---

* अखिल-भारतवर्षीय ओरियेंटल कान्फ्रेंस के प्रयाग के अधिवेशन में इंग्लिश भाषा में पढ़े गये अपने लेख का सारांश।

## ( १ ) प्रत्याहार

पाणिनि-व्याकरण में प्रयुक्त किये गये प्रत्याहार दो प्रकार के हैं। (१) वे जिनका सम्बन्ध 'अ इ उ ण्' आदि चौदह 'माहेश्वर सूत्रों' से है; जैसे 'अण्', 'अच्', आदि। (२) उनसे भिन्न; जैसे 'सुप्', 'तिङ्', 'सुट्' आदि। आपाततः यही प्रतीत होता है कि प्रत्याहारों की शैली का प्रारम्भ पाणिनि से ही हुआ होगा; क्योंकि यह कहा जा सकता है कि प्रत्याहारों का प्रयोग किसी ऐसे ग्रन्थ में नहीं मिलता जो निर्विवाद रूप से पाणिनि से पूर्व का हो। ऐसा होने पर भी प्रत्याहारों के नीचे दिखलाये हुए कुछ ऐसे प्रयोग हैं जिनका इस सम्बन्ध में अवश्य विचार करना चाहिए।

सबसे पहले हम कात्यायन आचार्य-प्रणीत 'वाजसनेयि-प्रातिशाख्य' को लेते हैं। इस ग्रन्थ में 'तिङ्' प्रत्याहार का प्रयोग सूत्र १।२७ में किया गया है। यह ग्रन्थ पाणिनि-व्याकरण के वार्तिककार कात्यायन का ही बनाया हुआ है या उनके प्राग्वर्ती इसी नाम के किसी दूसरे आचार्य्य की कृति है, इस विषय में विद्वानों में बड़ा विवाद है। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' आदि कई सूत्र; जो 'अष्टाध्यायी' में आये हैं, इस ग्रन्थ में भी ज्यों के त्यों वर्तमान हैं। इस आधार पर तथा कुछ अन्य कारणों से भी कोई-कोई इस ग्रन्थ को पाणिनि से पीछे का मानते हैं। परन्तु प्रातिशाख्य-साहित्य के अनेक वर्षों के अपने अध्ययन के आधार पर हमारी सम्मति तो इसके प्रतिकूल ही है। इस विषय में हमें जो कुछ कहना है उसे हम अन्यत्र कहेंगे। यहाँ केवल इतना ही कह देना पर्य्याप्त होगा कि पाणिनि की रचनाशैली की प्रगाढ़ता और अपनी परिभाषाओं तथा संज्ञाओं के प्रयोग में एकरूपता और अविसंवादिता के साथ 'वाजसनेयि-प्रातिशाख्य' की शैली की अप्रौढ़ता तथा अव्यवस्था की ( तुलना करो— १।३८ तथा ४०; १।५२; ३।६—१० ) तुलना करते हुए यह कोई नहीं कह सकता कि उक्त प्रातिशाख्य पाणिनि से पीछे का है। द्वितीय, 'प्रत्यय' आदि अनेक शब्दों का प्रयोग वा० प्रा० में 'ऋग्वेद-प्रातिशाख्य' के अर्थ ( =पर ) में ही है और यह अर्थ वस्तुतः पाणिनि के अर्थ से पहले का है।

इसके अतिरिक्त 'उणादिसूत्रों' में भी 'जम्' ( ११६ ), 'इक्' ( ५६६ ), 'अच्' ( ५८८ ) इन प्रत्याहारों का प्रयोग हुआ है। ये प्रत्याहार स्पष्टतः पाणिनि के प्रत्याहारों से अभिन्न हैं। इस कारण से तथा 'सम्प्रसारण', 'उपधा', 'वृद्धि', 'श्लु', 'टि' आदि संज्ञाओं के दोनों ( 'अष्टाध्यायी' तथा 'उणादिसूत्र' ) में समान होने से यह कहा जा सकता है कि 'उणादिसूत्र' भी पाणिनि की ही कृति हैं, या कम से कम पाणिनि से पीछे के हैं। परन्तु 'महाभाष्य' ( देखो ६।१।१२३, ७।१।२, ७।३।५०, आदि ) तथा 'अष्टाध्यायी' ( देखो ६।२।१४४, ७।२।६ आदि ) के देखने से यह स्पष्ट हो जाता है कि 'उणादि-

सूत्र' पाणिनि की कृति तो हैं ही नहीं, किन्तु वे पाणिनि से पहले के हैं। पाणिनि-व्याकरण के नवीन टीकाकारों के द्वारा भी इसकी पुष्टि होती है। 'उणादयो बहुलम्' ( ३।३।१ ) सूत्र के ऊपर कैयट कहते हैं—'बहुलवचनमिति। उणादय इत्येव सूत्रमुणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः।" 'शब्देन्दुशेखर' ( ३।३।१ ) में नागेशभट्ट ने भी कहा है—"अनेन भाष्यवार्त्तिकसमूहेन—उणादयो बहुलम्—इति व्याकरणान्तरव्यवस्थापकमिति स्पष्टमेवोक्तम्।"

इसके बाद हम शान्तनव आचार्य के बनाये हुए 'फिट्' सूत्रों को लेते हैं। इन सूत्रों में 'अष्' ( २७ = अच् ), 'खय्' ( ३१ ), 'इक्' ( ४६ ), 'अच्' ( ५१ ) 'हय्' ( ४८, ६६ = हल् ) इन प्रत्याहारों का प्रयोग हुआ है। 'महाभाष्य' के ( ६।१।९२ )—"प्रातिपदिकस्वरस्यावकाशः। आम्रः।" और ( ६।१।१२३ )—"सत्यमेवमेतत्। न त्विदं लक्षणमस्ति प्रातिपदिकस्यादिरुदात्तो भवतीति। इदं पुनरस्ति प्रातिपदिकस्यान्त उदात्तो भवतीति।" इन वचनों से प्रतीत होता है कि ये सूत्र वार्त्तिककार कात्यायन से पूर्व के हैं। ऐसी दशा में इनका पाणिनि से भी पूर्व का होना बहुत सम्भव है।[1]

अन्त में हम पाणिनि-व्याकरण के 'परिभाषापाठ' को लेते हैं। अनेक परिभाषाओं में पाणिनीय प्रत्याहारों का प्रयोग पाया जाता है। इन परिभाषाओं के विषय में नागेशभट्ट आदि का कहना है कि **प्राचीन आचार्य्यों के ग्रन्थों में ये वचनरूप से पठित थीं** परन्तु पाणिनि-व्याकरण में ये ज्ञापकसिद्ध या न्यायसिद्ध हैं। सब परिभाषाओं के विषय में सत्य न होने पर भी यह कथन उन परिभाषाओं के विषय में अवश्य सत्य है जिनका ज्ञापन एकदेशानुमति द्वारा ही होता है। उनके पाणिनि से पूर्व की होने के विषय में कोई सन्देह नहीं हो सकता। ऐसी ही दो परिभाषायें—"गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः" और "श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च। यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि"—हैं। इनमें से पहली परिभाषा पर 'पदमञ्जरी' ( २।२।१९ ) का कहना है—"एवं तर्हि गतिकारकोपपदानामिति परिभाषा पूर्वाचार्यैः पठिता। सूत्रकारेणाप्यतिङ्ग्रहणेन तद्देश आश्रिता। तत्र सामान्यापेक्षं ज्ञापकमिति कृत्स्नमेव परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम्।" 'मनोरमा' (२।२।१९ ) का भी यही कहना है—"यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभस्तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः।" इसी प्रकार उपरि-निर्दिष्ट दूसरी परिभाषा के विषय में भी 'तत्त्वबोधिनी' ( ७।२।१० ) का ऐसा ही मत है। ऐसी दशा में यदि हम केवल इन्हीं दो परिभाषाओं को पाणिनि से प्राचीन आचार्यों की मानें तो उनमें क्रम से 'सुप्' और 'अच्' इन दो प्रत्याहारों का पाठ अवश्य ध्यान देने योग्य है।

---

१ तु० फिट्सूत्र ८६ पर 'सुबोधिनी'—"तस्य पाणिनीयात् पूर्वप्रवृत्तत्वेनादोषात्।"

ऊपर के प्रमाणों से यह प्रतीत होता है कि प्रत्याहारों की शैली का प्रारम्भ पाणिनि आचार्य से नहीं हुआ, तथा उपर्युक्त दोनों प्रकार के प्रत्याहार उनसे पहले प्रयुक्त होते थे। इससे यह सिद्ध होता है कि चौदह 'माहेश्वरसूत्र' इसी या कुछ भिन्न स्वरूप में पाणिनि से पूर्व भी वर्तमान थे। संस्कृत-वैयाकरणों का यह कहना कि वे 'माहेश्वर' (न कि पाणिनीय) हैं, यद्यपि इस कथन का आधार महाभाष्य में नहीं मिलता, इसी बात की पुष्टि करता है। 'वृद्धिरादैच्' (१।१।१) सूत्र के ऊपर 'महाभाष्य' का यह कथन भी कि यहाँ शास्त्र के आदि में 'वृद्धि' शब्द का प्रयोग मङ्गलार्थ है, यही दिखलाता है कि बहुत करके प्रारम्भ के चौदह सूत्र वस्तुतः पाणिनि के न होकर किसी प्राचीन ग्रन्थ से लिये गये हैं।

## (२) अनुबन्ध

अनुबन्धों का प्रयोग प्रायः प्रत्यय के साथ किया जाता है। परन्तु निपातों (जैसे 'आङ्', 'नञ्', 'सुञ्'), धातुओं और प्रातिपदिकों (जैसे 'नदट्', 'चोरट्' ३।१।१३४; 'कुण्डिनच्' २।४।७०) के साथ भी उनका प्रयोग देखा जाता है। पाणिनि से पूर्वकाल के आचार्य उनका प्रयोग किया करते थे यह सामान्यतया 'महाभाष्य' के "पूर्वसूत्रनिर्देशोऽयं वा। पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते।" (७।१।१८ : 'औङ आपः') इस कथन से सिद्ध होता है। 'टा' के स्थान पर 'आङ्' का प्रयोग भी (७।३।१०५, १२०) टीकाकारों के मत से पूर्वाचार्य्यों के ही अनुसार किया गया है। इन असाक्षात् प्रमाणों को छोड़कर निम्नलिखित साक्षात् प्रमाण भी इस बात को सिद्ध करते हैं। जैसे, 'आङ्' (=आ) का प्रयोग 'वाजसनेयि-प्रातिशाख्य' (६।२४) और 'निरुक्त' (११।२४) में पाया जाता है। इसी प्रकार उक्त प्रातिशाख्य में ('ए' 'ओ' के स्थान में) 'एत्' 'ओत्' (१।११४ और ४।६०) तथा 'वांसौ' (=वसौ,५।११) और अथर्वप्रातिशाख्य में 'सन्' (१।८६), 'वसु' (१।८८, ४।३५) आदि में अनुबन्धों का प्रयोग देखा जाता है। कोई-कोई इन्हीं अनुबन्धों को देखकर 'अथर्वप्रतिशाख्य' को पाणिनि से पीछे का मानते हैं। परन्तु उक्त प्रमाणों की दृष्टि से उनके मत की निर्बलता स्पष्ट है। इस विषय में एक दृढ़ प्रमाण, 'महाभाष्य' (४।२।४५) के कथनानुसार पाणिनि से प्राचीन, आपिशलि आचार्य के "धेनुरनञि ठकमुत्पादयति" इस सूत्र में प्रयुक्त 'नञ्' से मिलता है।

इस प्रकार अनुबन्धों का प्रयोग पाणिनि से पूर्व के ग्रन्थों में पाया जाता है। परन्तु इसकी अपेक्षा यह सिद्ध करना, कि पाणिनि से पूर्व भी भिन्न-भिन्न अनुबन्धों का प्रयोजन या अर्थ वही होता था जो पाणिनीय व्याकरण में पाया जाता है, कुछ अधिक कठिन है। 'महाभाष्य' (७।१।१८) से कुछ विद्वानों को इसके विरुद्ध भ्रम भी हो चुका है। परन्तु ध्यानपूर्वक पढ़ने पर 'महाभाष्य' में ही ऐसे प्रमाण मिल सकते हैं जिनसे स्पष्टतया सिद्ध हो जाता है

कि पाणिनि के पूर्व अनुबन्धों का प्रयोजन कम से कम बहुत अंश तक पाणिनि के अनुसार ही होता था। अनेक प्रमाणों में से कुछ नीचे दिये जाते हैं :—

"इह केचिद् द्व्येकयोः फ्यञं विदधति। बहुषु च फकम्" (४।१।९८)। इस पर कैयट—"केचित्=पूर्वे वैयाकरणाः।"

"एवं च कृत्वापिशलेराचार्यस्य विधिरुपपन्नो भवति। धेनुरनञि ठकमुत्पादयति" (४।२।४५)।[1]

"डावतावर्थवैशेष्यात् (५।२।३९)"। इस पर कैयट—"पूर्वाचार्यप्रक्रियापेक्षो निर्देशः। इह तु वतुपं विधाय—आ सर्वनाम्नः—इत्यात्त्वं विहितम्। पूर्वाचार्य्यास्तु डावतुं विदधिरे।"

यदि उक्त कथन ठीक है तो पाणिनि-व्याकरण में ही "प्राचां ष्फस्तद्धितः" (४।१।१७), "आरगुदीचाम्" (४।१।१३०) इत्यादि सूत्रों से विहित प्रत्ययों के साथ लगाये हुए अनुबन्ध भी वस्तुतः उन-उन आचार्य्यों के ग्रन्थों से ही लिये हुए समझने चाहिएँ। 'उणादिसूत्र', 'फिट्-सूत्र' और 'अथर्व-प्राति शाख्य' में भी इसी प्रकार के अनुबन्धयुक्त प्रत्यय पाये जाते हैं।

## (३) संज्ञायें

पाणिनि-व्याकरण में पारिभाषिक संज्ञायें दो प्रकार की हैं—(१) अकृत्रिम या अन्वर्थ-संज्ञायें, (२) कृत्रिम संज्ञायें। अकृत्रिम संज्ञाओं के विषय में तो यह निःसंकोच भाव से कहा जा सकता है कि वे प्रायः सबकी सब पूर्वाचार्यों के ग्रन्थों से ली गई हैं। "पूर्वाचार्यसंज्ञा चेयं महती। तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम्। उत्तरपदार्थप्रधानस्तत्पुरुष इति" (२।१।२२) इत्यादि 'काशिका' आदि के वचनों से भी यही सिद्ध होता है। "अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" के अनुसार सर्वथा लाघव पर तुले हुए पाणिनि जैसे आचार्य के ग्रन्थ में अनेक महती अन्वर्थ संज्ञाओं के रखने का वस्तुतः कारण भी यही हो सकता है कि उन संज्ञाओं का व्यवहार अतिप्राचीन काल से चला आता था। उस चिरकालीन व्यवहार के अनुरोधवश ही पाणिनि को भी उनका प्रयोग करना पड़ा।

पाणिनि से पहले के आचार्यों के ग्रन्थों में अनेकानेक 'पाणिनीय' अन्वर्थ संज्ञाओं का पाया जाना उक्त बात को स्पष्टतया सिद्ध करता है। ऐसे कुछ उदाहरण नीचे दिये गये हैं।

---

१ तु० न्यास ४।२।४५ :—"एवं कृत्वापिशलेर्विधिरुपपन्नो भवति।.........'धेनोरनञः' इति। एतद्धि तत्सूत्रम्। अस्यायमर्थः। धेनुशब्दः समूहेऽर्थे ठकमुत्पादयति।"

'निरुक्त' में ही 'सर्वनाम', 'कृत्', 'विभक्ति', 'उपधा', 'तद्धित', 'पुरुष ( प्रथम, मध्यम और उत्तम ),' 'गुण' ( १०।१७ ) इत्यादि संज्ञायें पाई जाती हैं । 'वा० प्रातिशाख्य' में 'लुक्' (=लोप १।११४, ३।१३ ), 'आमन्त्रित' ( २।१७ ), 'संख्या' ( ५।२७ ), 'वृद्धि' ( ५।२६ ) आदि का; तथा 'अथर्वप्रातिशाख्य' में 'प्रत्यय' ( २।८७ ), 'प्रातिपदिक' ( ३।७८ ), 'कर्मप्रवचनीय' ( ४।३ ), 'वृद्ध' ( ४।५५ ) आदि का प्रयोग पाया जाता है। 'उणादिसूत्र' की संज्ञाओं का उल्लेख हम ऊपर कर चुके हैं। इस विषय में और भी अनेक प्रमाण हैं जिनका उल्लेख करना यहाँ अनावश्यक है।

परन्तु पाणिनीय कृत्रिम संज्ञाओं के विषय में एकाएक ऐसा कहना ज़रा कठिन है। 'घु', 'घ', 'घि', आदि संज्ञाओं का प्रयोग निर्विवादरूप से पाणिनि से पूर्व के ग्रन्थों में प्रायः नहीं दिखलाया जा सकता; तो भी यह नहीं कहा जा सकता कि पाणिनि से पूर्व कृत्रिम संज्ञाओं का व्यवहार बिलकुल नहीं होता था; क्योंकि 'महाभाष्य' और 'वार्त्तिकपाठ' में ही अनेक कृत्रिम संज्ञायें पाई जाती हैं जो पाणिनीय संज्ञाओं से भिन्न हैं और जो कैयट आदि टीकाकारों के अनुसार पूर्वाचार्य्यों की हैं। कुछ के उदाहरण ये हैं—

तण्—"बहुलं तणि। किमिदं तणीति। संज्ञाछन्दसोर्ग्रहणम्।" ( महाभाष्य २।४।५४ )।

ल—"प्रमाणे लः" (=लुक्) ( महाभाष्य ५।२।३७ )। इस पर 'पदमञ्जरी'—"लुक एषा पूर्वाचार्यसंज्ञा।"

घु—"घोः। किमिदं घोरिति। उत्तरपदस्येति।" ( महाभाष्य ७।३।३ )।[1]

पाणिनि-व्याकरण में इन संज्ञाओं के स्थान में अकृत्रिम संज्ञाओं का प्रयोग किया गया है। लाघव की दृष्टि से पाणिनि को इन प्राचीन संज्ञाओं को अपना लेना चाहिये था। ऐसी दशा में भी उनके स्थान में अकृत्रिम संज्ञाओं का रखना इस बात को सिद्ध करता है कि पाणिनि कृत्रिम संज्ञाओं की अपेक्षा अकृत्रिम संज्ञाओं को ही अधिक पसन्द करते थे। फिर भी पाणिनि व्याकरण में 'घु' 'घ' आदि कुछ कृत्रिम संज्ञायें पाई जाती हैं। इसका कारण यही हो सकता है कि ये संज्ञायें भी पूर्वाचार्यों के ग्रन्थों में व्यवहार में लाई जाती थीं। उसी व्यवहार के अनुरोध से पाणिनि को इन्हें अपनाना पड़ा। इसलिये पाणिनि की अकृत्रिम संज्ञाओं की तरह कृत्रिम संज्ञायें भी प्रायेण पूर्वाचार्यों से ली हुई प्रतीत होती हैं।

---

१ तु० कैयटः—"घुशब्देनोत्तरपदं पूर्वाचार्यप्रसिद्ध्योच्यते।"

## उपसंहार

यदि ऊपर के प्रमाण ठीक हैं तो उनसे यही सिद्ध होता है कि पाणिनीय व्याकरण की पारिभाषिक प्रक्रिया का आधार बहुत अधिक अंश तक प्राचीन आचार्यों के ग्रन्थ थे। दूसरे शब्दों में 'अष्टाध्यायी' में पाणिनि-आचार्य की नवीनता उसी प्रकार की है जैसी पाणिनि के पीछे लिखे गये 'चान्द्र' आदि अनेक व्याकरणों में उनके लिखनेवालों की। इससे इस सामान्य सिद्धान्त की भी पुष्टि होती है कि सभ्यता की भिन्न-भिन्न शाखाओं की तरह प्रत्येक शास्त्र और विज्ञान की उन्नति भी शनैः शनैः विकास का ही फल है।

——

# भास्कराचार्यस्तत्पूर्ववर्तिनश्च ।

(लेखकः—पं० अनूपमिश्रः)

भगवतः षडङ्गिनो वेदस्य प्रधानाङ्गचतुष्टेनादृतं सिद्धान्तसंहिताहोरारूपस्कन्धत्रयविशिष्टं ज्योतिश्शास्त्रमिदमनादि, यस्य प्रवर्त्तकाः सूर्यपितामहव्यासात्रिपराशरादयोऽष्टादश महर्षयः प्रसिद्धाः । केचनैतदतिरिक्ता अपि लगधादयो महर्षयस्तत्कर्त्तारो बहुत्रोपलभ्यमानाः प्रायश एतेषामन्यतमा अन्ये वेत्यत्र पुरातत्त्वविदः प्रमाणम् । सत्यपि तत्तत्प्रसङ्गागते ज्योतिर्विषयजाते वेदगते, दिग्दर्शिते च तस्मिन् देवर्षिभिः स्वस्वसंहितादौ ( तदानीं सूर्यसिद्धान्तोदयो नासीत्; प्रकृतार्यभटीयग्रन्थानन्तरसमकालमेव ५०० तमेशवीयाब्दे स जात इति ध्येयम् ), स्कन्धत्रयप्रधानस्य सिद्धान्तविषयीभूतग्रहनक्षत्रचरितस्य लौकिकधर्मकृत्यादिनिरूपणोपयुक्तस्य सारसंग्रहरूपेणैकत्र सद्यः समुपस्थितिमाकाङ्क्षता सिद्धान्तकारिणामाचार्याणामादिमेन कुसुमपुरवास्तव्येन श्रीमदार्यभटाचार्येण ४९६ तमेशवीयवर्षे तत्कालीनालौकिकप्रतिभाप्रदर्शनपूर्वकं सर्वप्रथमं स्वसिद्धान्तग्रन्थरत्नं लघ्वार्यभटीयमकारि । यत्र गीतिकापादः, गणितपादः, कालक्रियापादः, गोलपादश्चेति चत्वारोऽध्यायाः परिकल्पिताः । आदौ गीतिकापादे स्वकल्पितगुप्तकल्पसंकेतेन ग्रहमन्दोच्चादिभगणाः, गणितपादे व्यावहारिकवर्गघनखातफलादिवर्णनम्, कालक्रियापादे सौरचान्द्रसावननाक्षत्रक्षयाधिमासबार्हस्पत्याब्दादिनिरूपकाः समस्ताः कालसम्बन्धिनो विषयाः, चरमे च गोलपादे संक्षेपतो निखिलो गोलक्षेत्रादिप्रपञ्चः प्रदर्शितः । एषामादिमो गीतिकापादः परिभाषारूपः, शिष्टं पादत्रयं मुख्यत्वेन वस्तुतत्त्वनिदर्शनात्मकमत एव 'आर्यभटस्त्रीणि निगदति गणितं कालक्रियां गोलम्' इत्युक्तम् । किञ्च सर्वमिदन्तदानीन्तननवीनपारिभाषिकाप्रसिद्धशब्दजालविन्यासेन कृतमिति ।

ज्यौतिषसिद्धान्तेतिहासपर्यालोचनतोऽयमेवार्यभटः सूर्यांशपुरुषत्वेन प्रतीयमानोऽवधार्यते, रचितेऽप्यार्यभटीये पठनपाठनाय तस्यानुपयुक्ततयैतदादेशमादाय केनापि सूर्यसिद्धान्तो रचित इति कल्पनं नानुचितं प्रतिभाति, द्वयोर्मिथः सामञ्जस्यावलोकनाद् घातार्थबोधकसंवर्गादिसमशब्दसन्निवेशाच्च । एतस्य हि सूर्यांशपुरुषत्वप्रतिपादन एकमतिप्राचीनम्पद्यमपि साक्ष्यन्ददाति यथा—

"सिद्धान्तपञ्चकविधावपि दृग्विरुद्धमौढ्योपरागमुखखेचरचारक्लृप्तौ ।
सूर्यः स्वयं कुसुमपुर्यभवत् कलौ तु भूगोलवित्कुलप आर्यभटाभिधानः ॥"*

---

* See Aryabhatiya, by Dr. Kern.

यावदिदानीमयमेव केवलः प्राचामाचार्याणामक्षवशतो भुवः परिभ्रमणं सूर्यस्य च स्थैर्यं निरूपितवान्। एतदेव मूलमुल्लक्ष्याधुनिकाः पाश्चात्यविदो नवीनसरण्या प्राच्यसिद्धान्तभिन्नां भूग्रहनक्षत्रकक्षां परिकल्प्य तदाधारतोऽपि शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्तच्छायादिकं गणितागतं दृक्तुल्यतामुपगतमामनन्ति। तत्कल्पितकक्षाक्रमस्त्वेवमस्ति यथा—सर्वे ग्रहादयः सूर्यं परितो भ्रमन्तीति सूर्यः स्वयं स्थिरः, तत उपर्युपरि क्रमेण बुधः, शुक्रः, भूः, भौमः, गुरुः, शनिः, युरेनस्, नेप्च्यून्। भौमादूर्ध्वे गुरोरधः कतिचनाकिञ्चना विचित्रगतिकाः क्षणं लुप्तप्रायाः क्षणं देदीप्यमानाः स्फुरन्तो गगनेचराः कुहचिद् दृष्टिगोचरा जायन्ते, परन्तु तेषां ग्रहत्वेन गणनाऽशक्यत्वान्न कृता प्रारम्भिकपाश्चात्यसिद्धान्तकृता, तथैतेषु चरमौ नवीनावेव ग्रहौ प्रत्यक्षमुपलब्धौ तेषाम्। ननु तदानीं प्राच्यसिद्धान्तप्रवृत्तिसमये साम्प्रतिकगुरुभौमकक्षान्तरालवर्तिग्रहमण्डलवद्मिावप्यलक्षणीयावास्तां समयभेदादिति सम्भावये। सत्यपि कक्षाक्रमभेदे वेदेऽपि तथैवोदितत्वाद्भूसूर्ययोरन्यतरस्थैर्यस्यानिवार्यतयोभयक्रमतोऽपि गणितागतं ग्रहणादि न तथान्तरितमिति प्राच्यप्रतीच्यसिद्धान्तरहस्यवेदिभिः कतिधा परीक्षितमपि।

गणितपादे "सदृशत्रयसंवर्गो घनस्तथा द्वादशाश्रि स्या"-दित्यनेन समद्विघातरूपवर्गोक्तिवत् समत्रिघातरूपघनस्य वस्तुतो यज्ञरुभ्वन्विसमचतुर्भुजकुण्डफलस्य, यत्र तत्र वा तादृग्विधस्य खातविशेषफलस्य तथा मगधदेशे धान्यादिमापकत्वेनादृतस्य घनहस्तस्य च संज्ञा विलक्षणा निरूपिता, मापकपरा घनहस्तसंज्ञा भास्कराचार्योदितापि 'हस्तोन्मितैर्विस्तृतिदैर्घ्यपिण्डैर्यद्द्वादशास्रं घनहस्तसंज्ञ-'मित्येवंरूपामुमेवाशयमनुसरन्ती विशेषतो विशदार्था। खातव्यवहारे च "क्षेत्रफलं वेधगुणं खाते घनहस्तसंख्या स्या"-दित्यनेन चेद्वर्गक्षेत्राधारभुजतुल्योच्छ्रितिविशिष्टं समखातमपेक्षितन्तदा तद्घनफलानयनेऽपि तदाधारक्षेत्रफलन्तावद्वर्गत्वेन समद्विघातात्मकन्तथा तत्पुनराधारविस्तृतिवेधगुणं खातघनफलमिति समत्रिघातात्मकं घनफलं साधु तदनुसार्येवोपपादितम्। मनुकालनिरूपणप्रसङ्गे त्वार्यभटेन द्विसप्ततिमहायुगैरेको मनुरित्युक्तम्। परन्त्वन्याचार्यमतानुसारेणैकमहायुगस्तत्राधिकोऽनुचित एवालोच्यते परम्परालोचकैः। भास्करेणापि—'मनुः क्षमानगैर्युगै-'रित्येवोक्तम्। एवं 'चतुरधिकं शतमष्टगुणं द्वाषष्टिस्तथा सहस्राणाम्। अयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाहः' इत्यनेन व्यासपरिधिसम्बन्धोऽतिसमीचीनः प्रदर्शितः। भास्करीयगोलाध्यायभुवनकोशे भूपरिधिमानावधारणप्रसङ्गे स्वमिताक्षरे 'अयुतद्वयव्यासे द्विकाग्न्यष्टयमर्तुमितः परिधिरार्यभटाद्यैरङ्गीकृत' इति प्रमाणादानोक्त्यास्यैव परिग्रहणमवसीयते। आभ्यामेव व्यासपरिधिभ्यामनुपातेन ३९२७ व्यासे निरवशेषं परिधिमानं १२३४० समायाति। अत एव 'व्यासे भनन्दाग्निहते विभक्ते खबाणसूर्यै-'रिति तदुक्तं सूक्ष्मपरिध्यानयनमप्युपपद्यते।

गोलपादे 'मध्यज्योदयजीवासंवर्गे व्यासदलहृते यत्स्यात्। तन्मध्यज्याकृत्योरन्तरमूलं स्वदृक्क्षेपः' इत्यनेन वित्रिभनतांशज्यापरनामधेयो दृक्क्षेपः साधितो यश्च वित्रिभदशमलग्नान्तरांशकोटिव्यासार्धपरिणतः संवृत्तत्रिज्याव्यासार्धपरिणामनमपेक्षमाणोऽशुद्ध एव (स्थूलः) सिद्ध्यति।

अयमेव सौरे मध्यदृक्क्षेपः कथ्यते। यतस्त्रिज्याकर्णे उदयज्या भुजस्तदा मध्यज्याकर्णे किमित्यनुपातलभ्या वित्रिभखलग्नान्तरांशज्याऽथ—मध्यनतांशाः कर्णः, आनीतज्यावाश्चापांशा भुजः वित्रिभनतांशाः कोटिरित्येतच्चापजात्यस्य ज्याक्षेत्रविधानावसरे भुजकर्णचापजीवे वास्तवे, परन्तु कोटिचापजीवा स्वभुजकोटिचापव्यासार्धपरिणतैवेति ज्याक्षेत्रविदामतिरोहितम्, तेनार्यभटोक्तो दृक्क्षेपस्त्रिज्यागुणः खवित्रिभान्तरांशकोटिज्यया भक्तः सन् वास्तवो भवेत्।

आर्यभटानन्तरन्तदीयसिद्धान्तग्रन्थाध्ययनपरिशीलनलब्धबोधविभवैर्लल्लादिभिश्चार्यभटीयस्थकतिपयस्थूलसन्दिग्धविषयान् संशोध्य सविस्तरं विशदीकृत्य स्वस्वानुभूतिलब्धतदङ्गभूतविषयनिचयसेचिताः पञ्चषसिद्धान्तग्रन्था विरचिताः, यथा लल्लेन शिष्यधीवृद्धिदः, वराहमिहिरेण पौलिशरोमकवासिष्ठसौरपैतामहमतप्रकाशिका पञ्चसिद्धान्तिका, ब्रह्मगुप्तेन ब्राह्मस्फुटसिद्धान्तः, श्रीपतिना सिद्धान्तशेखरः, द्वितीयार्यभटेन महासिद्धान्तश्चेति। तेषां ब्राह्मस्फुटसिद्धान्तो नु समग्रो विष्णुधर्मोत्तरपुराणीयब्रह्मसिद्धान्तानुयायी, यस्य द्वादशाध्याये पाटीगणितसम्बन्धिविचारे वृत्तान्तर्बद्धनियतभुजफलस्य विषमचतुर्भुजस्य केवलं भुजेभ्य एव तत्कर्णयोरानयनं युक्तियुक्तमेवातिचमत्कृतं कृतं ब्रह्मगुप्तेन, यच्च लेखकपरम्परादोषतस्तत्पद्यस्य 'कर्णाश्रितभुजघातैक्य'-मित्यादेः शीर्षकलेखे 'वृत्तान्तर्विषमचतुर्भुजकर्णानयन'-मित्यत्र केवलं......विषमचतुर्भुजकर्णानयनमवलोक्य व्यर्थमेवाखण्डयद्भास्कर इति तदुपपत्तिसमीक्षावतामपरोक्षमेव यतो ब्रह्मगुप्तेनापि साधारणविषमचतुर्भुजस्यास्थैर्यविषये बहु प्रपञ्चितमिति। एतेषां लल्लकृतधीवृद्धिदस्यातिपरिमार्जितत्वेन भास्करसिद्धान्तोदयं यावत्पर्याप्तः प्रचारो जातः, श्रीमद्भास्कराचार्योऽपि बाल्यकाले तमेवाधीतवान्।

एवं प्रचलितेष्वपि बहुषु सिद्धान्तग्रन्थेषु यथाऽगाधसागरे निमज्योन्मज्य जनस्तन्महत्त्वमनुमातुं प्रभवति, कमपि साहसविशेषञ्चाधिकरोति तथैवात्रापि तदवधि प्रशस्येषु तेषु सत्यधिकगम्भीरदृष्टिसमीक्षणतःकतिपयानामावश्यकविषयाणामभावः, उपपत्तिप्रपञ्चसंकीर्णता, प्रस्तुतविषयस्वरूपनिरूपणे मिथोऽसामञ्जस्यम्, सौगम्यमपहाय बहु वृथा जल्पनम्, अन्धपरम्परोदितमानावधारणञ्चेत्यादि बहुत्र समवलोक्य सर्वतः समीक्ष्य च पुनर्नवीनसरणिसञ्चालितस्य सिद्धान्तग्रन्थस्यावश्यकता भास्करचेतसि समुद्भूता। तत्प्रेरित एवायं श्रीमद्भास्कराचार्यः १०३६ तमशकाब्दलब्धजन्मा जन्मान्तरार्जितपुण्यबलादेवोपयुक्तसर्वसिद्धान्तग्रन्थानालोड्य, नीरक्षीरविवेकन्यायोपनततत्सारमुद्धृत्य विष्णुधर्मोत्तरपुराणमार्षं मत्वा नैजबुद्धिप्रभावेणान्वर्थनामानं सिद्धान्तशिरोमणिमपूर्वं विरचयामास। ततः प्रभृति सर्वैरयमेवाध्ययनाध्यापनार्हत्वेनादृतो भारतीयैराशास्यते चासृष्ट्यन्तमस्य स्फारः प्रचारः स्थास्यति। यथार्थतस्तात्त्विकदृष्ट्या यथात्रालंकारिकशब्दविन्यासः, पदलालित्यम्, सिद्धान्तसम्बन्धिविषयक्रमसन्दर्भः, तत्तत्प्रसङ्गागतविषयाणामावश्यकपरिमितसाधुसमाधानम्, पूर्वास्पृष्टविषयाणां वस्तुस्थितिनिरूपणपूर्वकोपपत्तिसम्पत्तिसन्दर्शनम्, परोक्तानुचितसमाधानस्य सभ्यतापूर्णं खण्डनम्, 'बालादपि सुभाषित'मित्यनुसारि परोदितस्यापि समुपयुक्तस्योदारबुद्ध्याभिमण्डनम्, भौगोलिकविस्तृतविवरणञ्चेत्यादि समवलोक्यते न तथान्यत्र कुत्रापि प्राचीने वार्वाचीने सिद्धान्त-

ग्रन्थे। अस्य हि चत्वारो विभागास्तद्विषयकाः स्वतन्त्ररूपेण पृथक् पृथक् स्वस्वनाम्ना विभाजिताः सन्ति, यथा—व्यक्तगणितम् (लीलावती), अव्यक्तगणितम् (बीजगणितम्), गणिताध्यायः, गोलाध्यायश्चेति।

व्यक्ताव्यक्तगणितयोरुद्देष्यमाणनवीनगणितसम्बन्धिचमत्काराणां भास्करस्य ह्यङ्कुरावस्था तदैव परिणतेति लीलावतीस्थ-'माणिक्याष्टकमिन्द्रनीलदशक'-मित्युदाहरणगणिते "तानि च यथाकथञ्चित् कल्पिते भिन्नानीति......स्वधिया कल्पितमिष्टम् ९६" इति नाम ४, ६, ९६, १ अङ्कानां वस्तुतो लघुतमापवर्त्यो L. C. M. युक्त एव गृहीतस्तेन। यत् किल 'षड्भक्तः पञ्चाग्र' इत्युदाहरणे सर्वत्रैव रूपोनहरसमशेषे प्रत्यक्षे सर्वहराणामपवर्त्यो रूपोन एवाभिन्नराशिरा-शुलभ्य इति जानतापि बहुविस्तारो राशिज्ञानार्थमायासः कृतस्तत्प्रकृताव्यक्तगणितप्रासङ्गिकानेक-वर्णसमीकरणगणितोदाहरणविवरणनिरूपणार्थमेवावधेयम्। तथा च 'परस्परं भाजितयोर्ययोर्यः शेषस्तयोः स्यादपवर्त्तनं सः' इत्यनेन नवीनगणितोपकरणीभूतो दृढाङ्कत्वविधायको महत्तमापवर्त्त-नाङ्को G. C. M. निरूपितः। एवमिह कुट्टकचक्रवालश्रेढीव्यवहाराङ्कपाशसंज्ञकविचित्रगणित-प्रदर्शनमस्य गणितेऽतीव पाटवमावहति। कुट्टके दृढहरभाज्यक्षेपवशतो (१) भाज्यक्षेपयोरपव-र्तितयोरपि यथागतो गुणो वास्तविक एव। (२) भाज्यभाजकयोरपवर्तितयोस्तु यथागतो गुणोऽ-पवर्त्तनसंगुणः सन् वास्तवो भवेदिति 'भवति कुट्टविधेर्युतिभाज्ययो'-रित्यादौ कथितं भास्करेण, तावतैव (१) संस्थायां यथागता लब्धिरेवापवर्त्तनसंगुणा सती समपेक्षिता स्यादित्यर्थत एव फलति। अथवा 'तं गुणं गणक कीर्त्तयाशु मे' इत्यादौ सर्वत्रैव गुणस्यैवापेक्षितत्वात्तन्निरूपणमेवालमिति नात्र सन्देहावसरः स्तोकोऽपि; तथापि कृष्णदैवज्ञेन नवाङ्कुरायां 'अपवर्त्तनसंगुणः' इत्यस्य देहलीदीपन्यायवदुभयत्रावस्थितिमिच्छता यथाकथञ्चित्सभ्रूभङ्गक्लेशं लिङ्गविपरिणामपूर्वकमुचित-समाधानमपि दत्तम्।

गणिताध्याये गतिस्फुटीकरणप्रसङ्गे 'दिनान्तरस्पष्टखगान्तरं स्या'-दित्यादिनादौ प्राचीन-परम्परोदितां स्थूलगतिं प्रदर्श्य भाष्ये 'यदि त्रिज्यातुल्यया कोटिज्ययाद्यं भोग्यखण्डं लभ्यते तदेष्टया कि'-मित्यनुपातलभ्यतात्कालिकस्फुटभोग्यखण्डवशतो गतेस्तात्कालिकीकरणं यदुक्तन्तदतीव प्राचीनोक्तात्सूक्ष्ममवश्यमेवन्तदनन्तरपाश्चात्यगणितविषयोट्टङ्कितसाम्प्रतिकचलनकलनप्रतिपादितता-त्कालिकगत्यानयनप्रकारानुकार इव चेदिहापि तत्त्वाश्विमितकलानां ज्याचापयोरभेदः परिकल्प्यते, तावता चलनकलनस्यापि तात्त्विकपरिज्ञानमासीदिति व्यज्यते। गोलाध्याये वलनानयनं क्रमज्य-यैव कार्यमित्येतत्प्रसङ्गे युक्तियुक्तं बहुधा प्रतिपादितम्। तथा प्राचीनोक्तमुत्क्रमज्यात्रशतस्तदा-नयनं खण्डितम्। तत्रैव 'क्रमक्रान्तेरिदं वीक्ष्य भ्रान्तिं त्यजत बालिशा' इत्यावेशपरमपिं वाक्यमुद्धृतमिति।

कैश्चिद् भट्टोत्पलस्यापि भास्करपूर्ववर्त्तित्वमदर्शि केवलं 'वस्वष्टाष्टमिते शाके' इत्यवलोकनात्, तन्न युक्तं यतो भास्करसिद्धान्तशिरोमणिपद्यं बृहज्जातकटीकायां प्रमाणरूपेणोद्धृतं भट्टोत्पलेन,

भास्करश्चैकादशशकशताब्दीयस्तेन न तत्प्राचीनत्वमपि त्वर्वाचीनत्वमेव स्फुटीभवति, यथार्थत स्तत्समयः १६८८ शकाब्दो भवितुमर्हति, बहुधा लेखकपरम्परया 'वस्वष्टाष्टमिते' इत्यत्र 'वस्वष्टाष्टमिते' एवं पाठः परिभ्रष्टोऽवशिष्टः प्रतीयते ।

सिद्धान्तसागरविशस्तसमस्तवस्तुनामाङ्कनेऽपि विततात्कृतिमीतिरस्मात् ।
यत्किञ्चिदेव तुलनात्मकमुक्तमार्यैर्दृष्टान्तकल्पमवगम्यमलं शतेन ॥

---

# मीमांसकसर्वस्वम्

## ( अपूर्वविमर्शः )

लेखकः—म० म० पं० चिन्नस्वामिशास्त्री ।

अथ किमिदमपूर्वं नाम ? अत्राहुर्वार्त्तिककाराः श्रीकुमारिलपादाः—

"कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा साऽपूर्वमुच्यते ॥

प्रधानकर्मणामङ्गकर्मणां वा प्राक्करणात्स्वर्गादिप्राप्त्ययोग्याः पुरुषाः, क्रतवश्च स्वर्गकार्यायोग्याः । तामुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इति अवश्यं सर्वैराभ्युपगन्तव्यम् । असत्यां तस्यामकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वमित्युपदिश्यते" इति ( तं० वा०, पृ० ३९४, पूना सं० ) ।

अस्यायं सारसङ्ग्रहः—

श्रुतौ स्वर्गपुत्रपश्वादितत्तत्फलसाधनत्वेन विविधानि विहितानि कर्माणि । तेषाञ्च तत्साधनत्वं तादृशश्रुतिबलादेवावगम्यते । तानि च यावन्नानुष्ठानेनात्मानं लभन्ते, तावद् असिद्धस्वरूपाणि तत्तत्फलं प्रति साधनत्वमेव न प्रतिपत्तुमीशते । पुरुषो वा तत्तत्फलोपभोगेच्छुः तानि यावद् यथावन्नानुतिष्ठति कर्माणि, तावदात्मन्यनुपलब्धकर्तृत्वः तत्तत्फलभोगयोग्य एव न भवति । तामिमां कर्मनिष्ठां पुरुषनिष्ठाञ्चायोग्यतां दूरीकर्तुं तानि तानि कर्माणि स्वस्वाङ्गसहितान्यनुष्ठातव्यानि । अनुष्ठितेष्वपि तेषु क्षणिकेषु न कालान्तरभावि फलं प्रति साधनत्वं समवेतुं शक्नोति । नियमो ह्ययं सर्वजनसम्मतः सर्वशास्त्राभिमतश्च, यत्कार्याव्यवहितपूर्ववर्तिना कारणेनावश्यं भाव्यमिति । स्वर्गादयो हि जन्मान्तरैकभोग्या बहुना कालेन व्यवहिताः । पुत्रपश्वादयो यद्यप्यस्मिन्नपि जन्मनि भोक्तुं शक्यन्ते, तथापि कियत्या चन कालकलया व्यवहिता एव । न हि कर्मानुष्ठानसमनन्तरक्षण एव पुत्रपश्वादीनामुत्पत्तिः केनाप्यनुभवितुं शक्यते । तत्र द्वित्रक्षणव्यवधानेऽपि यदाव्यवहितपूर्ववृत्तित्वं न शक्यते सम्पादयितुं, तदा का कथा बहुकालव्यवधाने । श्रुतञ्च तेषां साधनत्वम्—'स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत', 'चित्रया यजेत पशुकामः', 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादिभिर्वचनजातैः । तच्च साधनत्वं यथा निर्व्यूढं भवेत्, तथा यतितव्यम् । अतश्च यागादिजन्यः क्वचिदाश्रितः यावत्फलोत्पत्त्यवस्थितिमान् वस्तुविशेषः कश्चित्कल्प्यते । स च स्वयोग्यं फलमुत्पाद्य विनश्यति । स एव वस्तुविशेषोऽत्र शास्त्रेऽपूर्वपदेन व्यपदिश्यते ।

अस्यैव च—अतिशयः, अदृष्टम्, शक्तिः, योग्यतेति पर्यायाः। फलोत्पत्तये कल्प्यमानोऽयं पदार्थः, यत्र स्थितस्सन् फलमुत्पादयितुं प्रभवति, तत्रैव कल्प्यते। अतश्च यागादिक्रिया-व्यापारोऽप्ययं न यागादिषु कल्प्यते, तेषां स्वोत्पत्तितृतीयक्षणविनाशित्वात्। तदाश्रितत्वकल्पने आश्रयनाशे आश्रयिणोऽपि नाशापत्त्या तत्कल्पनमेव विफलं स्यात्। अत एवोक्तमाचार्येणाधि-करणे द्वितीयप्रथमे—

'शक्तिः कार्यानुमेयत्वात् यद्गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयापि वा'॥ इति।

(तं॰ वा॰, पृ॰ ३९८)

एवञ्च स्वर्गयागयोः श्रुतसाध्यसाधनभावान्यथानुपपत्त्या कल्पितत्वात् अस्य श्रुतार्थापत्ति-प्रमाणगम्यत्वमित्यपि प्रमाणविदः। अयमेव पदार्थः स्तम्भस्थानीयो मीमांसाशास्त्रनिकेतनस्य। इममेव चाश्रित्य प्राधान्येन मीमांसाशास्त्रं प्रवर्तत इति सुदृढं वक्तुं शक्यते।

तथाहि—मीमांसाशास्त्रे हि प्रमाणस्वरूपसाधनफलैः सपरिकरैर्धर्मो विचार्यते। सर्वो हि पुरुषः आत्मने सुखमभिलषन् तत्सिद्धये तत्साधनमन्विष्यति। अन्विष्य च तत्सम्पादनाय यतमानः तदर्थान् सर्वानपि व्यापारान् अनुतिष्ठति। यथावदनुष्ठिते साधने तेन फलमुत्पाद्यते। उत्पन्ने च फले तद्यथासमयं यथायोग्यमुपभुङ्क्ते इति लोकविदितम्। तत्र स्वर्गादिकं साम्परायिकं सुखविशेषं देशविशेषं वेतिहासपुराणादितोऽवगच्छन्नधिकारिपुरुषविशेषः तमात्मने-ऽभिलषति। अभिलषंश्च तत्साधनं मृगयते। मृगयमाणश्च श्रुत्यादितो यागादिकं तत्साधन-त्वेनावगच्छति। अवगच्छन्नपि क्षणिकस्य तस्य कालान्तरभाविफलसाधनत्वे विसंवदन् तज्जन्यं कालान्तरभाविफलपर्यन्तावस्थायिनं कञ्चन पदार्थं कल्पयन् गतसन्देहो भवति। एवञ्च यावदान्तरालिकतया न कल्प्यते कश्चित्पदार्थस्तावद्यागादेस्साधनत्वमेव न सिध्यति। अलब्धसाध-नत्वो यागादिः कथं वा फलं जनयेत्? फलाजनने च बहुकष्टधनव्ययसाध्ये तस्मिन् कः प्रवर्तेत? अप्रवृत्तौ वा कथं प्रवर्तकत्वं वेदस्य? कथं वा श्रेयस्साधनत्वाभाववतस्तस्य धर्मत्वम्? तदभावे च धर्मविचारशास्त्रस्य सर्वथा निरालम्बनत्वमेवेति सर्वमाकुलितं भवेत्। अतो धर्मविचा-राख्यस्य मीमांसाशास्त्रस्य मुख्यतममिदमवलम्बनम्—यदिदमपूर्वं नाम।

तदिदमपूर्वं विहितकर्मणः फलसाधनत्वसिद्धये तत्र यथा कल्प्यते, एवं निषिद्धकर्मणोऽपि नरकादिजननार्थं तत्रापि कल्प्यते। उभयस्याप्यपूर्वमिति साधारणं नाम। विशिष्य तु विहित-कर्मजन्यं पुण्यमिति, निषिद्धकर्मजन्यं पापमिति च व्यवह्रियते। इमे एव च पुण्यपापे वैशेषि-कादिमते धर्माधर्मशब्देन व्यपदिश्येते। यद्यपि मीमांसकमतेऽस्यापूर्वस्य प्राधान्यं सविशेषं जागर्ति, परं शास्त्रान्तरकारैरपीदमवश्यमभ्युपगन्तव्यम्, अभ्युपगच्छन्ति च ते।

उक्तं हि भगवता प्रशस्तपादेन—"धर्मः पुरुषगुणः कर्तुः प्रियहितमोक्षहेतुः, अतीन्द्रियो-ऽन्त्यसुखसंविज्ञानविरोधी, पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियत-

साधननिमित्तः, तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि" ( प्र० भा०, पृ० १३८, चौ० सं० ) इति, "अधर्मोऽप्यात्मगुणः, तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि" इति (प्र० भा०, पृ०१४२)

अनेन श्रुतिविहितयज्ञादिरूपक्रियाजन्यो यावत्फलोदयं कर्त्राश्रितः फलोत्पत्तिनाश्यः, अतीन्द्रियः पदार्थविशेष एव धर्मः, तादृशो निषिद्धक्रियाजन्योऽधर्मः इति फलितम्। नैयायिकादयोऽपूर्वमेव धर्मं कथयन्ति। मीमांसकास्तु विहितनिषिद्धक्रिये एव। सर्वथा त्वपूर्वाङ्गीकरणे नास्ति विवादलेशोऽपि। उक्तं ह्याचार्यजयन्तभट्टेनापि—

"एवञ्च क्षणभङ्गित्वात्संस्कारद्वारिका स्थितिः।
स कर्मजन्यसंस्कारो धर्माधर्मगिरोच्यते" ॥ इति।

तथा—

"प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते। स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयती"ति ( न्या० भा०, पृ० ७२५, चौ० सं० ) न्यायसूत्रभाष्यकारो भगवान् वात्स्यायनः।

"न ब्रूमो विनष्टात्कारणात् कार्यमुत्पद्यत इति, अपि त्वग्निहोत्रहवनादिलक्षणाया क्रियया यथोक्तेन विधिना धर्मो जन्यत इत्युक्तम्, तस्मात्फलमि"ति ( न्या० वा०, पृ० ४८४, चौ० सं० ) न्यायवार्त्तिककारोऽपि।

"चिरध्वस्तं फलायालं न कर्माऽतिशयं विना।
सम्भोगो निर्विशेषाणां न भूतैस्संस्कृतैरपि ॥" ( न्या० कुसु० १।६ )

इत्याचार्यश्रीमदुदयनोऽपि। 'सम्भोगः' समीचीनो नियतो भोगः। 'निर्विशेषाणाम्' अदृष्टरूपविशेषरहितानाम्। श्रीमच्छङ्करभगवत्पादाचार्यैरपि जैमिनिमतमनूदितं फलाधिकरणे 'धर्मं जैमिनिरत एव' ( व्या० सू० ३।२।४० ) इति सूत्रभाष्ये—"श्रुतिश्चेत्प्रमाणं यथायं कर्मफलसम्बन्धः श्रुत उपपद्यते तथा कल्पयितव्यः। न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति। अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्तीति तर्क्यते" इति। परमेतदधिकरणसिद्धान्ते कर्माराधितेश्वरप्रसादादेव फलसिद्धिः, स च प्रसादः कर्मजन्यो वा भवतु, अपूर्वजन्यो वेत्यपूर्वखण्डने मण्डने वाऽनास्था प्रकटिता। मीमांसका हि साङ्गमनुष्ठितात्कर्मण एवापूर्वाख्यः कश्चिदतिशयविशेषो यजमानात्मनि समवयन्नुत्पद्यते; तेनैव फलं कालान्तरे सम्पाद्यते; नेश्वरस्य तत्र कश्चिदपि सम्बन्धः, ईशितृत्वं वा। एतदेवास्मदभिसम्मतम्। ईश्वरः कश्चिदस्तु वा मा वा! नास्माकं तन्निरासे स्थापने वा महत्यास्थेति। वेदान्तिनस्तु—कर्माराधितादीश्वरादेव फलप्राप्तिः, अपूर्वमस्तु वा मा वा! नास्माकं तत्राऽऽस्थाविशेष इति।

एवञ्च मीमांसकानामपूर्वेऽत्यादरः, वेदान्तिनामीश्वरेऽत्यादर इति फलितम्। एतच्चापूर्वं यागादेः फलसाधनत्वान्यथानुपपत्त्या कल्प्यमानं यत्र स्थितं फलोत्पादनायालम्, तत्रैव कल्प्यत

इत्युक्तम् —"स्वाश्रयाऽन्याश्रयापि वा" इति। उक्तं हि मण्डनमिश्रैरपि—"कथं तर्हि कर्मणस्साधनत्वं तदन्यसमवायि, तदाहितत्वात्। न हि स्वसमवाय्येव साधनं भवति इति कश्चिन्नियमः। कार्यानुमेयं तद्यत्र कार्यायालं तत्रैव युक्तम्। तदाहितत्वात्तस्य शक्तिः" इति। न च मन्तव्यं कर्मैव तावत्पर्यन्तमवतिष्ठत इति श्रुतिबलात्कल्प्यत इति। तादृशकल्पनस्य प्रत्यक्षादिसर्वप्रमाणविरुद्धस्य साहसिकमात्रकर्तव्यत्वात्। न हि श्रुतिसहस्रमपि पदार्थस्वभावमन्यथयितुमलम्। 'न ह्यागमास्सहस्रं घटं पटयितुमीशत' इति ह्यभियुक्तवचनम्। अतो यथा न प्रमाणान्तरं बाधितं भवति कार्यञ्च सेत्स्यति तथा यतितव्यं प्रमाणपरतन्त्रैः। अतश्च यजमान एव फलोत्पादात् तत्रैवेदं समवेतमुदेति यावत्फलोदयं तत्रैवादृष्टं सद्वर्तते, फलमुत्पाद्य विनश्यति। फलोत्पत्तिसमनन्तरमेव विनाशाच्च न द्वितीयवारं तत्फलोत्पत्तिप्रसङ्ग इति।

अपूर्वोत्पत्तिप्रकारश्चेत्थम्—तत्तत्फलोद्देशेन विधीयमानानां कर्मणां षाष्ठसर्वाङ्गोपसंहारन्यायेन (पू० मी० ६।३।२) पूर्वोत्तराङ्गकलापसहितानामेवानुष्ठानं प्राप्तम्। तत्र श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यैः क्रमबोधकप्रमाणैः परिप्रापितक्रममनुसृत्यैवाङ्गान्यनुष्ठीयन्ते। येन क्रमेणानुष्ठानं तेनैव क्रमेणापूर्वोत्पत्तिः। तद्यत्र यदङ्गमनुष्ठीयते तदव्यवहितक्षण एव तत्कृतमपूर्वं यजमानात्मनि निष्पद्यते। एवं यावन्त्यङ्गानि प्रधानयागात्पूर्वमनुष्ठेयानि, यावन्ति वा प्रधानानन्तरमनुष्ठेयानि तावन्त्यपूर्वाण्युत्पद्यन्ते, एतेषामङ्गजन्यत्वादङ्गापूर्वाणीति संज्ञा। एवं प्रधानयागानुष्ठानसमनन्तरमेव प्रधानात् किञ्चिदपूर्वमुत्पद्यते, तस्य प्रधानापूर्वमिति, उत्पत्त्यपूर्वमिति च शास्त्रीयो व्यवहारः। एतान्यङ्गापूर्वाणि प्रधानापूर्वाण्यपि यजमानात्मन्येव समवयन्ति। चरमाङ्गानुष्ठानानन्तरं सर्वाणीमानि मिलित्वाऽपूर्वाणि किञ्चनापूर्वं परमापूर्वाभिधेयं तत्रैवोत्पादयन्ति। एतदन्तमेव पूर्वोक्तानामङ्गापूर्वाणां प्रधानापूर्वाणामवस्थितिः। परमापूर्वे तूत्पन्ने तेषां नाशः। परमापूर्वमेव फलोत्पत्तिपर्यन्तमवस्थाय फलमुत्पाद्य विनश्यति। तत्रापि विजातीयतत्तत्फलोद्देशेनानुष्ठीयमानेभ्यः कर्मभ्यो विजातीयतत्तत्फलजननशक्तिमन्त्येवापूर्वाणि यजमानात्मनि समवयन्ति। परं न तेषां फले साङ्कर्यम्। यथा व्रीहियवतिलमाषबीजानामेकस्मिन् सुक्षेत्रे युगपत्परस्परमेलनेन समुप्तानामपि सति सहकारिसमवधाने स्वं स्वं कालं प्राप्य स्वस्वसामर्थ्यमनतिक्रम्य व्रीह्याद्यङ्कुराणामेवोपजननम्, न साङ्कर्येण व्रीहिभ्यो यवाङ्कुराणाम्, यवेभ्यो माषाङ्कुराणाञ्चोत्पत्तिः, एवमेव स्वर्गपुत्रपशुवृष्ट्यादिविविधफलजनकापूर्वाणामेकत्र यजमानात्मनि समवधानेऽपि फलोत्पत्तिकाले तत्तदपूर्वेभ्यः तानि तान्येव फलान्युत्पद्यन्ते साङ्कर्यं विना। तेषां तादृशशक्तिमत्त्वात्। शक्तीनां तादृशस्वभावात्, तासामननुयोज्यत्वात्।

"शक्तयस्सर्वभावानां नानुयोज्याः कथञ्चन।"

इति ह्यभियुक्ता वदन्ति। अतस्तत्तत्कर्मजन्यं तत्तत्फलजननसमर्थं यजमानात्मसमवेतं फलैकनाश्यं सर्वथा तावदस्त्यपूर्वमिति मीमांसकमर्यादा—इति शिवम्॥

———

# मीमांसाया वैशिष्ट्यम्

लेखकः—पं० श्रीबालबोधमिश्रः ।

धर्म्मः सत्कार्य्यहेतुर्भवति च तदिदं लोकवेदप्रपन्नं
धर्म्मात्प्राप्तिः सुखानां गतिरुपरतिना रक्षणं क्लेशहेतोः ।
धर्ता लोकत्रयाणामिति खलु विषयः स्वाख्ययैव प्रपन्नो
व्याकर्तुं तं समीहे बुधजनहृदयानन्दनाय प्रयत्नात् ॥

अथेदमालोचनीयम्—यदिदानीं सकलमेव जगत् 'सुखी स्याम्, दुःखं मे मा भूदिति' सुखं दुःखाभावं वा समीहमानं फलेच्छोपायेच्छां प्रति कारणमिति धर्म्मं तत्त्वज्ञानं वा तत्कारणं समीहते । न ह्यसति साधने साध्यं भवति आकस्मिकवादानभ्युपगमात् । तदिदं सुखं भावरूपं प्रातिस्विकस्वरूपसम्पन्नं स्वतः सुन्दरमिति परमप्रेमास्पदमिति तत्साधनमपि साधनतयैव प्रेमास्पदमिति द्वयमपि अन्येच्छानधीनेच्छाविषयत्वमिति अन्येच्छाऽधीनेच्छाविषयत्वमिति च लक्षणलक्षितं सत् स्वतः परतो भेदेन पुरुषार्थपदप्रतिपन्नं भवति । तत्राऽपि जन्यजनकभावे जनक इव स्वस्वामिभावे स्वामीव साध्यसाधनभावे साधनंस्वरूपसम्पादकतया प्रधानभूतमिति धर्म्मरूपमेव साधनं प्रथमं विचारपथमायाति ।

धर्म्मपदञ्च 'धारणाद्धर्म्मं' इति योगेन जगद्धिधारके समाख्यातमपि वेदबोधितेष्टसाधनताके यागादौ "चोदनालक्षणोऽर्थो धर्म्मः" इति परिभाषितं भवति । धर्म्मश्चाऽयं प्रमाणभेदशेषप्रयुक्तिक्रमाऽधिकारिसामान्यविशेषातिदेशोहबाधतन्त्रप्रसङ्गरूपानेकाङ्गसम्पन्न इति तद्व्युत्पादनाय द्वादशलक्षणं मीमांसाशास्त्रं प्रवर्त्तते । पूजितविचारवचनो मीमांसाशब्द इति शास्त्रमिदं विचारशास्त्रं सत् "अथातो धर्म्मजिज्ञासा" इति वेदाध्ययनानन्तरं तदर्थनिर्णयाय समारब्धं भवति । "वेदमधीत्य स्नाया"दिति तु स्मार्त्तं वचनमध्ययननियमनिवृत्तिपरम् आपाततः प्रतीतः सन्दिग्धो विचारविषयो भवतीति विचारमन्तराऽर्थनिश्चयाऽभावेन वेदाऽप्रामाण्यप्रयोजकमिति "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पने"तिन्यायबललब्धार्थज्ञानपर्य्यवसायि "स्वाध्यायोऽध्येतव्य" इति श्रौताऽध्ययनविधिबाधितं भवति । तदुक्तम् "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमान"मिति । अबाधितं वा समानकर्तृकयोः क्रिययोर्व्यवहिताऽव्यवहितसाधारणपूर्वोत्तरभावे पूर्वक्रियावाचिधातोः समानकर्तृकयोः पूर्वकाले क्त्वेति क्त्वः स्मरणेन मध्ये विचारप्रवेशे विरोधाऽभावात् ।

अथाऽतः पदद्वयञ्च योग्यतया वेदार्थविचारोपयोगि वेदाऽध्ययनं पूर्ववृत्तं विषयीकरोति। जिज्ञासापदञ्च लक्षणया विचारपरम्। कर्तव्य इति शेषेण वेदाऽध्ययनानन्तरमर्थनिर्णयाय धर्म्मविचारः कर्तव्य इति प्रथमसूत्रतो बोधितं भवति। तदिदं शास्त्रं दृष्टार्थतयाऽर्थज्ञानोपयोगि वेदाध्ययनविधि-समुपोद्बलितं वेदमधीत्य स्नायादिति वेदाऽध्ययनानन्तरं प्राप्तमपि समावर्त्तनं समुत्कर्षति। वेदाध्य-यनानन्तरं त्वरितेन न गन्तव्यं कथं नु वेदाऽर्थवत्तायै वेदवाक्यानि गुरुकुलेऽवस्थाय विचारयेदिति प्रथमसूत्रतात्पर्य्यादिति। तत्र प्रमाणविचारे भाविनि धर्म्मे सम्प्रयोगजप्रत्यक्षस्य तदधीनानु-मानादीनां चाशक्तेः श्रुतिरेवापौरुषेयतया भ्रमादिपुरुषदोषासङ्क्रमेण प्रत्याय्यप्रत्यायकभावसम्बन्धस्य नित्यतया प्रामाण्यस्य स्वाश्रयजनकसामग्रीजन्यत्वमिति स्वाश्रयग्राहकसामग्रीग्राह्यत्वमिति चोत्पत्ति-ज्ञप्तिगतस्वतस्त्वेन च प्रमाणपद्धतिमध्यास्ते। तदुक्तम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति", "औत्पत्तिक इति नित्यं ब्रूम" इति च।

"चोदनालक्षणोऽर्थो धर्म्म"इति सूत्रं वाक्यभेदमिया शब्दार्थाभ्यामुद्देश्यविधेयभावभेदेन धर्मस्वरूपलक्षणप्रदर्शनपरम्। तद्यथा—यो धर्मः स चोदनालक्षण इति लक्षणपरत्वेऽर्थाचल्लक्षण-कत्वं धर्मस्य स्वरूपं सिद्धं भवति। यश्चोदनालक्षणः स धर्म्म इति स्वरूपपरत्वेऽर्थाच्चोदनागम्यत्वं तल्लक्षणं सिद्धं भवतीति।

स चाऽयं धर्म्मः प्रधानतः श्रुत्या तन्मूलकस्मृत्यादिभिश्च प्रतिपन्न ऐहिकामुष्मिकपशुस्वर्गा-दिफलाय कल्पते। श्रुतिश्च श्रुतिलिङ्गादिविनियोजकप्रमाणश्रुत्यर्थादिक्रमप्रमाणसहकृतविनि-योगप्रयोगविध्यादिप्रतिभेदभिन्नविधिमन्त्रादिभेदभिन्ना साक्षात्, प्रणाड्या स्मृत्यादयश्च धर्मे प्रमाणतां भजन्ते। धर्मश्च निरुक्तप्रमाणप्रतिपन्नः शब्दान्तरादिभिर्यागदानादिभेदभिन्नः शेष-प्रयुक्त्यादिनानोपकरणसनाथः सर्वहितायेत्युक्तम्। तदुक्तम्—'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्म' इति। अभ्युदय ऐहिकामुष्मिकपशुपुत्रस्वर्गादिरूपो निःश्रेयसमपवर्ग इति। धर्मश्च मतभेदेन क्रियाऽपूर्वशक्तिरूपः प्रयोजनमुद्दिश्य सम्पाद्यमानोऽभ्युदयाय, तदनुद्दिश्य जायमानोऽ न्तःकरणशुद्धिविविदिषासम्पादनद्वारा निःश्रेयसाय। तदुक्तम्। 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति। आद्ये साक्षात्कर्मणः फलमिति साङ्गतासिद्ध्यर्थमङ्गमपे-क्ष्यमाणं कर्माङ्गद्रव्याद्युद्दिश्य तदनुद्दिश्य च विधीयमानं सन्निपत्योपकारकमारादुपकारकं प्रोक्षणादिप्रयाजादिरूपमपूर्वोत्पत्तिस्थितिनियामकं फलजनने कर्मसाहाय्यमाचरति। अन्त्ये नित्यं काम्यं वा फलमनुद्दिश्य क्रियमाणं प्रणाड्या निःश्रेयसाय भवति। वेदश्चापूर्वबोधनार्थस्मरणवि-धेयार्थपरिच्छेदानिष्टनिवृत्तिप्ररोचनाकरत्वेन विधिमन्त्रनामधेयनिषेधार्थवादभेदभिन्नोऽस्मिन्नेव धर्मे प्रमाणतामश्नुते। तदुक्तम्—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना"मिति, "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु"रिति च।

वेदान्तानामपि जीवब्रह्मरूपकर्तृदेवतास्मारकतयाऽत्रैवोपयोगात्। न च पशुबीजादि-वधसाधनतयाऽविशुद्धिशङ्का, 'येन नाप्राप्ति'न्यायेना''ग्नीषोमीयं पशुमालभे''तेति विशेषशास्त्रेण ''मा हिंस्यात्सर्वा भूतानीति'' सामान्यशास्त्रस्य वृद्धिशास्त्रेणेव गुणशास्त्रस्य बाधसम्भवात्। भावकार्यत्वेन स्वर्गस्य घटादिवत् क्षयित्वानुमानं तु ''अपाम सोमममृता अभूम''इत्यागमबाधितं नरशिरः-कपालशुचित्वानुमानमिव 'स्पृष्ट्वा नरकपालन्तु सचैलं जलमाविशे'दित्यागमबाधितम्। स्वर्गस्वा-राज्यभेदेन सातिशयत्वं तु यत्नसामान्यविशेषभावनिबन्धनमैहिकमिव न सामान्ययत्नवतो दुःखाय। स्वर्गस्तु—

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदमि'ति ॥

दुःखविरोधिसुखविशेषरूपतया अनुकूलवेदनीयं सुखमिति। अनुकूलवेदनीयतालक्षणं तद् अतल्लक्षणादभावरूपतया निःस्वभावाद् दुःखाभावाद्वरं इति तत्साधनधर्मोऽपि मुहूर्त्तयामादिसाध्यत्वेन सुकरतयाऽनेकजन्मपरम्पराऽऽयासम्पादनीयतया दुष्करात्तत्त्वज्ञानाद्वर इति तद्विचारपरं मीमांसा-शास्त्रमपि वेदान्तादिशास्त्राद्वरमिति तदेव शास्त्रं जगति राजानतीति कृतमधिकेन विदितवेदनेनेति।

इति बहुविधयत्नं कुर्वता धर्मरत्नं
निहितमिह तदेष प्राप्तसम्यग्विशेषः।
भुवि जयतु निबन्धोऽप्यक्षतो यत्प्रबन्धः
सुखयतु जनचेतः स्वैर्गुणैर्यत्समेतः ॥

———

# देवता पुरुषकारश्च

लेखकः—पी० एन्० पट्टाभिरामशास्त्री

नेदं तिरोहितं कस्यापि—यज्जगतीतले दैवं पुरुषकारश्चेति द्वयं स्वस्वाभिलषितं मनोरथं पुरुषार्थं वा सम्पिपादयिषूणां मानवानां प्रधानतमं साधनमिति। परस्परं मिलितयोरनयोस्साधनत्वम्, आहोस्वित् पार्थक्येन ? तत्रापि देवतायाः प्राबल्यम्, पुरुषकारस्य वेति चिरन्तनात्कालादनादौ संसारे वादिनो लोका विप्रतिपन्नाः। दर्शनस्मृतिपुराणादिप्रवर्तकाः प्राज्ञस्सुमतयो महर्षयोऽप्यत्र द्वैविध्यं प्रतिपन्ना अवलोक्यन्ते। तत्तन्मतप्रवर्तका आचार्या अपि मिथो विवदन्ते। अत्र प्राधान्येन चत्वारः पक्षा भवन्ति। केचन दैवं पुरस्कृत्य तदुपरि सर्वमपि भारं निक्षिपन्तः पुरुषकारं तदङ्गत्वेनाश्रिषत। अपरे च पुरुषकारं प्रधानीकृत्य तदुपसर्जनत्वेन दैवं मन्यन्ते। अन्ये तु दैवं दूरतो निराकुर्वन्तः पुरुषकारमेव स्वीचक्रुः। इतरे तु पुरुषकारं तुच्छं मन्यमाना दैवमेवैकं प्रधानतमं कारणं सञ्जगदुः।

तत्र—"अथो खल्वाहुः काममय एवायं पुरुषः, स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति यथा तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसम्पद्यते"।

'करोतु नाम नीतिज्ञो व्यवसायमितस्ततः।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम्'॥
'न दैवमिति सञ्चिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति'॥
'दैवे समर्प्य चिरसञ्चितकर्मजालं सुस्थास्सुखं वसत किं परयाचनाभिः'।
'विहाय पौरुषं यो हि दैवमेवावलम्बते।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः'॥

इत्यादिश्रुतिपुराणकाव्यवाक्येषु पर्यालोच्यमानेषु सर्वेऽपि पक्षास्सङ्गता इवावभान्ति। कोऽत्र पक्षः श्रेष्ठ इत्यत्र निर्णयो नैव सुकरः। प्रश्नोऽयमतीव गभीरः, तथापि मीमांसकमतमनुसृत्य तदुन्नीतं पन्थानमवलम्ब्यान्तरा देवतास्वरूपमपि मीमांसकसम्मतं किञ्चिदिव निरूपयन्तो विषयमिमं परिशीलयामः।

मातापितृसहस्रादप्यधिकं वात्सल्यं मानवेष्वादधानाः श्रुत्याम्नायाद्यपरपर्याया वेदाः तत्तदभिलषितं फलं सुखेन सम्पादयितुं नैकप्रकाराणि क्लेशसुलभसाध्यानि कर्माणि तत्तद्वर्णाश्रमानुगुण्येन

विदधति, येषु कर्मसु स्वनुष्ठितेषु कर्तारः स्वस्वाभिलषितफलोपभोगयोग्या भवन्तीति शब्दप्रामाण्या-भ्युपगन्तृभिस्सर्वैरपि निर्विचिकित्सं स्वीक्रियते। तत्र योग्यतेयं कर्तृषु कथं समवैति? किं यागदा-नहोमपूजादिभिर्वेदविहितैः कर्मभिः सम्यगाराधिता इन्द्रादयो देवताः प्रसन्नास्तत्तत्कर्मकर्तृभ्यो योग्य-तानुसारेण फलं वितरन्ति? आहोस्वित् देवताप्रसादनैरपेक्ष्येण तत्तत्कर्माण्येव स्वजन्यापूर्वद्वारा कर्तॄन् तत्तत्फलोपभोगयोग्यान् विदधतीति। यदि देवताप्रसादनैरपेक्ष्येण कर्मणामेवापूर्वद्वारा फलदातृत्वम्, तर्हि पुरुषकारस्यैव प्राधान्यम्, देवतायाश्चोपसर्जनत्वम्। यदि च कर्मणां देवताराधनद्वारा तत्प्रसादजनकत्वमेव, तर्हि तैस्स्वनुष्ठितैः प्रसन्ना देवता एव फलप्रदायिका इति तासां प्राधान्यम्, पुरुषकारस्य चोपसर्जनत्वमिति फलति। तदत्र किं प्रतिपत्तव्यमिति चिरन्तनोऽयं संशयप्रवाहः।

तत्र चारुचेतसः केचनैवमूचुः—

यथा हि गृहान् समागतवद्भ्योऽतिथिभ्यः पाद्यार्घ्यभोजनादिप्रदानेन तेषां तृप्तिं प्रसादञ्च सम्पादयन्ति गृहस्थाः, तथैव यागादिक्रिया अपि तृप्तिद्वारा देवताप्रसादं सञ्जिघृक्षूणां साधनतया विहिता वेदेन। तत्र यागो नाम 'यज देवपूजासङ्गतिकरणदानेषु' इत्यभियुक्तोक्त्या देवतापूजा-त्मकः। पूजा च पूजनीयापेक्षया उपसर्जनीभूतैवेति न विप्रतिपन्नमिदम्। अतः पूजास्थाना-पन्नस्य यागादिकर्मणोऽपि पूजनीयदेवतापेक्षया गुणत्वमेष्टव्यम्। यागे हि सन्ति त्रयः पदार्थाः— द्रव्यं देवता त्यागश्चेति। तत्र त्यज्यमानहविरुद्देश्यत्वं देवतात्वम्। तथा च हविर्दाने देव-तायास्सम्प्रदानत्वं समायाति। सम्प्रदानस्य च 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति कर्म-कारकापेक्षयाप्यभिप्रेयमाणत्वेन प्राधान्यं स्वीकर्तव्यम्। स्वीकृते च तस्याः प्राधान्ये पूजायाः पूज्यमानप्रीतिकरत्वं गुर्वादौ दृष्टमिति यागस्य पूजारूपस्य देवतार्थत्वाश्रयणे लौकिकी रीतिरप्यनु-सृता भवति। एवञ्च "ते देवा हविरदन्तु", "देवान् यजते यस्स देवानां भोगाय भवति", "तृप्त एव एनमिन्द्रः प्रजया पशुभिश्च तर्पयति", "आहुतिभिर्वै देवान् प्रीणामि", 'देवान् भाव-यतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ'॥ इत्यादिमन्त्रा-र्थवादेतिहासपुराणान्यप्यनुसृतानि भवन्तीति यागस्य देवताप्रसादजनकत्वम्, तत्प्रसादस्य फल-जनकत्वमित्यभ्युपगन्तव्यम्। देवताप्रसादश्च विग्रहभोगादिव्यतिरेकेणानुपपन्न इति तासां विग्रहादिपञ्चक[1]मवगमयति। स्पष्टञ्चैतत्—"ऋभ्वा त इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणा बृहन्ता", "आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः। अष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः","तुभ्यं सुतो मघवन् तुभ्यं पक्वोऽद्धीन्द्र पिब च प्रस्थितस्य", "आ श्रुत्कर्ण श्रुधी हवम्" इत्यादिषु मन्त्रेष्वर्थतः पर्यालोच्यमानेषु इन्द्रादीनां देवतानां विग्रहवत्त्वं हविर्भोक्तृत्वं पुरुषविधत्वञ्चेति। तथा च यागाराधिताश्चेतना देवता यागीयं हविरश्नन्त्यः, तेन

१. विग्रहो हविषां भोगः ऐश्वर्यञ्च प्रसन्नता।
फलदातृत्वमित्येते पञ्चकं विग्रहादिकम्॥

च तृप्तास्सत्यो यजमानाय फलं वितरन्तीति प्रधानीभूतदेवताप्रसादस्यैव फलप्रयोजकत्वे सम्भवति नाश्रुतापूर्वकल्पनाद्वारा गुणभूतस्य यागस्य फलजनकत्वं स्वीकर्तव्यम्। अतश्च पुरुषकारस्य दैवापेक्षयोपसर्जनत्वमेवेति।

तदिदं न्यायविदो नानुमन्यन्ते—"यजेत स्वर्गकामः" इतीदमधिकारवाक्यं यागस्य स्वर्गः फलमित्याह। यागश्चायं "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति" इत्युत्पत्तिवाक्येन विहितः। अत्र च 'आग्नेय' इत्यनेन पदेनाग्निदेवताकपुरोडाश इत्यर्थकेन पुरोडाशापेक्षया अग्नेर्देवताया गुणत्वं प्रतीयते। द्रव्यदेवतासम्बन्धाच्च कल्प्यमानो यागस्तदनुगुण एव कल्प्यते—अग्निदेवताकाष्टाकपालपुरोडाशद्रव्यको याग इति। एवंविध एव यागोऽधिकारवाक्ये यजिना परामृश्यत इति देवता गुणभूतैव त्यागांशं प्रति इति युक्तम्; न तु प्राधान्यम्, उत्पत्तिवाक्यगतगुणभावविरोधात्। उत्पत्तिवाक्ये देवतायास्त्यागांशं प्रति गुणभावः, अधिकारवाक्ये च त्यागात्मकयागस्य देवतां प्रति गुणभाव इति विरोधस्समापतेत्। अतो यथैव रीत्या उत्पत्तिवाक्ये देवताया भानं तथैव रीत्या सर्वत्रापि तदविरोधेन तस्या भानं स्वीकर्तव्यम्। तत्रापि—'अस्मिन् कर्मणि इयं देवता' इति ज्ञानं विधिनैव सम्पादयितुं शक्यम्, नान्येनोपायेन। अत एवोक्तं भट्टपादैः—

विधिनैव हि देवत्वं प्रतिकर्मावधार्यते।
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम्॥

(तं० वा०, पृ० २३७, पूना० सं०) इति।

अयञ्च विषयः—'विधिशब्दस्य मन्त्रत्वे भावस्स्यात् तेन चोदना' (जै० सू०, १०·४·२३) इति दाशमिकाधिकरणे सुविशदं प्रत्यपादि भाष्यवार्त्तिककारादिभिः। तत्र हि—"आग्नेयोऽष्टाकपालः" इत्यादिविधिगतदेवताशब्द एव निगमेषु त्यागादौ च प्रयोक्तव्यः, उत पर्यायशब्दोऽपि प्रयोक्तुं शक्यते, इति सन्दिह्यैवं तत्र पूर्वपक्षः कृतः—यदि शब्दस्यैव केवलं कर्मसु देवतात्वम्, तर्हि भवेदपि विधिगतस्यैव तस्य निगमादिषु नियमः। शब्दस्य देवतात्वे तस्यार्थोऽस्ति न वा? यदि नास्ति, तर्हि लोकवेदयोरग्न्यादिशब्दानामर्थपरत्वप्रसिद्धेर्व्याहतिः स्यात्। अर्थपरत्वाभावे च 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिकसंज्ञाभावेन विभक्त्याद्यनापत्तिश्च स्यात्। यद्यस्ति, तर्हि तस्यैव देवतात्वोपपत्तौ निगमेष्वग्न्यादिपदनियमे प्रमाणाभावः। यद्यपि त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्यार्थेऽसम्भव एव, द्रव्यत्यागकालीनोच्चारणकर्मत्वरूपस्य तस्य शब्दधर्मत्वात्, तथापि उद्देश्यत्वस्योच्चारणघटितत्वे प्रमाणाभावेन द्रव्यत्यागकालीनज्ञानकर्मत्वरूपस्य देवतात्वस्यार्थेऽप्युपपत्तेर्न कोऽपि दोषः। अतोऽर्थमङ्गीकृत्य यदि देवतात्वं शब्दस्येष्यते, तर्ह्यर्थस्यैव प्राधान्यं देवतात्वञ्च स्वीकर्तव्यम्। तदिदमुक्तं भट्टपादैः—शब्दोऽर्थं प्रत्यत्यन्तगुणभूतः। अर्थ एव कार्योपयोगी, प्रधानत्वात्। अग्निशब्दो न स्वयं कार्येण द्रव्येण सह सम्बध्यते। किं तर्हि? अर्थेन सम्बध्यते। अर्थपरत्वाच्च निर्देशस्य पर्यायशब्दानामनिवृत्तिः ... .........

तस्मादग्निशब्दो न शक्यो नियन्तुम्' (तं० वा०, पृ० १६२६) इति। अतश्चार्थस्यैव देवतात्वात् न क्वापि निगमेषु विधिगतशब्दनियम इति।

सिद्धान्तस्तु—उच्चारणमन्तरेण केवलं ज्ञानमात्रेणार्थस्य देवतात्वं न युक्तियुक्तम्। तथा सति "अग्नये पावकाय, अग्नये शुचये" इत्यादौ एकेनापि पदेनार्थस्य विधानसम्भवे पदद्वय-वैयर्थ्यापत्तेः। यद्यप्यत्र पावकपदं पुराणादिपर्यालोचनया अग्निविशेषवाचि, तथापि तेनैवाग्नि-त्वसमानाधिकरणविशेषधर्मोपस्थित्युपपत्तेरग्निपदवैयर्थ्यापत्तिः। देवतोद्देश्यकद्रव्यत्यागकाले शब्दो-च्चारणमवश्यं कर्तव्यमिति शिष्टाचारसमयः। अत एव—

'नामगोत्रे समुच्चार्य सम्यक्-श्रद्धान्वितो ददेत्।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति॥
न ममेति स्वसत्ताया निवृत्तिमपि कीर्तयेत्।
दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः'॥

इति वृद्धवसिष्ठवचनमपि सङ्गतार्थं भवति। अतः केवलार्थस्य देवतात्वपक्षे देवता-स्वरूपमिदमेव—द्रव्यत्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वमिति, तच्च "अग्नये पावकाय" इत्यादावेकेनापि पदेनार्थस्य विधानसंभवे पदद्वयवैयर्थ्यापत्तेर्दुष्टमित्युक्तमेव। तथा च त्यज्यमान-द्रव्योद्देश्यत्वं देवतात्वमित्यत्रोद्देश्यत्वमात्रं देवतात्वमित्यङ्गीकारे प्रतिनिधीयमानस्यापि देवतात्व-संभवेन 'न देवताग्निशब्दक्रियमन्यार्थसंयोगात्' (जै० सू०, ६-३-१८) इति षष्ठोक्तस्य देवताप्रतिनिध्यभावस्यानुपपत्तिप्रसङ्गात् विधेरपि तत्रोपलक्षणत्वं स्वीकर्तव्यम्, शब्दविशेषेण या उद्देश्यतया विधीयते सा देवतेति। न चैवं विधानाद्देवतात्वं, देवतायाश्च विधानमितीतरेतरा-श्रयत्वं शङ्क्यम्, न हि देवतायाः सत्या विधानं, किन्तु शब्दोद्देश्यतामात्रेण विहिता पश्चाद्देवतात्वं प्रतिपद्यत इति न कोऽपि दोषः।

एवञ्च लाघवाद्धविस्त्यागकालीनविहितशब्दोच्चारणकर्मत्वमेव देवतात्वम्, न तु निरुक्तज्ञानकर्मत्वम्, नापि त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वम्, गौरवात्। एतादृश-देवतात्वमेव "आग्नेयः" इत्यत्र तद्धितार्थः। अतः प्रधानभूततदर्थानुरोधेनाग्न्यादिप्रातिपदिके शब्दलक्षणामप्यङ्गीकृत्य तस्यैव देवतात्वं विधिना विधीयते, अर्थस्य तु आनुषङ्गिकतया प्रतीतेः तादृशशब्दप्रतिपाद्यत्वरूपं भाक्तं देवतात्वमिति न तच्छास्त्रेण विधीयते। सति चैवं सर्वत्र शब्द एव वाक्यार्थान्वयीति नान्यशब्दप्रयोगस्त्यागकाल इति।

अत एव देवतास्वरूपं विशदयितुमारब्धा भाष्यकाराश्शबरस्वामिपादाः 'का पुनरियं देवता नाम' इत्यारभ्य 'एकं तावन्मतम्' 'अपरं मतम्' इत्यादिना मतद्वयं प्रतिपाद्य तत्रारुचिञ्चो-द्भाव्यान्ते एवमुपसमाहार्षुः—'किन्तर्हि ? शब्द एव हविषा सम्बध्यते। तत्सम्बन्धादर्थोऽपि देवता भविष्यति। यस्यां हि शब्दो हविषा तादर्थ्येन सम्बध्यते सा देवता। शब्दे कार्यस्या-

सम्भवादर्थे कार्यं भविष्यति। इह तु शब्द एव कार्ये सम्भवति तस्मान्नार्थप्रत्यायनार्थः शब्दः' (१०-४-१२) इति। इदञ्च भाष्यं वार्त्तिककारैरेवं व्याख्यातम्—

'अग्निशब्द' एवाष्टाकपालेन सम्बध्यमानोऽर्थात्तस्य देवतात्वं प्रतिपादयति। यथा—'वैष्णवीमनुब्रूयात्' इति ऋगुच्यमाना ऋगर्थं प्रतिपादयति। न च विवक्षित ऋगर्थः कार्ययोगेन। एवमिहाप्यग्न्यर्थो न कार्ययोगेन विवक्षितः। अपि च यः—अर्थमष्टाकपालेन सम्बन्धयितुमिच्छति, तस्यापि वाचिका श्रुतिरुच्चारयितव्या।............यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन सम्बध्यते, तदुच्चारणमेव विधीयते—अग्नय इत्युच्चार्याष्टाकपालं त्यजेदिति, तस्याग्न्यर्थो देवतेत्यनुवाद एव' (तं० वा०, पृ० १६२८) इति।

एवमेव खण्डदेवाचार्या अपि 'न देवताग्निशब्दक्रियम्' इत्यत्र षष्ठे देवतानां प्रतिनिध्यभावमुपपाद्यान्ते एवं प्रत्यपादयन्—'यदा तु दाशमिकाधिकरणवक्ष्यमाणरीत्या विधिगतशब्दविशिष्टस्यार्थस्य, तादृशशब्दमात्रस्य वा देवतात्वम्, तदा कः प्रसङ्गः शब्दान्तरस्य? न हि हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतमखण्डोपाधिरूपं वृद्धव्यवहारसिद्धं देवतात्वं शब्दान्तरे समस्ति। यदि त्वर्थस्यापि देवतात्वं कथञ्चिदङ्गीक्रियेत, ततस्तत्रापि तादृशविधिगतशब्दप्रतिपाद्यत्वसमनियतमेव तदङ्गीकृत्य प्रतिनिध्यभावः समर्थनीयः' इति।

एतेन प्रमाणजातेनेदमत्र निर्गलितम्—शब्दविशिष्टस्यार्थस्य देवतात्वम्, शब्दमात्रस्य वा, न त्वर्थस्य। विधिरेव च देवतास्वरूपावगमे शरणम्, देवता च यागादिक्रियां प्रति गुणभूतैव न प्रधानभूता इति। एवञ्चार्थवादमन्त्रपुराणानां देवताविग्रहादिकं पुरुषविधत्वञ्च प्रतिपादयतां यथा विध्यानुगुण्यं भवेत् तथा शक्यार्थपरित्यागपुरस्सरं तात्पर्यं वर्णनीयम्। अन्यथा तेषां प्रामाण्यस्यैव भङ्गस्स्यात्। अतश्च देवताप्रसादनैरपेक्ष्येण सम्यगनुष्ठितानि कर्माण्येव मानवेभ्यः फलं वितरन्ति स्वजन्यापूर्वद्वारेति पुरुषकारस्यैव प्राबल्यं दैवापेक्षया स्वीकर्तव्यमिति।

——

# ख्यातिविमर्शः

लेखकः—पं० रघुनाथशर्मा शास्त्री

अथ ख्यातिपदार्थो विचार्यते। तत्र धातूनामनेकार्थत्वात्ख्यातिरिति भ्रमज्ञानमभिप्रेयते सर्वेषु दर्शनेषु। स्वस्वदर्शनानुसारेण च भ्रमविषयपदार्थान् व्यवस्थापयितुं सर्वेऽपि ख्यातिवादाः प्रवृत्ताः। तत्र ख्यातिभेदा बहवस्तत्तच्छास्त्रकृत्परिकल्पिताः—

तथा हि—नैयायिकवैशेषिका 'इदं रजत'मित्यादिभ्रममन्यथाख्यातिं मन्यन्ते। शुक्तिकाया रजतत्वेन भानमिति यावत्। अन्यत्र सतो रजतस्य तादात्म्यसम्बन्धेन ज्ञानलक्षणाप्रत्यासत्त्या शुक्तिकायामलौकिकचाक्षुषप्रत्यक्षमभिमतं तेषाम्।

सांख्या योगिनो भाट्टा जैनाश्च शुक्तिरूप्यादिभ्रमं सदसत्ख्यातिं स्वीकुर्वन्ति। त 'सदसत्ख्यातिर्बाधाबाधादि'ति साङ्ख्यसूत्रम्। तदनुसारिभिर्विज्ञानभिक्षुवादिभिरुक्तम्—'स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाध' इति। 'रजतं वणिग्वीथीस्थरूपेण सत् शुक्त्यध्यस्तरूपेण चासत्' इति च। योगिनामप्येतदेव मतम्। भट्टपादैरप्युक्तम्—

भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्।
स्वरूपपररूपाभ्यां सर्वं सदसदात्मकम्॥ इति।

भट्टमत एवासत्संसर्गख्यातिरपि। तदुक्तं तैः—

तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते।
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्॥ इति।

अभावालम्बनम्, असदालम्बनम्, असत्संसर्गालम्बनमिति यावत्। जैनानामपि भट्टपादसाम्यमेव। 'भावाभावात्मकत्वाद् वस्तुनो निर्विषयो ह्यभाव' इति स्वीकारात्।

प्राभाकराणान्तु अख्यातिरभिप्रेता। तथा हि इदं रजतमिति ज्ञानद्वयम्। तत्राद्यं प्रत्यक्षं, द्वितीयं तु स्मरणम्। तयोस्तद्विषययोश्च विवेकाख्यातिबलाद् भ्रमत्वव्यवहारः प्रवृत्त्यादिश्च, न तु संसर्गज्ञानं भ्रमात्मकमस्ति, तथा सति सर्वविज्ञानानामनाश्वासप्रसङ्गात्।

मध्वमतेऽलीकख्यातिरसत्ख्यातिरेव, तन्मतेऽधिष्ठानरूपसदुपरागेणालीकस्य रजतादेर्भानस्वीकारात्।

निम्बार्कमते हट्टस्थरजतमेव शुक्तितादात्म्येनैव भासते। तत्र च शुक्तिरजतयोर्भेदाभेदस्वीकारात्तस्य च ज्ञानस्याभेदमात्रावगाहित्वाद् भेदानवगाहित्वेन भ्रमत्वम्—इत्यन्यथाख्यातिरेव।

वल्लभमते सर्वस्य ब्रह्मपरिणामत्वाद् भ्रमस्थले शुक्तिः कारणाविकृतिहेतुर्ब्रह्मपरिणामः, रजतन्तु कारणाविकृतिहेतुर्ब्रह्मपरिणाम इति रजतं सदेवेति सत्ख्यातिः।

अचिन्त्यभेदाभेदवादिनामपि मते सत्ख्यातिरेव। तथा हि तेषां श्लोकौ—

शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव चोदितः।
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः॥

आत्मख्यातिस्तु विज्ञानवादिनो बौद्धस्य, सौत्रान्तिकवैभाषिकयोरपि। तथा हि—विमतं रजतं बुद्धिरूपं संप्रयोगमन्तरेणापरोक्षत्वाद् बुद्धिवत्। संस्कारसामर्थ्याच्च विज्ञानस्य रजताकारः। ततश्चान्तरं विज्ञानमेव रजताकारेण पुरोवर्तित्वेन गृह्यते। अत एव 'नेदं रजतम्' इति बाधकप्रत्ययेन पुरोवर्तित्वस्यैव निषेधो न तु रजतस्य। धर्मधर्म्युभयनिषेधकल्पनापेक्षया पुरोवर्तित्वस्य धर्ममात्रस्यैव निषेधे लाघवाच्च।

असत्ख्यातिस्तु सर्वशून्यतावादिनो बौद्धस्य माध्यमिकस्य। तेन विज्ञानस्यावद्भासकत्वेनासत्पक्षपातित्वनियमस्वीकारात्। सत्ख्यातिवादिनो हि सर्वेऽपि प्रकाशमानत्वमात्रमेव हि वस्तूनां सत्त्वं स्वीकुर्वन्ति, ततश्च भासमानस्य सर्वस्यैव सत्त्वप्रसङ्ग इत्यसत्ख्यात्यवतारः।

अनिर्वचनीयख्यातिस्तु अद्वैतिनाम्। असच्चेच्छुक्तिरूप्यं शशशृङ्गादिवन्न प्रतीयेत, सच्चेदात्मवन्न बाध्येत, सदसत्त्वं त्वेकस्य व्याहतमिति सर्वथाऽनिर्वचनीयमेव रूप्यं शुक्त्यवच्छिन्नचैतन्ये विवर्तत इति।

सतीष्वपि प्राङ्निरूपितासु विविधासु ख्यातिषु श्रीशङ्करभगवत्पादैः प्रधानमल्लनिबर्हणन्यायेन चतस्र एव ख्यातयो निराकृताः, इतरख्यातीनां निराकर्तव्यख्यातिवादिभिरेव निराकृतत्वादिति। अत एव सम्प्रदायविद्भिः ख्यातिपञ्चकमेवोक्तम्—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्॥

ख्यातिपञ्चकस्य स्वरूपं प्रागेवोपवर्णितम्। अनिर्वचनीयख्यातिरेव चाध्यासपदेन व्यवह्रियतेऽद्वैतवादिभिः। अध्यासलक्षणं तूक्तं शारीरकीये शाङ्करभाष्ये—"स्मृतिरूपः परत्र पूर्वदृष्टावभास" इति। अस्यार्थः—स्मृते रूपमिव रूपं यस्य सोऽयं स्मृतिरूपः। असंनिहितविषयकत्वं च स्मृतिरूपत्वम्। सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञानन्तु संनिहितविषयमिति न तत्राध्यासता। अवसन्न उच्छिन्नो भासोऽवभासः। अवमतो युक्त्या तिरस्कृतो वा भासोऽवभासपदार्थः। यदि च परत्र पूर्वदृष्टावभास इत्येतावन्मात्रं लक्षणमुच्येत तदा पाटलिपुत्रे पूर्वं दृष्टस्य

देवदत्तस्य परत्र माहिष्मत्यामवभासे समीचीनेऽतिव्याप्तिः । अवभासपदस्य समीचीनेऽपि प्रसिद्धत्वात्, अतः स्मृतिरूप इत्युक्तम्, तदर्थस्तूक्त एव ।

अथवाऽसंनिधानेन सत्ख्यातिरिह वारिता ।
अवभासादसत्ख्यातिर्न्यूश्रृङ्गे तददर्शनात् ॥

अख्यात्यन्यथाख्यातिमतयोर्देशान्तरस्थमधिष्ठानम्, आत्मख्यातिमते ज्ञानम्, सत्ख्यातिमते पुरोवर्ति शुक्त्यादिकम्, अस्मिन्मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकमित्यसंनिधानविशेषणेन चतुर्विधाप्येषा सत्ख्यातिर्वार्यते । यतोऽसंनिहितत्वं स्वाधिष्ठानेन समसत्ताकत्वाभावः । असंनिहितत्वविशेषणेनैव शून्यवाद्यभिमतनिरधिष्ठानासत्ख्यातेरपि निरासः । असति स्वाधिष्ठानाप्रसिद्ध्या तेन समसत्ताकत्वाभावरूपासंनिहितत्वस्य तत्र निरूपयितुमशक्यत्वात् । अवभासपदेनापरोक्षज्ञानवाचिना शुक्तौ असद्रजतं भासते इति माध्वाभिप्रेतासत्ख्यातेर्वारणम् । आरोपे च पूर्वदृष्टत्वमात्रमुपयुज्यते, न तु आरोप्यस्य वास्तवत्वं प्रमितत्वं वा, मानाभावाद् गौरवाच्च ।

एवमपि यद्यपि परस्पराश्रयदोषः समापतत्येव, तथाहि—आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्यारोपः, आरोपनिबन्धना च प्रतीतिरिति, तथापि व्यवहारानादित्वादध्यासानादित्वमुपेत्य न दोषः । तदुक्तं भाष्ये—"नैसर्गिकोऽयं लोकव्यवहार" इति । एवंलक्षणकश्चाध्यासः सर्वेषां परीक्षकाणां सम्मतः, किन्तु तद्भेदे विप्रतिपत्तिः, तथाहि—"तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति" । अयमर्थः—वस्तुतो ज्ञानधर्मस्य ज्ञानाकारस्य रजतस्यान्यत्र बाह्ये शुक्तिकादौ अध्यास इति । इयञ्च विज्ञानवादिनां बौद्धानां सौत्रान्तिकवैभाषिकयोश्चात्मख्यातिरुक्ता, तैः क्षणिकविज्ञानस्यैवात्मत्वस्वीकारात् । शुक्तिरूप्यादेश्च विज्ञानाकारत्वाभ्युपगमात् । अन्ये तु "यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम" इति । इदन्तु अख्यातिवादिनां प्राभाकराणां मतम् । अस्यार्थः—यस्मिन् शुक्त्यादौ यस्य रजतादेरध्यासस्तयोस्तज्ज्ञानयोश्च यो विवेको भेदस्तदग्रहनिबन्धनस्तज्ज्ञानाभावप्रयुक्तो भ्रमस्तद्व्यवहार इति । प्रयोगाश्च तेषाम् । विमताः प्रत्यया यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवत् । संसर्गज्ञानपूर्वकत्वञ्च भ्रमस्थले प्रवृत्त्यादेर्न स्वीकुर्वन्ति, किन्तु भेदाग्रहपूर्वकत्वमेव । अन्यथाख्यातिवादिनस्तु "यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते" । अयमर्थः—यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिकादेर्विपरीतधर्मत्वकल्पनां रजतत्वधर्मकल्पनामाचक्षते इति । अयं भावः । पुरोवर्तिनि रजतमिदमिति सामानाधिकरण्येन व्यवहारः तथा प्रवृत्तिरपि अस्तीति तावदसंदिग्धम्, तथा चैतद्द्वयं संसर्गग्रहं विना भेदाग्रहमात्रान्न भवितुमर्हति, सर्वोऽपि हि चेतनस्य व्यवहारो ज्ञानपूर्वक एव दृष्टो न त्वज्ञानपूर्वक इति । चेतनव्यवहारत्वादेव भ्रमस्थलीयचेतनव्यवहारोऽपि संसर्गज्ञानपूर्वक एव युक्तो न त्वख्यातिपूर्वकः ।

इत्थं ख्यातिचतुष्टयलक्षणानि प्रदर्श्य भाष्यकृताऽनिर्वचनीयख्यातिरेवाग्रे समर्थिता, "सर्वथाऽपि तु अन्यस्यान्यधर्मकल्पनां न व्यभिचरतीति" । व्याख्यातञ्च श्रीवाचस्पतिमिश्रैः । 'अन्यस्यान्यधर्मकल्पनाऽनृतता सा चानिर्वचनीयतेत्यधस्तादुपपादितम् । तेन सर्वेषामेव

परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनाऽनिर्वचनीयताऽवश्यंभाविनीत्यनिर्वचनीयता सर्वतन्त्राविरुद्धार्थ इत्यर्थः' इति ।

इयञ्च भ्रमविषयाणामनिर्वचनीयता न केवलं युक्त्यैव सिद्ध्यति किन्तु लोकानुभवादपि । तथा हि—बाधोत्तरमनुभवः, शुक्तिका हि रजतवदवभासते न पुना रजतमिदमिति । एकश्चन्द्रः सद्वितीयवद् भाति न पुनः सद्वितीयोऽयमिति । तथा च भ्रमस्थले सर्वत्रारोप्यस्यानिर्वचनीयस्योत्पत्तिरेव युक्ता, तथा चारोप्याकारेण तज्ज्ञानाभासाकारेण च दोषसंस्कारादिसहकृताया अविद्याया युगपत्परिणामः स्वीकृतोऽद्वैतवादिभिः । शुक्तिरजतादेर्मिथ्यात्वेन व्यवहारोऽपि अनिर्वचनीयत्वाभिप्रायेणैव । तदुक्तं भामतीकृता—'मिथ्याशब्दोऽयमनिर्वचनीयतावचन' इति । किन्तु यत्र विषयस्यारोप्यस्य संनिधानं तत्र मिथ्यात्ववादिभिरपि अन्यथाख्यातिरेव लाघवात्स्वीक्रियते । यथा लोहितः स्फटिक इत्यत्र जपाकुसुमलौहित्यस्यैव संनिहितस्य स्फटिके भानम्, न तु अनिर्वचनीयलौहित्योत्पत्तिर्मानाभावात् । एवमेव सन् घट इत्यादावपि अधिष्ठानचैतन्यसत्ताया एव संनिहिताया घटे भानं, न तु तत्र प्रातिभासिकसत्तान्तरोत्पत्तिरिति ।

अद्वैतिनोऽनिर्वचनीयख्यातिञ्च श्रुत्युक्तस्य ब्रह्मणि द्वैताभावस्योपपादनार्थमेव समर्थयन्ते । जगतोऽनिर्वचनीयत्वञ्चानुमानेभ्योऽपि व्यवस्थापयन्ति । विमतं मिथ्या, दृश्यत्वाद्, जडत्वात्, परिच्छिन्नत्वाच्च शुक्तिरूप्यवदिति । अनिर्वचनीयख्यातिसमर्थनार्थमेव चान्यथाख्यातिवादिभिः शुक्तिरूप्यादिप्रत्यक्षार्थमभ्युपगतां ज्ञानलक्षणाप्रत्यासत्तिं दूषयन्ति । साक्षात्संबन्धस्यैव प्रत्यक्षनियामकत्वं नतु सामान्यलक्षणाया ज्ञानलक्षणाया वा परम्परासंबन्धरूपायाः, अनुमानाद्युच्छेदापत्तेरिति वदन्ति । सुरभि चन्दनखण्डमित्यादिस्थले च चैतन्यरूपस्य ज्ञानस्य वृत्तिद्वयप्रतिबिम्बितस्यैक्येऽपि संनिहितासंनिहितविषयभेदेन सौरभांशे परोक्षा चन्दनखण्डांशे चापरोक्षा वृत्तिरित्येवं वृत्तिद्वयं स्वीकुर्वन्ति । सर्वस्यानिर्वचनीयत्वस्वीकारादेव च स्वप्रक्रियामपि आत्मज्ञानसंपत्त्यै कल्पितां नानाविधां न सतीं मन्यन्ते । तदुक्तं वेदान्तवार्तिककृद्भिः—

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सेह प्रक्रिया साध्वी विपरीता ततोऽन्यथा ॥

खण्डनखण्डखाद्येऽपि—अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा ।
तत्किं न चैतानि यथाभिलाषं सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥

बाधेऽदृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम् ।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥
आहेदं मिथिलानाथो मुमुक्षुर्निर्ममः पुरा ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ इति ।

अनिर्वचनीयतावादश्च समादृतो बौद्धनिराकरणे बद्धपरिकरैः श्रीमदुदयनाचार्यैरपि आत्मतत्त्वविवेके—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः ।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

इति वेदनयस्य बलवत्त्वं वदद्भिः। अनिर्वचनीयतावाद एव च—'एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किं चने'त्यादिश्रुतयोऽपि अनुगृहीता भविष्यन्ति। उपक्रमोपसंहारादिभिः षड्भिस्तात्पर्यलिङ्गैरपि अद्वैत एव तात्पर्यमुपपादितं श्रुतीनां शारीरकभाष्यादिषु। उपपद्यते चाद्वैतविधावेव श्रुतीनां तात्पर्यम्। अद्वैतस्य प्रमाणान्तरादप्राप्तत्वात्। न तु तत्र तत्र सृष्ट्यादिप्रतिपादनेऽपि तासां द्वैते तात्पर्यम्, द्वैतस्य पांसुलपादेन हालिकेनापि प्रत्यक्षतो निर्धारितत्वात्। श्रुतिषु सृष्ट्यादिप्रतिपादनन्तु अद्वैतविधानार्थमेव 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायात्। अद्वैतरक्षार्थं सर्वस्य मिथ्यात्वस्वीकारे वेदस्यापि तत्त्वापत्तौ कथं तद्बोधितस्याद्वैतस्य वास्तवत्वमिति तु न शङ्क्यम्। स्वप्नदर्शनस्य मिथ्यात्वेऽपि सत्यारिष्टादि-बोधकत्वस्य दृष्टत्वेनात्रापि तथासंभवात्। तदुक्तं स्वप्नाध्यायमुदाहरद्भिर्वेदान्तसूत्रभाष्यकृद्भिः, 'यदा पुरुषं कृष्णं कृष्णदन्तं पश्यति स एवैनं हन्तीति'।

'यदा काम्येषु कर्मसु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥' इति च।

वेदस्य मिथ्यात्वे तत्प्रतिपादितैः श्रवणादिभिरुपायैरपि मिथ्याभूतैः कथं संसारहेतुभूताया मायाया निवृत्तिरित्यपि न वाच्यम्, स्वाप्नव्याधीनां स्वाप्नौषधैः प्रतीकारस्येव तैस्तस्या अपि संभवात्। तथा चानिर्वचनीयख्यातिस्वीकार एव श्रुतिभिर्विविधिषितमद्वैतं द्वैतसाक्षिस्वप्रकाशं ब्रह्म सिद्ध्यति नान्यथेत्यनिर्वचनीयतैव प्रपञ्चस्य हृद्या निरवद्या चेति शम्।

—

# शाब्दबोधकारणनिर्वचने न्यायमतम्

लेखकः—पं० गणपतिशास्त्री मोकाटे

विदितपदपदार्थसङ्गतिकानां पुंसां पदकदम्बकश्रवणसमनन्तरं वाक्यार्थधीरुदयमासादयतीति न तिरोहितं समेषां प्रेक्षापूर्वकारिणाम्। किं बहुना धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मोक्षलक्षणस्य परमपुरुषार्थस्य साधनं ब्रह्मज्ञानमपि दशमस्त्वमसीत्यादाविव तत्त्वमसीतिवाक्यादेवेति परमसिद्धान्तो वेदान्तशास्त्रमाकलयतां विदुषाम्।

अत्र केचित् विप्रतिपद्यन्ते—पदकदम्बरूपवाक्यस्य श्रावणमेव तावद् दुर्घटम्, वर्णसमुदायात्मकपदस्य श्रोत्रेणानुभवासम्भवात्। तथा हि—वर्णानित्यत्ववादिमते पूर्वं घोत्पत्तिः ततो द्वितीयक्षणे घत्वनिर्विकल्पकमकारोत्पत्तिश्च। अथ तृतीयक्षणे अकारतत्त्वनिर्विकल्पकं घत्वविशिष्टधीः टोत्पत्तिर्घकारनाशश्च। चतुर्थक्षणे अत्वविशिष्टधीः टत्वनिर्विकल्पकमकारनाशश्चरमाकारोत्पत्तिश्च। तदानीञ्च घकारभानं न सम्भवति, प्रत्यक्षं प्रति विषयस्य हेतुत्वात्। ततः पञ्चमक्षणे टत्वविशिष्टज्ञानमकारतत्त्वनिर्विकल्पकं टकारनाशः तदानीं प्राथमिकाकारभानं न सम्भवति, प्रत्यक्षं प्रति विषयस्यापि हेतुत्वात्। ततः षष्ठक्षणे अत्वविशिष्टबुद्धि-अकारनाशौ, तदानीं टकारभानं न सम्भवति तदभावात्। तथा च कथं वर्णसमूहात्मकपदगोचरश्रोत्रानुभवः। न च पूर्वपूर्ववर्णोपनयसहितान्त्यवर्णसन्निकर्षात् पदगोचरश्रोत्रानुभव इति वाच्यम्, 'बहिरिन्द्रियजन्यप्रत्यक्षे उपनीतं विशेषणतयैव भासत' इतिनियमेन प्रत्येकवर्णसमूहमुख्यविशेष्यकपदप्रत्यक्षस्योपनयमर्यादया श्रावणत्वासम्भवात्, पदप्रत्यक्षे प्रत्येकं सर्वस्यैव वर्णस्य मुख्यविशेष्यत्वात्। न च पूर्ववर्णोऽन्त्यवर्णे विशेषणतया भासत इति वाच्यम्, पूर्ववर्णेऽन्त्यवर्णविशेषणत्वनियामकस्य तत्सम्बन्धाभावात्। इत्थञ्च पदस्य श्रौत्रानुभवासम्भवेन पदसमुदायरूपवाक्यस्यापि तदसम्भव एवेति वाक्यार्थधीर्विलयं गतेति।

न च प्रत्येकं वर्णानां विज्ञानादर्थप्रत्ययोऽस्तु, प्रथमादेवाभिधेयप्रत्ययोत्पादसम्भवे द्वितीयादीनामानर्थक्यप्रसङ्गात्, प्रत्येकादर्थधीप्रसङ्गाच्च। वर्णनित्यतावादेऽपि तेषां न सत्तामात्रेणार्थधीहेतुता, सदातनत्वेन सर्वदार्थप्रत्ययप्रसङ्गात्। अपि च, तन्मते वर्णानां नित्यतया विभुतया च तेषां सर्वेषां वास्तविकी सङ्गतिर्न केषाञ्चिदेव पदवाक्यभावमासादयिष्यति, अनुभूयमानानां तु अनुभवानुसारेण तत्पर्यायेण पर्यायवती न समूहभाग् भविष्यति. न खल्वेकदेशकालानवच्छिन्ना भावाः समूहवन्तो भवन्ति। उभयथापि वाक्यानुभवोऽर्थप्रत्ययाय न कल्पत इत्यसमञ्जसमेतत्। ननु

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्त्यवर्णविज्ञानमर्थप्रत्ययं जनयत्विति चेन्न, संस्कारो हि स्वकार्यस्मृतिं जनयेन्न शाब्दधियम्। प्रोक्षणादिभ्य इवापूर्वंतत्कल्पने तु कल्पनागौरवमापतेदिति यत्किञ्चिदेतत्। ननु मा भूत् वर्णानुभवोऽर्थप्रत्ययहेतुः पूर्वपूर्ववर्णानुभवजनितसंस्कारापादिता तावतां स्मृतिरेवार्थधीहेतुरस्तु, न। तस्यां भासमाना वर्णाः समूहालम्बनवत् प्रत्येकं मुख्यविशेष्यतयैव भासेरन्, तथा सति जरा-राजेतिस्मृत्योरप्यविशेषप्रसङ्गेनार्थविशेषप्रत्ययो न स्यात्। किञ्च वर्णानुभवैराहिताः संस्कारास्तावतीः क्रमाक्रमवतीः स्मृतीर्जनयेयुः न निखिलवर्णगोचरामेकां स्मृतिम्, तेषामन्योन्यमनपेक्ष्यैव स्मृतिरूपफलजनकत्वात्। अथ चक्षुषा प्रत्यक्षे जननीये तत्तत्सन्निकर्षाणां निरपेक्ष्यैव जनकत्वेऽपि नानासन्निकर्षैर्नानाविषयकमेकप्रत्यक्षमिव नानासंस्कारैर्मिलितैर्नानावर्णगोचरमेकं स्मरणं जनयेत्। तथापि नदी-दीन-जरा-राजेतिस्मृतिधियोरप्यैक्यप्रसङ्गरूपस्य पूर्वोक्तदूषणस्य तादवस्थ्यमेव। नहि स्वरूपमात्रगोचरैकस्मृत्युपारूढानामस्ति कश्चिद्विशेषो वर्णानाम्। अथ न वर्णसमुदायात्मकत्वं पदस्य, न वा पदसमुदायात्मकत्वं वाक्यस्य, अपि तु तदतिरिक्तं तदवयव्यात्मकत्वं तयोरिति पदं वाक्यञ्च सुग्रहं श्रोत्रेणेति केषाञ्चिन्मतं, तदपि न पेशलम्। विभूनां नित्यानां वर्णानां तदवयवत्वासम्भवात्। अवयविनो न्यूनपरिमाणस्यैवावयवत्वाङ्गीकारात्, गगनगुणत्वपक्षेऽपि तेषामद्रव्यतया समवायिकारणत्वासम्भवेनावयवत्वानुपपत्तेश्च। ननु वर्णा वायवीयपरमाण्वारब्धद्रव्याण्येव। तदुक्तं वाक्यपदीये—'लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना। स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते। वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते' ॥ इति च। तथा च समुपपद्यते समवायिकारणत्वं तेषामिति चेन्न, समवायिकारणत्वस्य सम्भवेऽपि क्षणिकतयाऽऽशुतरविनाशशालिनामसहभुवां तेषामसमवायिकारणसंयोगासम्भवात्।

नन्वस्तु वर्णातिरिक्तं तदनवयविरूपमेव वाक्यं वाक्यार्थस्य वाचकं, तर्हि पदं वाक्यमिति बुद्धावनुभूयमाना वर्णा अलीका एव सन्ति। ओमिति ब्रूमः। रक्तः स्फटिक इतिवदुपाधिवशाद् भ्रान्तिमूलका एव—इति चेन्न, तेषामलीकत्वकल्पने तदतिरिक्तस्याखण्डस्य वस्तुनश्च कल्पने मानाभावात्। न च एकं पदमेकं वाक्यमित्यभिन्नैकवस्तुनिर्भास एव मानम्, सेना वनमिति व्यपदेशवदुपपत्तेः। न चार्थप्रत्ययजनकत्वान्यथानुपपत्त्या तत्कल्प्यत इति वाच्यम्, अतथात्वात्। तथा हि—अत्र गौतममतानुसारिणः—श्रौत्रप्रत्येकपदानुभवजन्यसंस्कारेभ्य एकदैव तावन्ति पदानि स्मर्यन्ते, ततो युगपदेव तावतां पदार्थानां स्मृतौ सत्यां वाक्यार्थानुभवः। तदुक्तं वात्स्यायनभाष्ये—"वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावत् श्रवणं भवति, श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसन्धत्ते, प्रतिसन्धाय पदं व्यवस्यति, पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते, पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति, सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यत" इति। पदप्रत्यक्षन्तु नासम्भवि, यतो हि न घादिसमुदायमात्रं घटादिपदं, टघादेरपि घटपदत्वापत्तेः, अपि तु अव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवदुत्तरोत्तरवर्ण एव पदम्, तथा चोपनयसहकारेण पूर्ववर्णोऽपि

उत्तरवर्णे अव्यवहितोत्तरत्वसम्बन्धेन विशेषणतया भासते, विशेष्येण च साकं लौकिकः सन्निकर्षः।

एवं घकारविशिष्टोऽकारो विशेषणतया टकारे भासते। एवंरीत्या पूर्वपूर्ववर्णवदुत्तरोत्तर-वर्णत्वरूपं पदत्वस्य श्रावणमुपपन्नम्। अत एव पदं शृणोमि, वाक्यं शृणोमीत्यनुव्यवसायोऽप्युपपन्नः। घकारादीनाञ्च घत्वादिना प्रवेशान्नाननुगमः। तथा च सत्यामुपपत्तौ नाप्रामाणिक-पदवाक्यस्फोटकल्पना युज्यत इत्यलं विस्तरेण।

——

# मुक्तिवादसङ्ग्रहः

लेखकः—पं० श्रीशिवदत्तमिश्रः

नमो दैत्यकुलाक्रान्तभुवो भारं जिहीर्षवे ।
वृष्णिवंशावतीर्णाय चतुर्व्यूहाय विष्णवे ॥१॥
अज्ञानध्वान्तमार्तण्डं गुरोर्नत्वा पदद्वयम् ।
उच्यते शिवदत्तेन मुक्तिवादस्य संग्रहः ॥२॥

इह खलु गहनातिगहने दुस्तरातिदुस्तरेऽज्ञानतिमिरावृते योगिजनैरपि सपीडमुपभुज्यमाने जगति निखिलेष्वपि प्राणिनिवहेषु कैर्नाधिजिगमिष्यते मुक्तिपदार्थो नाम । तस्याऽस्य सर्वाभिलाषविषयस्य कथं प्राप्तिः, को वाऽयमिति वास्तवविचारसंलग्नमानसा अशेषा अपि दर्शनकारास्तान्त्रिकाश्चान्येऽपि स्वान् स्वान् सिद्धान्तान् सूत्ररूपेण निबन्धरूपेण वा प्रादर्शयन् । एनमेवावश्यस्फोटनीयं विषयमालम्ब्य न्यायशास्त्रावतारभूतो भगवान्महर्षिरक्षपादोऽपि षोडशपदार्थी प्रदर्शयन् दर्शितपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति सुस्पष्टमेव लिलेख । ततश्च तत्त्वज्ञानादेव निःश्रेयसापरपर्याया मुक्तिर्भवतीति गम्यते ।

तत्त्वज्ञानं च न यथार्थज्ञानमात्रम्, तथा सति भूतलं घटवदिति यथार्थज्ञानादपि इदानीं चैत्रादेर्मुक्तिप्रसङ्गात् । अथ मिथ्याज्ञानभिन्नं ज्ञानमेव तत्त्वज्ञानं तच्च मुक्त्यव्यवहितप्राक्क्षणे एव भवति, इदानीन्तनभूतलं घटवदित्यादिज्ञानानां यथार्थत्वेन प्रतीयमानानामपि आंशिकमिथ्यात्वस्वीकारात् । त्रिपुटीप्रत्यक्षवादिमते सर्वेषां ज्ञानानां मिति-मेय-मातृ-विषयकत्वात् । न च घटमहं जानामीत्याकाराकारितज्ञानानां कथं भ्रमत्वमिति वाच्यम् । तादृशज्ञानसामग्रीकाले सामग्रीसंभवाद् गौरोऽहं जानामि स्थूलोऽहं जानामीत्याकारकतया गौरादेरपि भानसंभवात्, आत्मनि च गौरत्वादेर्बाधितत्वाद भ्रमत्वानपायात् ।

अत्र केचित्—सर्वज्ञानानामात्मविषयकत्वे मानाभावः, अस्तु वाऽऽत्मादिविषयकत्वं, तथापि गौरत्वादिविषयकत्वे मानाभावः । न च दोषाद् गौरत्वादिमानमिति वाच्यम् । दोषाणामसार्वत्रिकत्वात् । किं च मुक्तेरव्यवहितप्राक्काले आत्मनि गौरत्वाभावनिश्चयाद् दोषविरहात् गौरोऽहं जानामीति न प्रत्ययः । न चेदानीमपि तत्र गौरत्वाभावनिश्चयात्कथं गौरोऽहमितिबुद्धिरिति वाच्यम् । इदानीन्तनगौरत्वाभावनिश्चयस्याऽप्रामाण्यज्ञानास्कन्दितत्वात् अप्रामाण्यज्ञानानास्कन्दितस्यैव बाधनिश्चयस्य विशिष्टबुद्धिप्रतिबन्धकत्वादित्याहुः ।

वस्तुतस्तु अहं शरीराद्भिन्नः—अहं न गौरः—न स्थूलः-इत्यादि ज्ञानं तत्त्वज्ञानम्। इदानीं श्रवणादिना तादृशज्ञानोत्पादेऽपि तस्याऽप्रामाण्यज्ञानास्कन्दितत्वान्न मुक्तिरूपकार्यकारित्वम्। अत एव कुसुमाञ्जलौ "इदानीन्तत्त्वज्ञानमतत्त्वज्ञानमेवे"त्युक्तमाचार्यैः। अतत्त्वज्ञानमित्यस्य तत्त्वज्ञानकार्यकारित्वाभाववदित्यर्थः। एवमस्य शरीराद्भिन्नोऽहमिति ज्ञाने जातेऽपि दिवसान्तरे शरीराभेदावगाहि गौरोऽहमित्याकारकं ज्ञानमपि जायते। अत एव प्राथमिकज्ञानादपि न मुक्तिः, स्वसमानाधिकरणमिथ्याज्ञानप्रागभावाऽसमानकालीनस्यैव तत्त्वज्ञानस्य मुक्तौ कारणत्वात्। इदानीन्तनयथार्थज्ञानानां भाविमिथ्याज्ञानप्रागभावसमानकालीनत्वात्।

परे—तु मुक्तित्वावच्छिन्नं प्रति विजातीयतत्त्वज्ञानत्वेन कारणत्वं, तादृशवैजात्यावच्छिन्नं ज्ञानं मुक्त्यव्यवहितपूर्वकाले एव भवति, इदानीं शरीराद्भिन्नोऽहमिति ज्ञाने जातेऽपि तत्र न मुक्तिजनकतावच्छेदकीभूतवैजात्यं कल्प्यते फलानुरोधित्वात्कल्पनायाः, एवं च नेदानीं मुक्तिः। न च मुक्तित्वावच्छिन्नं प्रति विजातीयतत्त्वज्ञानत्वेन कारणत्वं विजातीयवायुसंयोगत्वेन वेति विनिगमनाविरह इति वाच्यम्। ज्ञानस्य मुक्तिकारणत्वे बहुशः शास्त्राणां विनिगमकत्वात्। तथाहि—"तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय।" एवं "तत्त्वज्ञानाद्भवेन्मुक्तिर्नान्यथा जन्मकोटिभिः।" इत्यादिशास्त्राणां सत्त्वात्। इत्थं च विजातीयज्ञानमेव मुक्तिकारणम्। तच्च मुक्त्यव्यवहितपूर्वक्षणे एव जायते नान्यदाऽतो न कुत्रापि दोष इति वदन्ति।

ननु मिथ्याज्ञानाभाव एव मुक्तिं प्रति कारणमस्तु किं तत्त्वज्ञानकल्पनेन। मुक्तेः पूर्वं मिथ्याज्ञानाभावस्य तत्त्वज्ञानकारणतावादिनापि अवश्यं सत्त्वाभ्युपगमात्। न च सुषुप्तिकाले मिथ्याज्ञानस्याऽसत्वात्कथं न मुक्तिरिति वाच्यम्। मिथ्याज्ञानप्रागभावाऽसमानकालीनस्यैव तस्य मुक्तिकारणत्वादिति चेत्, न, मिथ्याज्ञानाभावमपेक्ष्य तत्त्वज्ञानस्यैव कारणत्वं लाघवात्। शास्त्राणां विनिगमकत्वाच्च। तथा हि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे॥ इति।

अहं शरीराद्भिन्न इत्याकारकतत्त्वज्ञानस्य प्रागभाव एव धर्माधर्मयोः कारणम्। अत एव शुकनारदादीनां विहितक्रियातो न धर्मः। नापि निषिद्धक्रियातोऽधर्मः। तत्त्वज्ञाने जाते तत्त्वज्ञानप्रागभावस्य नाशेन कारणविरहात्। न च तथापि दिवसान्तरीयतत्त्वज्ञानप्रागभावसत्त्वात्तयोरुत्पादापत्तिरिति वाच्यम्। आद्यतत्त्वज्ञानप्रागभावस्यैव कारणत्वात्। तत्त्वज्ञाननिष्ठमाद्यत्वं च स्वसमानाधिकरणतत्त्वज्ञानध्वंसाधिकरणकालाऽवृत्तित्वम्। पुमन्तरीयतत्त्वज्ञानध्वंसाधिकरणकालवृत्तित्वं सर्वेषामेव तत्त्वज्ञानानामतः स्वसमानाधिकरणेति।

यत्तु—एकस्मिन् तत्त्वज्ञाने जाते पुनर्न तत्त्वज्ञानान्तरं स्वीक्रियते गौरवादिति मतं, तच्चुच्छम्। आत्ममनःसंयोग-त्वङ्मनःसंयोगयोरवच्छेदकस्य शरीरस्य सत्त्वेन ज्ञानोत्पत्तौ बाधकाभावात्, न हि गौरवभिया सामग्री कार्यं नार्जयति। न च तत्त्वज्ञाने सति कथं शरीरं तिष्ठति, तत्कार-

णीभूतकर्मणां तत्त्वज्ञानेन नाशादिति वाच्यम्। प्रारब्धकर्मणां भोगैकनाश्यत्वात्। अत एव शुकनारदादीनां तत्त्वज्ञानवतामपि शरीराणि। यैः कर्मभिः शरीरं जन्यते तानि प्रारब्धकर्माणि।

केचित्तु अहं शरीरान्न भिन्न इत्याकारकमिथ्याज्ञानजन्यस्तदाकारसंस्कार एव धर्माऽधर्मौ प्रति कारणं, तादृशसंस्कारश्च "अहं शरीराद्भिन्न" इत्याकारकतत्त्वज्ञानजन्यसंस्कारान्नश्यति, पूर्वोत्पन्नसंस्कारस्योत्तरोत्पन्न( विरुद्ध )संस्कारेण नाशस्वीकारात्। न च विरुद्धविषयकसंस्कारस्य नाशकत्वे मानाभाव इति वाच्यम्। तथा सति स्मृतेः संशयाकारत्वापत्तेः यत्रैकदा भूतलं घटवदितिज्ञानं कालान्तरे भूतलं न घटवदिति ज्ञानं तत्रोभयज्ञानजन्ययोस्तदाकारसंस्कारयोर्युगपदुद्बोधकवशाद् घटघटाभावयोः स्मरणे सुतरां संशयत्वापत्तेः। मम तु घटवदित्याकारकसंस्कारस्य भूतलं घटाभाववदितिसंस्कारेण नाशान्नोक्तापत्तिः, एवं च तत्त्वज्ञानिनां शुकादीनां मिथ्याज्ञानजन्यसंस्कारनाशान्न धर्माधर्मोत्पत्तिरित्याहुः।

अथ मुक्तिं प्रति तत्त्वज्ञानत्वेन कारणता न संभवति काशीमरणादितोऽपि मुक्तिश्रवणेन तत्र व्यभिचारात्। एवं ब्रह्मचर्यादिस्वस्वजात्युक्तकर्मणापि मुक्तिः। यथा गीता—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

स्वे स्वे—स्वस्वजात्युक्ते कर्मणि—पञ्चमहायज्ञादिरूपनित्यकर्मणि अभिरतः = प्रयुक्तः संसिद्धिं = मुक्तिं लभते तम् = ईश्वरं स्वकर्मणा = ब्रह्मचर्याद्याश्रमोक्तकर्मणा अभ्यर्च्य = पूजयित्वा इत्यर्थः। तथा च कर्मणोऽपि मुक्तिकारणत्वात्कथं तत्त्वज्ञानस्यैव कारणत्वम्। अत एव—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथा वै ज्ञानकर्मभ्यां योगिनां मुक्तिरिष्यते॥ इति।

द्विवचनेन कर्मणोऽपि प्राधान्येन हेतुत्वमिति चेन्न। तत्त्वज्ञानस्यैव मुक्तौ कारणत्वात्। कर्मजन्यमुक्तिस्थलेऽपि मरणपूर्वसमये परतो वा तत्त्वज्ञाने जाते एव मुक्तिः। अत एव काश्यां मरणान्मुक्तिरिति श्रुत्यन्तर्गतपञ्चम्याः प्रयोजकत्वोपवर्णनं संगच्छते। तथा च न कुत्रापि व्यभिचारः। युज्यते च तत्त्वज्ञानस्य मुक्तिहेतुत्वम्। तथा च श्रुतिः—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति।

अस्या अर्थस्तु—तमात्मानं विदित्वैवाऽतिमृत्युं-मुक्तिमेति-प्राप्नोति अयनाय-मुक्तये तत्त्वज्ञानादन्यः पन्था-उपायो न विद्यते इति। एवकारो विदित्वेत्यस्य परं योजनीयो न तु तमित्यस्मात् परं, तथा सति एवकारेणाऽऽत्मभिन्नस्य व्यवच्छेदे आत्मभिन्नाविषयकं ज्ञानं कारणमिति लभ्यते। तथा चाऽप्रसिद्धिः, आत्मज्ञानस्याऽऽत्मभिन्नं यदात्मत्वं तद्विषयकत्वात्। एवकारस्य विदित्वेत्यनन्तरं योजने तु आत्मज्ञानमेव कारणं नान्यदिति लभ्यते। न च तद्भिन्नस्य कर्मणोऽपि हेतुत्वात्कथं व्यवच्छेद इति वाच्यम्। आत्मज्ञानमेव न त्वन्यदित्यनेनाऽऽत्मज्ञानविरोधि ज्ञानं मिथ्याज्ञानं शरीरेऽहमिति ज्ञानमित्यर्थकरणान्नाप्रसिद्धिसम्भावनेति ध्येयम्।

तत्त्वज्ञाने जाते तु मुक्त्यर्थे न कर्मापेक्षा। अत एव जडभरतस्य जन्मान्तरीयकर्माधीनजाततत्त्वज्ञानस्य एतज्जन्मनि शास्त्रानध्ययनेऽपि ब्रह्मचर्याद्यनाचरणेऽपि मुक्तिः।

न च विहितकर्मानाचरणे जडभरतस्य कथं नाधर्म इति वाच्यम्। मिथ्याज्ञानजन्यसंस्कारस्य धर्माधर्मकारणस्याऽसत्त्वात्। तादृशसंस्कारस्य तत्त्वज्ञानेन नाशात्। अथ जाततत्त्वज्ञानानां शुकनारदादीनां कथं न मुक्तिः। मैवम्। तेषां देहारम्भककर्मणामनाशात्। तेषां च भोगैकनाश्यत्वात्। न च "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति भगवद्गीताविरोध इति वाच्यम्। कर्मणां भस्मत्वाभावेन भस्मपदस्य नाशे लक्षणा, तथा च झटिति भोगद्वारा परम्परया कर्मनाशो भवतीत्यर्थः। भोग एव कर्मनाशकः—अत एव सौभरिप्रभृतयो झटिति भोगार्थं कायव्यूहं स्वीचक्रुः। अत एवोक्तं तत्रैव—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति संक्षेपः।

ननु न तावद् दुःखात्यन्ताभावो मुक्तिः, अत्यन्ताभावस्य नित्यत्वेनोद्देश्यत्वाभावात्। तथा च मुक्तिकारणेषु शमदमादिषु अप्रवृत्तिप्रसङ्गः। एतेन "तदत्यन्तविमोक्षोऽपवर्ग" इति सूत्रे तत्पदं दुःखपरम्, अत्यन्तपदं नित्यपरं, विमोक्षपदमभावपरं, तथा च दुःखात्यन्ताभावो मुक्तिरित्यर्थ इति परास्तम्। नित्यत्वेन तत्त्वज्ञानाऽसाध्यत्वापत्तेः, संसारितादशायामपि मुक्त्यापत्तेश्च। नापि यावद्धर्माधर्मनाशो मुक्तिः, तथापि मुक्तावप्रवृत्तिप्रसङ्गात्। पुरुषार्थे हि जनः प्रवर्त्तते, पुरुषार्थश्च सुखं दुःखाभावश्च, धर्माधर्मनाशश्च न सुखं दुःखाभावरूपो वा येन तत्र प्रवृत्तिः स्यात्। तथा च सदाचारादौ प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानविरहात्। इष्टं—सुखं दुःखाभावश्च, तदन्यतरसाधनताज्ञानस्य प्रवृत्तिजनकत्वात्। अथ दुःखध्वंसो मुक्तिः, ध्वंसस्य जन्यतया पुरुषसाध्यत्वरूपं पुरुषार्थत्वमक्षतमेवेति चेन्न। संसारिणोऽपि मुक्तत्वप्रसङ्गात्। एवं दुःखध्वंसस्य मुक्तित्वे तत्त्वज्ञानस्य कारणत्वानुपपत्तिप्रसङ्गः, तत्त्वज्ञानं विनापि कारणनाशेनाऽनन्तानामिदानीन्तनानां नाशात्। नापि विजातीयदुःखस्य नाशो मुक्तिः। चरमदुःखे वैजात्ये मानाभावात्। न च चरमदुःखे वैजात्यं कल्पनीयम्। तथा च तादृशवैजात्यावच्छिन्नदुःखनाशत्वावच्छिन्नं प्रति तत्त्वज्ञानस्य कारणत्वान्नेदानीन्तनदुःखस्य नाशे व्यभिचारः। एतद्दुःखस्य तादृशवैजात्यावच्छिन्नत्वाभावादिति वाच्यम्। चरमदुःखे वैजात्यकल्पने मानाभावात्, गौरवेण कल्पनाया बाधितत्वात्।

केचित्तु—यथा वह्निनिष्ठं तादृशजन्यतावच्छेदकं वैजात्यम्, एवं अरणि-मणिजन्यतावच्छेदके वैजात्ये कल्पनीये, तथा तत्त्वज्ञाननाश्यतावच्छेदकतया चरमदुःखेऽपि वैजात्यं कल्प्यते इत्याहुः। तच्चिन्त्यम्। कार्यतावच्छेदकतया कारणतावच्छेदकतया वा जातेः स्वीकारो ग्रन्थकृत्संमतो न तु नाश्यतावच्छेदकतया तत्स्वीकारो ग्रन्थकृत्सम्मत इति ध्येयम्।

अत्राहुः—आत्यन्तिकी दुःखनिवृत्तिर्मुक्तिः। "तदत्यन्तविमोक्षोऽपवर्ग" इतिसूत्रे मोक्षपदं ध्वंसपरम्, दुःखध्वंसे आत्यन्तिकत्वं च—स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्, तथा च स्वसमानाधिकरणदुःखप्रागभावाऽसमानकालीनदुःखध्वंसो मुक्तिः। स्वपदं दुःखध्वंस-

परम्, कालीनान्तविशेषणेनेदानीन्तनदुःखध्वंसवारणम्। मुक्तपुरुषीयचरमदुःखध्वंसस्यापि विभिन्नपुरुषीयदुःखप्रागभावसमानकालीनत्वाच्चरमदुःखध्वंसरूपायां इदानीन्तनमुक्तौ अव्याप्तिवारणाय स्वसमानाधिकरणेति। भेदस्याव्याप्यवृत्तित्वनये सुषुप्तौ मुक्तत्वापत्तिवारणाय प्रागभावेति। न च दुःखप्रागभावाऽसमानाधिकरणत्वमात्रमेव सम्यक्, असंभवापत्तेः। सर्वस्यैवातीतदुःखप्रागभावाधिकरणाऽन्यवृत्तित्वात्।

अथैवमपि मुक्तेः परं दुःखस्यानुत्पत्स्यमानत्वेन चरमदुःखनाशसमानाधिकरणदुःखप्रागभावाप्रसिद्धया कथमसमानकालीनत्वप्रसिद्धिरिति चेत् – तत्पुरुषीयस्य मुक्तेः पूर्वोत्पन्नदुःखस्य यः प्रागभावः स च चरमदुःखध्वंससमानाधिकरणस्तदसमानकालीनत्वस्य स्वस्मिन्सुलभत्वात्, तस्य विनष्टत्वात्।

यद्वा चरमदुःखनाशो मुक्तिः। चरमत्वं दुःखविशेषणम्। तेन स्वसमानाधिकरणदुःखप्रागभावसमानकालीनोत्पन्नदुःखभिन्नं यद् दुःखं तन्नाशो मुक्तिः। तच्च नेदानीन्तनदुःखं तस्य भाविदुःखप्रागभावसमानकालोत्पन्नत्वादिति।

नन्वेवमपि मुक्तौ प्रवृत्त्यनुपपत्तिः, पुरुषार्थत्वाभावात्। चरमदुःखध्वंसरूपायाः मुक्तेः प्रतियोगिभूतदुःखजन्यत्वात्। चरमदुःखे उत्पन्ने एव तृतीयक्षणे तस्य नाशो भविष्यति, सत्यम्। दुःखध्वंसत्वेन मुक्तौ नोद्देश्यता किन्तु विशिष्टदुःखध्वंसरूपा मुक्तिरुद्देश्या, सा च तत्त्वज्ञानादेव। दुःखध्वंसनिष्ठं वैशिष्ट्यञ्च स्वसमानाधिकरणदुःखप्रागभावसमानकालीनं यद्यत्तद्भिन्नत्वरूपम्। तद्भिन्नदुःखध्वंसश्च तत्त्वज्ञानादेव। अथ वा दुःखवदन्यदुःखध्वंसो मुक्तिपदार्थः। दुःखवत्ता च स्वप्रागभावसमानकालीनत्व-स्वसामानाधिकरण्योभयसंबन्धाभ्याम्। स च तत्त्वज्ञानैकसाध्यः।

स्यादेतत्, मुक्तौ कथं प्रवृत्तिः, मुक्तौ सत्यां दुःखवत्सुखस्याप्यनुत्पत्तेः। न हि सुखनाशार्थं कश्चिद्यतते, सुखाभावरूपबलवद्द्विष्टसंवलिततत्त्वज्ञानेन दुःखध्वंसेऽपि बलवद्द्वेषोत्पादात्। फलगोचरबलवद्द्वेषस्य च तद्गोचरप्रवृत्तौ प्रतिबन्धकत्वात् इति चेन्न। यथा मरणजन्यदुःखे बलवद्द्वेषात्तत्संवलिततत्त्वज्ञानेन मधुविषसंपृक्तान्नभोजनजन्यसुखे बलवान्द्वेष एव नत्विच्छा, तद्वत्संसारिसुखानां बहुतरदुःखमिश्रितत्वेन द्वेष्यत्वान्न तत्रेच्छाप्रवृत्ती, बलवदनिष्टानुबन्धित्वात्। बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानं हि प्रवृत्तिजनकम्। भोजने यत्किंचिच्छ्रमरूपानिष्टानुबन्धित्वादप्रवृत्तिवारणाय बलवदिति। तच्च नान्तरीयकदुःखाधिकदुःखाजनकत्वम्। तथा च मुमुक्षूणां सुखाभावोऽभीष्ट एव न तु द्वेषविषयः, यस्य यत्रेच्छा तस्य तदभावे एव द्वेषादिति भावः।

एतच्चापाततः। सुखेच्छां प्रति नेष्टसाधनताज्ञानं हेतुः किन्तु सुखत्वप्रकारकज्ञानस्यैवेच्छाहेतुत्वेन बहुतरदुःखानुबन्धित्वज्ञानसत्त्वेऽपि सुखेच्छोत्पत्तौ बाधकाभावात्। न हि दुःखाननुबन्धित्वेन सुखज्ञानं सुखेच्छाकारणं, दुःखानुबन्धित्वेन सुखज्ञानं सुखेच्छाप्रतिबन्धकं वा, सुखस्य निरुपधीच्छाविषयत्वात्। निरुपधीच्छाविषयत्वं चाऽन्येच्छानधीनेच्छाविषयत्वम्। अन्यथा स्वतःपुरुषार्थत्वविरोधात्। न च बहुतरदुःखानुबन्धित्वज्ञानं बलवदनिष्टार्थो-

विरुद्धत्वज्ञानं वा द्वेषहेतुः, मानाभावात्। तद्दुःखत्व-दुःखसाक्षात्कारत्व-द्विष्टसाधनत्व-इच्छाविषयतावच्छेदकाश्रयप्रतियोगिकाभावत्वानामेव द्वेषप्रयोजकत्वादिति ध्येयम्।

वस्तुतस्तु—सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनेन दुःखाभावस्यैव स्वतःपुरुषार्थत्वम्। न हि सुखमस्तीत्युद्दिश्य दुःखाभावार्थे प्रवर्त्तते, वैपरीत्यस्यापि सुवचत्वात्। अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिनः प्रवृत्तिप्रतिबन्धकम्, दुःखभीरूणामेव मोक्षेऽधिकारादिति तत्त्वम्।

न च तथापि आत्यन्तिकदुःखध्वंसो यदि मोक्षस्तदा तत्साधनताज्ञानेन श्रवणादौ शिष्टप्रवृत्तिर्न स्यात्, तथा हि—अतीतानागतदुःखयोर्निवृत्तिर्न यत्नसाध्या प्रतियोगिन एवाऽभावात्, न वर्त्तमानस्य, तस्य स्वानुभवेनैव नाशादिति वाच्यम्। हेतूच्छेदे पुरुषप्रवृत्तेः, यथा प्रायश्चित्ते दुःखमूलीभूतोपायोच्छेदार्थमेव शिष्टप्रवृत्तिः तथाऽत्रापि दुःखमूलीभूतमिथ्याज्ञानोच्छेदायैव श्रवणादौ तत्प्रवृत्तिः। यद्यपि मिथ्याज्ञानं दुःखवद् द्विक्षणावस्थायि इति भवति तत्रापि अनागतादिविकल्पः, तथापि वासनायां स्थिरायां न सम्भवतीति पुरुषः प्रयत्नेन तत्त्वज्ञानमुत्पाद्य वासनायां नष्टायां रागाद्यपायक्रमेण दुःखध्वंसलक्षणं मोक्षमासादयति। तथा च परमर्षिसूत्रम्—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति। अत्रोत्तरत्वं पाठक्रममादाय। तदनन्तरापाये इति। पूर्वपूर्वापाये इत्यर्थः। तद् उत्तरोत्तरमनन्तरं यस्येति व्युत्पत्तेः। तथा च तत्त्वज्ञानात् मिथ्याज्ञानादीनामुत्तरोत्तरेषामभावे दोषादीनां पूर्वपूर्वेषामभावादपवर्ग इत्यर्थः। मिथ्याज्ञानपदं मिथ्याज्ञानजन्यसंस्कारपरम्। न च स्वजन्यस्मृतेरेव संस्कारनाशकतया कथं तत्त्वज्ञानस्य मिथ्यावासनानाशकत्वमिति वाच्यम्। संस्कारनिष्ठवैजात्यस्यैव स्मृतिनाश्यतावच्छेदकतया मिथ्याज्ञानजन्यनिखिलसंस्कारं प्रति तत्त्वज्ञानस्यैव नाशकत्वादिति भावः। दोषो मिथ्यावासनासहितो रागो द्वेषश्च। प्रवृत्तिर्धर्माधर्मात्मिका। जन्म-विलक्षणः शरीरसंबन्धः। एवं च तत्त्वज्ञानेन निखिलवासनानाशे तत्सहितरागद्वेषाभावाद् धर्माधर्मयोरनुत्पत्तौ शरीरानुत्पत्त्या दुःखासमानकालीनदुःखध्वंसरूपो मोक्ष इत्याचार्यसम्मतस्तत्सूत्रार्थः। न चैवं विजातीयं दुःखमपि तत्त्वज्ञानादिगोचरप्रवृत्त्युद्देश्यं स्यात्, तदनुत्पाद्य तद्ध्वंसस्योत्पादनासंभवादिति वाच्यम्। बलवद्द्वेषाविषयतया स्वध्वंसरूपपरमेष्टसाधनतया च तस्यापि प्रवृत्त्युद्देश्यत्वे क्षतिविरहात्। तत्त्वज्ञानादेस्तज्जनकत्वेऽपि तदुद्देशेन तत्त्वज्ञानादौ न प्रवृत्तिः किन्तु तद्ध्वंसस्य परमेष्टतया तदुद्देशेनैव तत्त्वज्ञानादौ प्रवृत्तिः। नान्तरीयकतया भोजनादिजन्यश्रमे दुःखवत्तस्याप्युत्पत्तिरित्यभ्युपगमादिति दिक्।

अथ दुःखध्वंसस्य स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणाऽवृत्तित्वे किं मानम्। मुक्तौ विप्रतिपत्तिश्च—दुःखं वस्तुविशिष्टं नवेत्याकारिका। वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टध्वंसप्रतियोगित्वोभयसम्बन्धेन। ध्वंसे स्ववैशिष्ट्यञ्च स्वसमानकालीनत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। विधिकोटिर्नैयायिकानां-मीमांसकानां च निषेधकोटिः। यथा-

श्रुते स्वत्वस्याननुगततया स्वपदेन दुःखधारणे विधिकोटेरप्रसिद्धिः। प्रदीपरूपकार्यधारणे तु सिद्ध-साधनमर्थान्तरं वा स्यात्। संसर्गकुक्षौ तु स्वत्वस्य परिचायकतया नोक्तदोषाणामवकाशः।

अत्र दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात्प्रदीपसन्ततिवदित्याचार्याः। अयं भावः—सन्ततिः कार्यं, तथा च दुःखस्वरूपं कार्यं आत्यन्तिकध्वंसप्रतियोगिकार्यत्वात् प्रदीपस्वरूपकार्य-वदित्यनुमानं फलितम्। आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणावृत्ति यद्यत्तदन्यदुःखप्रतियोगिकत्वम्! न च दुःखपदवैयर्थ्यम्, चरमदुःखसमकालोत्पन्नमुक्तात्ममनः-संयोगादिप्रतियोगिकध्वंसमादाय तत्प्रतियोगित्वस्य दुःखे विरहाद् बाधवारणाय तदुपादानात्। न च सोऽपि ध्वंसो मुक्तिरेवेति संयोगादेः पक्षान्तर्गततया न बाध इति वाच्यम्। मनोघटादेरपि मुक्तत्वापत्तेः।

यत्तु स्वीयदुःखत्वावच्छिन्नप्रतियोगिताकत्वमेवाऽऽत्यन्तिकत्वम्, तथा च तत्पुरुषीय-दुःखत्वावच्छिन्नप्रतियोगिताको दुःखध्वंसस्तत्पुरुषीयमुक्तिः। दुःखपदं च स्वरूपकथनम्। यत्किंचिद्विशेषवति तत्प्रागभाववति च सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसानभ्युपगमेऽपि यत्र विशेषान्तरं नोत्पत्स्यते, न विद्यते वा तत्र सामान्यध्वंसाभ्युपगमादिति, तत्तुच्छम्। अननुगमापत्तेः।

नव्यास्तु—आत्यन्तिकत्वं चरमप्रतियोगिकत्वम्। चरमत्वं च लाघवात्तत्त्वज्ञाननाश्यतावच्छे-दकतया सिद्धः स्वसमानाधिकरणदुःखप्रागभावाऽधिकरणक्षणावृत्तिदुःखमात्रनिष्ठो दुःखत्वव्याप्यो जातिविशेषः, न च दुःखपदवैयर्थ्यम्, आत्यन्तिकनिवृत्तिरित्यस्यैव सम्यक्त्वादिति वाच्यम्। दुःख-त्वव्याप्या सा जातिरिति बोधनायैव तदुपादानादिति वदन्ति।

सर्वमुक्तिकालीनसामान्यध्वंसमादायेदानीन्तनदुःखधारास्वपि साध्यसत्त्वान्न व्यभिचारः। प्रतियोगिकोटौ स्वत्वनिवेशान्नाननुगमः। अनुगमस्तु—दुःखविशिष्टान्यप्रतियोगिकत्वम्। वैशिष्ट्यञ्च स्वतादात्म्य-स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणावृत्तित्वोभयसंबन्धेन। प्रदीपतद्ध्वंसयोः स्वसमानाधिकरणदुःखप्रागभावदुःखयोरप्रसिद्ध्या न दृष्टान्ताऽसिद्धिः।

प्रकाशकृदनुयायिनस्तु—पक्षबोधकदुःखसन्ततिपदं दुःखत्वपरम्। अत्यन्तमुच्छिद्यते-इत्यस्य स्वाश्रयप्रागभावाऽसमानकालीनध्वंसप्रतियोगिवृत्तित्वमर्थः। ध्वंसप्रतियोगिवृत्तित्वमात्रो-पादाने सिद्धसाधनं मीमांसकैरपि दुःखध्वंसस्वीकारात्। स्वाश्रयत्वानुपादाने दृष्टान्ताऽसिद्धिः, एतत्प्रदीपनाशस्य घटादिप्रागभावसमानकालीनत्वात्, न तु स एतत्प्रदीपप्रागभावसमानकालीन इति न दृष्टान्ताऽसिद्धिः। सुषुप्तिदशायां सिद्धसाधनवारणाय प्रागभावनिवेशः। प्रागभावाऽ-समानकालीनत्वं च प्रागभावानधिकरणवृत्तित्वम्। अत्र दुःखप्रागभावाधिकरणत्वं न कालिकेन, आत्मवृत्तिध्वंसमादाय सिद्धसाधनापत्तेः। दुःखप्रागभावानधिकरणकालवृत्तीत्युक्तौ सर्वमुक्त्य-सिद्धिदशायां तादृशकालस्याऽप्रसिद्ध्या साध्याप्रसिद्धेः। नापि स्वरूपसंबन्धेन, इदानीन्तन-दुःखध्वंसप्रतियोगिदुःखमादाय सिद्धसाधनापत्तेर्दुर्वारत्वात्, कालस्य तादृशविशेषणतया दुःख-

प्रागभावानधिकरणत्वात्। परन्तु कालिक-स्वरूपान्यतरसंबन्धेन तदनधिकरणत्वं बोध्यम्। पक्षधर्मताबलाच्च तादृशकालविशेषसिद्धिः। एवं तद्वृत्तित्वमपि न कालिकेन। सर्वमुक्तिकालाऽसिद्धिदशायां तादृशतद्वृत्तित्वस्याऽप्रसिद्धेः। नापि स्वरूपसंबन्धेन, कालस्य तेन संबन्धेन दुःखध्वंसानधिकरणतया बाधापत्तेः। न च गगनस्य तादृशान्यतरसंबन्धेन दुःखप्रागभावानधिकरणतया तद्वृत्तित्वमादायाऽर्थान्तरत्वमिति वाच्यम्। तादृशान्यतरसम्बन्धेन आत्मकालान्य( गगन )वृत्तित्वस्य दुःखध्वंसे बाधात्। हेतौ सन्ततित्वं च कार्यवृत्तित्वम्। वृत्तित्वादित्युक्तौ आत्मत्वे व्यभिचारः। ध्वंसत्वे व्यभिचारवारणाय वृत्तिपदं समवेतपरम्। प्रदीपसन्ततिवदित्यस्य प्रदीपद्व्यणुकवृत्तिरूपवत्, प्रदीपत्ववदिति वाऽर्थो बोध्यः। तथा च एतत्प्रदीपत्वस्याश्रयः एष प्रदीपस्तत्प्रागभावाऽसमानकालीन एतत्प्रदीपध्वंसोऽस्त्येव तस्य प्रागेवोत्पन्नत्वेनाग्रे तत्प्रागभावविरहात्। दुःखप्रागभावानधिकरणेषु प्रदीपारम्भकपरमाणुषु वर्त्तते यो ध्वंसस्तत्प्रतियोगिनि प्रदीपद्व्यणुके तयोर्वर्त्तमानत्वाद्वा।

अत्रेदं बोध्यम्—न तावद् यथाश्रुते साध्ये सिषाधयिषितमुक्तिसिद्धिः। इह सर्वमुक्तिरेवाऽनुमित्सिता। अन्यथा पार्थिवपरमाणुरूपत्वे व्यभिचारः स्यात् स चाऽनुपदमेव स्फुटीभविष्यति। सा च नोक्तानुमानात्सिध्यति, तथा हि दुःखप्रागभावासमानकालीनध्वंसप्रतियोगिवृत्तित्वं साध्यम्। तथा च प्रत्येकमुक्त्याऽर्थान्तरापत्तिः। अतस्तादृशप्रतियोगिमात्रवृत्तित्वमेव साध्यमिति स्वीकरणीयम्, तथा च सत्तायां व्यभिचारवारणाय हेतावपि मात्रपदं देयम्। साध्ये तदविवक्षायान्तु हेतावपि न तदन्तर्भावनीयम्। साध्ये मात्रानन्तर्भावे प्रदीपसन्ततिवदित्यस्य प्रदीपत्ववदित्यर्थः। तथा च दुःखत्वं दुःखप्रागभावानधिकरणवृत्तिध्वंसप्रतियोगिमात्रवृत्ति कार्यमात्रसमवेतधर्मत्वात् प्रदीपद्व्यणुकवृत्तिरूपादिवदित्यनुमानं फलितम्। अत्र दुःखत्वं धर्मवन्नवेत्याकारिका विप्रतिपत्तिर्बोध्या। धर्मवत्ता च स्ववातादात्म्यस्वविशिष्टध्वंसप्रतियोगिमात्रवृत्तित्वोभयसम्बन्धेन। वैशिष्ट्यञ्च स्वाश्रयसमानकालीनत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति। न च पार्थिवपरमाणुरूपत्वे व्यभिचारः, तत्रैकरूपध्वंसस्यापररूपप्रागभावसमानकालीनत्वात्, रूपधाराया अविच्छेदात्। एवमात्मवह्निसंयोगत्वेऽपि व्यभिचारः, वह्न्यात्मनोरुभयोरेव कालिकस्वरूपान्यतरसम्बन्धेन दुःखप्रागभावाधिकरणतया तद्वृत्तिसंयोगत्वादौ मात्रगर्भसाध्यविरहात्।

एतेन स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणवृत्ति यद्यत्तदन्यदुःखप्रतियोगिकध्वंसप्रतियोगित्वस्य साध्यत्वपक्षे न पार्थिवपरमाणुरूपे व्यभिचारः, रूपतद्ध्वंसयोः स्वसमानाधिकरणदुःखप्रागभावदुःखयोरप्रसिद्ध्या पार्थिवपरमाणुरूपस्य स्वपदाऽग्राह्यतया तत्र साध्यस्यापि सत्त्वादिति निरस्तम्। वह्न्यात्म[1]संयोगस्य स्वपदग्राह्यतया तत्र साध्यविरहादिति वाच्यम्।

१. दुःखप्रागभावे स्वसामानाधिकरण्यलाभायात्मपदम्।

उक्तानुमानात्सर्वमुक्तिसिद्धौ तत्रापि धाराविच्छेदेन तस्य पक्षसमत्वान्न व्यभिचार इत्याहु-रित्यन्यत्र विस्तरः।

एवं दुःखध्वंसस्याऽत्यन्तिकत्वे "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इत्यादिश्रुतिरपि प्रमाणम्। तस्मादात्यन्तिकी दुःखनिवृत्तिर्मोक्षः तत्र च कारणीभूतमिथ्याज्ञानादिनिवृत्तिद्वारा तत्त्वज्ञानं कारणमिति सिद्धम्। अत्र प्राभाकरादिमतानि यथावसरं प्रदर्शयिष्यामीति प्रार्थयमानो विरमामीति।

नमो हिरण्यगर्भाय संसारार्णवतारिणे।
देहि मे विमलं ज्ञानं त्वद्भक्तोऽहं जगत्पते ॥

---

# विश्वविद्यालयाः

लेखकः—म० म० पं० माधवशास्त्री भाण्डारी

महान् संतोषावसरो यत् काशिकराजकीयसंस्कृतमहाविद्यालयस्य सार्धशताब्दीपरिपूरण-महोत्सवनिमित्तेन शास्त्रीयोत्तानगभीरनिबन्धानां प्रकाशनं प्राच्यपाश्चात्यवैदुषीभूषितैर्निर्दिष्ट-महाविद्यालयाऽध्यक्षमहोदयैः डॉ० श्री मङ्गलदेवशास्त्रिमहाभागैः संयुक्तप्रान्तीयशासकमहोदयाऽनुज्ञया चिकीर्षितमिति। तत्प्रसङ्गेन मयापि तत्रैव महाविद्यालये सुसंपादितफलेग्रहिशास्त्र-विद्यत्वादन्तरङ्गभावं भजमानेन कश्चिन्निबन्धः प्रेषणीय इति तदनुरोधभरप्रोत्साहितोऽहं प्रकृतोपयोगित्वाद् 'विश्वविद्यालय' इति विषयमवलम्ब्य किंचिदिव लेखनीं व्यापारयामि।

## विश्वविद्यालयाः

सांप्रतं हि भारते वर्षे अन्येषु पाश्चात्यादिदेशेषु च विश्वविद्यालयानां संस्थापनं, संचालनं, तेन च तत्तत्प्रान्तीयजनताया अज्ञानान्धकारदूरीकरणं, सामाजिकपारस्परिकसंबन्ध-संबोधनं, देशदेशान्तरीयान्तरङ्गबहिरङ्गादिव्यवहारप्रत्यायनं, नानाविधभूतविद्या-यन्त्रविद्यादि-सूक्ष्मातिसूक्ष्मविषयकपारस्परिकविचारविनिमयसंवर्धनं, नूतननूतनानाम्, आविर्भूततिरोभूतानां वा प्राचीनविषयाणां गवेषणम्, इत्यादयो विषयाः प्रचलिता दृश्यन्ते। परन्तु तत्र तत्र पाठ्यमानानां विषयाणां तत्तद्विषये सर्वान्तिमपरीक्षासु समुत्तीर्णानां छात्राणां परिणते ज्ञाने समालोच्यमाने, तज्ज्ञानं केवलं जडपर्यवसायि भवति, जडवाद एव च तेन प्रस्थाप्यते, चैतन्यवादः सर्वथा तिरस्क्रियते। जडचैतन्ययोः सर्वथा संबन्धाभावं समर्थ्य लौकिक-विरोध एवोत्थाप्यते। तथा सति एवंभूतं ज्ञानं विद्यापदवाच्यतां कथं प्राप्तुमर्हेत्। एवं भूतस्य विरोधोत्पादकज्ञानस्य जडचेतनसमन्वयविघातकस्य विद्यात्वाङ्गीकारे अविद्या नाम काव-शिष्यात्, अविद्याविवेकाभावे च कथं नाम विद्यापरिशुद्धिर्लब्धुमिष्टा स्यात्। तस्मात्प्रकृते विद्यास्वरूपं किंचिदिव विवेच्यते।

## विद्या

"द्वे विद्ये वेदितव्ये इति ह स्माहुर्यद् ब्रह्मविदो वदन्ति, परा चैवाऽपरा च, तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति। अथ परा यया तदक्षरमधिगम्यते" (मुण्ड० उ०) इत्यादि। अत्र पराऽपरविद्ययोः परापरशब्दाभ्यां समुल्लेखा-देव परस्परं पूर्वापरीभावः, समन्वयः, उपकार्योपकारकभावः, अविरोधश्चेत्यादिकं बोधितं भवति।

पूर्वोक्ता विश्वविद्यालयेषु पाठ्यमाना भूतविद्या-यन्त्रादिविद्याप्रभृतयो वस्तुतो मुण्डकोक्ता-परविद्यास्वेवाऽन्तर्भवन्ति । अत एव छान्दोग्ये सप्तमाध्याये सनत्कुमारनारदसंवादे नारदेनोक्तम् "ऋग्वेदं भगवोऽध्येमि यजुर्वेद ँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं, वेदानां वेदं (व्याकरणं), पित्र्यं, राशिं, दैवं, निधिं, वाकोवाक्यम्, एकायनं (नीतिशास्त्रं), देवविद्यां (निरुक्तं), ब्रह्मविद्यां (शिक्षाकल्पच्छन्दांसि), भूतविद्यां (भौतिकशास्त्रम्), क्षत्रविद्यां, नक्षत्रविद्यां, सर्प-देवजनविद्यां (गारुडं, गान्धिकनृत्यगीतशिल्पादिज्ञानानि) एतद्भगवोऽध्येमि" इत्यादिना सर्वस्याप्याधुनिकवास्तुशिल्प-यन्त्रशिल्प-भौतिकविद्यादीनामपरविद्यास्वेवाऽन्तर्भाव उल्लिखितः । अस्य सर्वस्य च परविद्यया सम्बन्धमपरिहार्यं मन्वान एव नारदः एतदग्रिमं प्राप्तव्यमनुष्ठातव्यं ज्ञातव्यं च प्रष्टुकामः सर्वमिदं प्रश्नोत्तरपुरस्सरमुपन्यास्थत् ।

श्रीमद्भगवद्गीतास्वपि सप्तमाध्याये—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

इत्यादिना विज्ञानशब्देन परा[1]-प्रकृतेः अपरा-प्रकृतेश्च विषयमुपन्यस्तवान् तत्रभवान् श्रीकृष्णचन्द्रः । अपराप्रकृतौ च—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयम्, इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

इत्यादिना सर्वस्यापि पञ्चविधभूतभौतिकविज्ञानस्य, सर्वस्याऽपि महत्तत्त्वाऽहंकाराऽऽहंकारिकाद्याधिदैविकविज्ञानस्य चाऽन्तर्भावं मन्यते । तज्ज्ञानद्वारा पराप्रकृतिज्ञानं, तद्द्वारा च परमात्मपरविद्याज्ञानं मन्यते । इति पराऽपरविद्ययोः समन्वयमविरोधं च दर्शयन् भगवान् भूतभौतिकादिविज्ञानस्य परमात्मविद्यया सहाऽविरोधित्वे, समन्वयपर्यवसायित्वे, द्वारभूतत्वे एव च विद्यात्वमङ्गीकरोति, आधुनिकविश्वविद्यालयरीत्या परविद्यया सह भूतादिविद्यायाः समन्वयराहित्ये, विरोधित्वे, अद्वारभूतत्वे च भूतभौतिकादिविज्ञानस्य विद्यापदवाच्यत्वमेव न भवेत्, किन्तु अविद्या-पदवाच्यत्वमेव । किं च भगवद्गीतासु सप्तमाध्यायान्ते पूर्वोक्तपरापरप्रकृतिविज्ञानोपसंहारे—

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इत्यादिना अधिभूत-अधिदैव-अधियज्ञरूपेणाऽपरप्रकृतेर्ज्ञानं परमात्मज्ञानेऽवश्यं सहायत्वेन परिणमयितव्यमित्युक्तम् । अधियज्ञशब्देन चोपाधिभूतानां भूतभौतिकानामाधिदैविकेन सह

---

१ टि० अत्र पराविषेत्यादौ समस्तत्वेऽपि शाब्दीभावनेत्यादाविव रूढत्वात्पुंवद्भावो न कृतः ।

सम्बन्धः। आधिदैविकस्य च पराप्रकृतिरूपचैतन्येन सह यः संबन्धः स सर्वोऽप्युच्यते। अतः अधियज्ञज्ञानमधिभूतादिज्ञानवदावश्यकम्। तदैव च भूतादिविज्ञानस्य विद्यात्वसम्पत्तिरिति।

अत्र चाऽपराविद्यायाः पराविद्यायाश्च संनिपत्योपकारकत्वेनाऽऽराद्‌उपकारकत्वेन अन्यविधया वा परस्परमुपकार्योपकारकभाव इति तु विषयान्तरत्वान्न प्रकृते विचारमर्हति।

'सर्वापेक्षा च यज्ञादिश्रुतेः' (ब्र० सू०) इत्यादिन्यायेन येन केनाऽपि रूपेण सापेक्षता केवलं परस्परं समर्थ्यते। येन परविद्यासंबन्धाद् भौतिकादिज्ञानेऽपि विद्यापदवाच्यत्वं सिध्येत्। 'सा विद्या तन्मतिर्यया' इत्यादिश्रीमद्भागवतादिवचनान्यपीममेवार्थं परिपोषयन्ति। एवंरीत्या परविद्यासंबन्धित्वाऽभावे तु भौतिकादिविज्ञानस्य विद्यापदवाच्यत्वं न सिध्येत्, किं तु अविद्यापदवाच्यत्वमिति साधिते सांप्रतिकविश्वविद्यालयानां 'विद्याऽऽलय'पदवाच्यत्वे एवाऽद्यापि संदेहः, सुतरां विश्वविद्यालयपदप्रतिपाद्यत्वे।

## उपसंहारः

अस्मद्भाग्यवशेन वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्तु प्रदर्शितरीत्या अपरा-पराविद्ययोः समन्वयं संवर्धयन् विरोधं च प्रविलापयन् स्वस्मिन् पाठ्यमानविषयविज्ञाने विद्यात्वं संपादयति। तत्र पठितवतां च विद्वत्पदसंकेत्यतां समर्थयते। स्वस्मिंश्च महाविद्यालयपदवाच्यत्वगौरवं याथार्थ्येनाऽऽवहति।

यद्यपि सार्धशतसंवत्सरेभ्यः प्रवृत्तस्याऽप्यस्य विश्वासां विद्यानां विषयेऽद्यापि प्रवृत्तिशालिता न दृश्यते, किंबहुना—

'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम्'॥

इति कुसुमाञ्जलिकारवचनाऽनुसारेण प्रातिस्विकविषयेषु ह्रासशालितेव प्रतीयते, तथापि अपरेषामविद्यालयानामपेक्षयाऽनेन स्वीयं विद्यालयत्वं यथावत्परिपालितम्, उत्तरोत्तरं विश्वासां विद्यानामालयत्वं च भजिष्यते। सर्वाङ्गपरिपूर्णता, सर्वविषयसमन्वयिता, सर्वाऽविरोधिता च विद्याद्वाराऽनेनैतत्संचालकैश्च जगति विख्यापयिष्यते, उन्नतिशिखरारूढता च आगमस्वाध्याय-प्रवचन-व्यवहारादिभिः सर्वेषामनेन संपादयिष्यते इति श्रीमन्तं भगवन्तमुमारमणं प्रार्थयमानो विरमति प्रकृतनिबन्धात्।

———

# महाकविबिल्हणप्रणीतं विक्रमाङ्कदेवचरितं
# नाम महाकाव्यम्

लेखक :—साधोलाल स्कालर पं० मुरारीलाल शास्त्री नागरः

अद्यावधि समुपलब्धेषु चरितपद्यकाव्येषु विक्रमाङ्कदेवचरितमेव सर्वोत्तममस्तीति निर्विवादोऽर्थः। चालुक्यविक्रमाल्लब्धविद्यापतिपदः काश्मीरजन्मा बिल्हणकविः प्रायः १०८५ ई० समये स्वाश्रयदातृप्रशंसायां निबबन्ध चरितमेतत्। चरितनायकः सम्राट् विक्रमादित्यः १०७६ ई० तः ११२७ ई० वर्षं यावत् दक्षिणे चालुक्यराजसिंहासनमलञ्चकार।

अनुपलब्धेऽपि विक्रमाङ्कदेवचरिते, चिरादेव गीयते सादरं बिल्हणो महाकविरिति। एतत्प्रणीतं चौरपञ्चाशिका-कर्णसुन्दरी-नामधेयमपरमपि ग्रन्थद्वयमुपलभ्यते। दृश्यन्ते च सुभाषितग्रन्थेष्वस्य परःशतानि सरसानि पद्यानि। अद्वितीयां प्रतिभां, लोकोत्तरां रचनाचातुरीम्, अद्भुतञ्च कल्पनापाटवं पुरस्कुर्वन्त्योऽस्य रचनाः सहृदयहृदयेषु अननुभूतपूर्वं प्रभावमुत्पादयन्ति।

अनङ्गीकृतदोषमङ्गीकृतवीररसं सकलरसान्तरसमन्वितं विविधालङ्कारगुणोपेतं वैदर्भीरचनाऽञ्चितं विरचय्य काव्यमिदं कविरात्मानं स्वाश्रयदातारं विक्रमाङ्कञ्चामरीचकार। आद्यसप्तदशसर्गेषु विक्रमाङ्कचरितं विनिबध्य, अन्तिमेऽष्टादशे कश्मीरदेशं तन्नृपतींश्च वर्णयन्, अन्ते स्वीयं चरितं सचमत्कारं जग्रन्थ महाकविः।

वाराणसेयराजकीयसंस्कृतमहाविद्यालयीयसाहित्याचार्यपरीक्षायां काव्यमिदं पाठ्यत्वेन स्वीकृत्य, स्वं विवेकं गुणैकपक्षपातित्वञ्च प्रदर्शयन्तस्तदधिकारिणोऽर्हन्ति शतशः साधुवादान्। रमणीयानामपि कालवशादन्धकारे विलीनानां प्राचीनग्रन्थानां परीक्षासु पाठ्यत्वेनावधारणं तदुद्धरणपुरःसरं प्राचीनग्रन्थकाराणां विख्यातिं विविधरचनापरिचयमितिहासादिज्ञानञ्च जनयत् संस्कृतभाषां समृद्धतरीकरोतीति न कस्याभिमतम्।

ई० १८७४ वर्षे, संस्कृतप्राचीनग्रन्थान्वेषणाय राजपुतानाप्रदेशं परिभ्रमन् डा० व्युह्लरमहोदयः जैसलमीरजैनभाण्डारे तालपत्राङ्कितं चरितमिदमवाप। दृष्ट्वा च तत् स तथा तत्प्रभावप्रभावितोऽभूद्यथाऽसत्यपि समये डा० याकोबीमात्रसहायः स्वयमेव सप्तदिनाभ्यन्तरे तत्प्रतिलिपिञ्चकार। मुद्रापयामास च तदग्रिमे वर्षे मुम्बापुरीसंस्कृतग्रन्थमालायामिदं चरितम्।

भारतीयसंस्कृतेः संस्कृतभाषायाश्चाभ्युत्थाने डा० ब्युह्लरमहोदयानां परमः प्रयासः सर्ववन्द्यतां प्रयाति। मुद्रितपुस्तकप्रस्तावनायाञ्च तैः काव्यस्य समस्तान् विषयान् साधु पर्यालोच्य तथोपलब्धसाधनैस्तदितिहासञ्च सम्यग् विविच्य, तेषां विस्तृतप्रतिपादनपूर्वकं नैकानि नवीनान्यद्भुतानि स्वमतानि प्रकाशमानिन्यिरे। बहुत्रोद्धृता तेषामियं प्रस्तावनाऽगाधं पाण्डित्यं स्पष्टमेव परिचाययति।

काव्येऽस्मिन् वर्तमानं साहित्येतिहासयोस्तथाविधं विचित्रं संमिश्रणं समालोचकचित्तेषु विस्मयमानन्दञ्च भृशं जनयति। प्रसादमयमपि काव्यं परिपूर्णेतिहासज्ञानसमवेतसाहित्यशास्त्रपारगस्यैव बोधविषयो भवितुं शक्नोति। डा० ब्युह्लरज्ञानराशौ च साहित्यांशापेक्षया ऐतिहासिकोंऽशः परमधिकः समभूत्। ततश्च बहुगुणयुक्तमपि तेषां संस्करणं नाभवन्निर्दोषम्।

डा० फ्लीट-भाण्डारकर-ओझा-ऐयङ्गर-प्रभृतिभिर्विद्वद्भिः नवोपलब्धसाधनसमन्वितस्वप्रतिभासाहाय्येन काले काले कृताभिः बहुलगवेषणाभिः चालुक्यानां विक्रमाङ्कस्य बिल्हणस्य च विषये परःशतानि वस्तूनि प्रकाशपथमानीय नवो युग एवाविर्भावितोऽस्ति। एवञ्च डा० ब्युह्लरप्रतिपादिते इतिहासे तद्विषयकमतान्तरेषु च बहवो विचारा अद्य मिथ्यात्वेन स्थिरीभवन्ति।

चालुक्यविषयिणीषु बह्वीषु जातास्वपि विवेचनासु काव्यं पुनः कोऽपि न पर्यालोचयत्। एवञ्च तैः काव्यं पर्यालोच्य प्रकाशितानि बहूनि मतानि अद्य वितथीभूतान्यपि इतिहासकारैस्तथैव वेदवाक्यानीव निःशङ्कमुद्ध्रियन्ते प्रतिपाद्यन्ते च। स्वविचारपद्धतिप्रभावितैस्तैर्बहूनि तादृशानि मतानि प्रतिपादितानि यानि सहृदयानां भवन्त्यसह्यानि। काव्यस्य मूलरूपन्तु तदाऽपि भृशमशुद्धमासीत्।

जैसलमीरपुस्तकं नितान्तं शुद्धं संशोधितञ्चासीत्, तस्य च लेखनं रक्षणं बाह्यं च रूपं तथा रमणीयमासीद्यथाऽवलोकितं तत् चिरो विस्मयमेवोदपादयत्। किञ्च तत् बिल्हणकवेर्जीवनस्य द्विशतवर्षाभ्यन्तर एव लिखितमासीदिति सविशेषः पाठभेदोऽप्यसम्भव आसीदिति ब्युह्लरमहोदयैः प्रत्यपादि। तेषामिदं मतं सत्यं मिथ्या वेति पुस्तकावलोकनमन्तरा निश्चेतुमशक्यम्। परं तैर्याकोबीमहोदयसाहाय्येन कृता प्रतिलिपिरस्माभिरधिगता साधु अवलोकिता च। यदीयं मूलपुस्तकस्य सर्वथाऽविकला प्रतिलिपिरभ्युपगम्यते तदा तदेव बाढमशुद्धमासीदिति मन्यामहे।

डा० ब्युह्लरमहोदयाः प्रायशः चतुःशतस्थानेषु स्वसंस्करणे प्रतिलिपेः पाठादिपरिवर्तनानि विधाय तानि टिप्पण्यामुदलिखन्। इयदवधि अशुद्धिवर्द्धकाः सन्ति हेतवो बहवः। जैसलमीरपुस्तकस्याप्याधारपुस्तकं कियच्छुद्धमासीदिति ज्ञानमद्यासम्भवि। परं लेखकप्रमादात्तत्र बह्व्योऽशुद्धयः संजाताः स्युरिति नास्त्यविश्वासयोग्यम्। डा० ब्युह्लरमहोदयानां प्रतिलिपीकृत्यवसरे पुनः कियदशुद्धिसृष्टिरभवदित्यपि निर्णेतुं दुःशकम्। किञ्च तत्पुस्तकस्य प्राचीनजैनदेवनागरीलिपिर्नासीत्सुवाच्या। केचन वर्णास्तथा समाना आसन् यथाऽभ्यासशालिनामपि बहुभ्रमः स्यात्। बहुषु स्थानेषु जीर्णत्वेन घर्षणादिना च अक्षराण्यस्पष्टान्यासन्। डा०

ब्युह्लरप्रतिलिप्यां नैकेषु स्थलेषु सन्ति रिक्तस्थानानि। अत्र मूलपुस्तकस्य दोषस्तेषां वेति को नाम निर्णयेत्।

डा० ब्युह्लरमहोदयाः बहुत्र पाठानां युक्तं संशोधनादिकं कुर्वन्तोऽपि, शतशो नवीना अशुद्धीरसृजन्। क्वचन पुनरस्पष्टस्थलेषु साम्येन निकटस्थान् परित्यज्य पाठान्, दूरस्थानयुक्तान् पाठान् कल्पयाञ्चक्रिरे। अन्यत्र पुनः सङ्गतानपि पाठान् असङ्गतानिति मत्वा स्वकल्पितानयुक्तान् पाठान् मूलेऽस्थापयन्। क्वापि च रिक्तस्थानेषु साधु पाठान् पूरयन्तोऽपि बहुत्रासाधून् पाठान् मनसाऽघटयन्। तैः कृतं केषाञ्चन स्फुटपद्यानामनुवादं विवेचनञ्चावलोक्य नासम्भवं प्रतिभाति सर्वमिदम्। एवञ्च ग्रन्थे नवीना एव बह्व्योऽशुद्धयः समाविशन्नित्युपलभ्यते।

दोषाणामतिरेकस्यास्तीदं हेत्वन्तरं यन्मुद्रणालयार्थं प्रतिलिपिविधाने तत्कर्ता स्वबुद्धि-वैभवेन नूतनाननेकान् दोषान् समुदपादयत्। डा० ब्युह्लर-याकोबीमहोदयविहिता प्रतिलिपिरनभ्य-स्तलेखनशैल्याः प्रचुरं भ्रमञ्जनयतीति ततोऽप्यन्यप्रतिलिपिविधानकालेऽनुत्तरदायित्वपूर्णेन तत्का-र्येण दोषाणां परिवर्द्धनमस्वाभाविकं नासीत्। प्रतिलिपिश्च वामनाचार्यझलकीकरमहोदयै-रकारीत्यवगम्यते परं न तद्विश्वासास्पदत्वं प्रयाति। जैसलमीरपुस्तकप्रतिलिप्यामुपलभ्यतेऽभिन्नशै-लीमयं युक्तसंख्याङ्कितं साधुतरं पद्यद्वयं यत्क्वचनापि नोपलभ्यते मुद्रितपुस्तके। पर्याप्तं स्यादिद-मेकमेवोदाहरणम्। परमार्थतो हि डा० ब्युह्लरमहोदयैः कार्यान्तरव्यग्रतयाऽन्यविश्वासावलम्बेन वा प्रकाशनादि कार्यमन्येषां शिरसि निहितमिति जाता ह्येवंविधा दुर्गतिः।

जैसलमीरप्रतिलिप्या साकमेव पुण्यपत्तनसमुपलब्धात् पुस्तकान्तरादिदमुपरि प्रतिपादितं सकलं मुद्रितपुस्तकाशुद्धिबाहुल्यं प्रमाणीभवति। एवंविधमपि प्रथमसंस्करणं क्रमशो-ऽप्राप्यमभूदिति १९२७ ई० वर्षे काशिकज्ञानमण्डलतः काव्यमिदं पुनः प्राकाश्यत। द्वितीय-ञ्चेदं संस्करणं म० म० स्व० पं० रामावतारशर्मणां संस्कर्तृत्वेन प्रकाशितमपि दोषेषु प्रथम-संस्करणमतिशेते। किन्त्वत्र तेषां सविशेषः सहयोगो नासीदिति संस्करणपर्यालोचना प्रमाणी-करोति। प्रथमसंस्करणस्था अशुद्धयोऽत्र शोधिता इति तद्भूमिकायामुपलभ्यते। सत्यमेव क्वचन सन्ति पाठाः शोधिताः परमधिकांशस्थलेषु नवीनाशुद्धिपरम्परासृष्टिरेव दृष्टिपथं प्रयाति। एतत्संस्कर्त्रा प्रथमसंस्करणशुद्धिपत्रमपि न व्यलोकि। तत्र वर्तमानाऽशुद्धीनां द्विशतात्मिका संख्याऽत्र द्वितीये संस्करणे नितान्तं वर्द्धमाना शतचतुष्टयादप्युपरि गच्छति। एतत्प्रकाशनादिकं तथा विशृङ्खलमस्ति यथा तदवलोक्य चिरं चेखिद्यते चेतः।

प्रथमसंस्करणे वर्तमाना ग्रन्थजीवितायमाना प्रस्तावनाऽप्यत्र तथा तानवं गता यथा शतां-शोऽप्यत्र नावशिष्टः। ततश्च संस्करणमिदं निश्चेतनमिव प्रतिभाति। याऽप्यस्ति सार्द्धपत्रात्मिका साऽपि बहुलाशुद्धिमयीति वस्तुविप्लवमेव जनयति। संस्कर्त्रा डा० ब्युह्लरविहितानि स्वविहितानि वा कान्यपि पाठपरिवर्तनानि नोल्लिखितानि।

इदं हि काव्यं प्राचीनमितिहाससापेक्षं टीकारहितं नितान्तमशुद्धिबहुलमित्यद्य तत्तत्त्वस्य ज्ञानं ज्ञापनं वाऽसम्भवकोटावारोहति। ग्रन्थे वर्तमाना दोषाः आपाततः कविजन्यत्वेन विरसीकुर्वन्ति सहृदयहृदयानि। पूर्वोक्तसकलसामग्रीमन्तरा काव्येऽशुद्धीनां क्रमिकं विकासं सम्पादकानां बुद्धिवैभवञ्च ज्ञातुं सर्वज्ञ एवालम्। किन्तु, कविरचनापरिचितः सहृदयः अशुद्धिबहुलमर्थं पाठञ्च संदिहानः, अन्विष्यन्नपि साध्वर्थे विफलप्रयासः, चिरं दोदूयमानमानसस्तिष्ठति। अनन्तरञ्च स्वप्रतिभयाऽन्येन वा साधनेन कथञ्चिदधिगतयोग्यार्थः परमानन्दं लभते।

काव्यमिदं यत्प्रयोजनमुद्दिश्य परीक्षासु निवेशितं न तत् सिद्ध्यति, काव्ये चेद्दशावस्थे एव सति न कदाऽपि तत् सेत्स्यतीति निर्विवादोऽर्थः। एवंविधबहुगुणसमन्वितमपि काव्यं तथा निरादरविषयीभवति यदवलोक्य सत्यमेव दन्दह्यते चेतः। यथार्थमाह स हि बाणभट्टः—"अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति"।

काव्यस्य वस्तुतः उद्धाराय अस्य विशुद्धं व्याख्योपेतं सविवेचनं सविस्तरमेकं संस्करणं प्रकाशितं स्यादिति सर्वथाऽऽवश्यकमस्ति। तत्र चैतेऽधोनिर्दिष्टाः स्युर्विशेषाः—

(१) सर्वतः प्रथममस्य साधु शोधनमपेक्ष्यते, यदर्थं नास्ति जैनभाण्डारमन्तरा किमपि शरणम्। तत्र गत्वा तत्रस्थानां प्राचीनपुस्तकानां पर्यालोचनमस्ति सर्वथाऽऽवश्यकम्। (२) रसालङ्कारगुणदोषादिविवेचनमयी साहित्यमार्गानुयायिनी विस्तृता व्याख्या समालोचना च स्यात्। (३) अद्य यावदुपलब्धैः साधनैः सकलैः चालुक्यानां विक्रमाङ्कस्य बिल्हणकवेश्च विषयिणः सकलस्येतिहासस्य संक्षिप्तः सारांशोऽपि संनिविष्टः स्यात्। (४) इतिहासज्ञानं भूगोलज्ञानसापेक्षमस्तीति काव्यसम्बद्धभूगोलवर्णनस्य संक्षिप्तसारांशेन साकं, काश्मीर-दक्षिणदेश-भारतवर्षाणां पृथक् मानचित्रत्रयं स्यात्। किञ्चान्यान्यपि उपयुक्तानि वस्तूनि यथास्थानं स्युर्योजितानि।

इदमस्मत्प्रस्तावितं भावि संस्करणं यथासम्भवमत्यधिकमुत्तमं परमोपयुक्तञ्च स्यादित्यस्माकं प्रबलो मनोरथः। उपरि प्रतिपादितैः सकलैः साधनैः सपरिश्रमं शोधितेऽप्यस्मिन् सन्ति बहूनि स्थलानि येष्वामूलं परिवर्तनमपेक्ष्यते। किञ्चेतिहासादिसम्बन्धेऽपि स्युरनेकेऽज्ञाता विषयाः येषु संशोधनं परिवर्तनं परिवर्द्धनं वाऽपेक्षितं स्यात्। अद्य यावदुपलब्धैः सकलैः साधनैः भाविसंस्करणस्य सर्वोत्तमतायै प्रयतितमस्माभिः प्रयतिष्यते च। किन्त्वत्र विदुषामन्येषां साहाय्यमपेक्ष्यते नूनम्।

कृतप्रयत्नैरप्यस्माभिरद्य यावदस्य काव्यस्य प्रतिलिपीनां केवलं जैसलमीरनगरे पाटणनगरे च ज्ञायतेऽस्तित्वम्। अपि सन्ति क्वचनापरा अपि प्रतिलिपयः? अस्मिन्काव्ये कापि व्याख्या न ज्ञायतेऽस्माभिः। किन्तु, कैश्चन विद्वद्वरैरस्मिन् काव्ये परिशोधनं व्याख्यानं विवेचनं वा कृतं दृष्टं श्रुतं वा स्यान्नवेति न जानीमहे। इतिहासादिसम्बन्धेऽपि ऐतिहासिकैरन्यैर्वा विद्वद्भिः

एतत्काव्यसम्बद्धाः केऽपि विषयाः अध्ययनस्य मननस्य वा अपि विषयीकृता न वा ? जिज्ञासामहे वयमिदं सकलम्। इदमेव लक्ष्यीकृत्यास्माभिः सर्वेऽपि संस्कृतसेवानुरागिणः तदुन्नत्यभिलाषिणश्च विद्वांसोऽभ्यर्थ्यन्ते सादरं साग्रहं सविनयञ्च यत्तैरस्माकं भाविसंस्करणस्य सर्वोच्चमतासंपादनाय सर्वमपि साहाय्यं संमतिदानं पथप्रदर्शनं सदयं विधेयमिति।

——

# काशि-विलासः

## वाराणसेय-राजकीयसंस्कृतपाठशालावर्णनाष्टकम्

लेखकः—श्रीमन्मध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्य-
दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामि-दामोदरशास्त्री

( १ )

काश्यात्मा मधुरा समानगतिभिर्या चास्त्ययोध्या किल
प्रौढिम्नोज्जयिनी सुवर्णलसिता न स्यात् किमु द्वारका ।
माया कामकलापकोटिकलनात् काञ्ची कथं नो भवेद्
राज्ञोऽध्यापनशालिकाऽखिलपुरीरूपा नु किं काशिकी ॥

( २ )

श्रद्धापूर्वंच्छटाभी रचयति कुतुकं नित्यमौत्सुक्यभाजां
नानाभेदैर्विधानैः कलयति पुरुषं स्वस्वकर्तव्यवृन्दे ।
तन्त्रैरूहैः प्रसङ्गैः समुचितकरणैः संपिपर्त्तीप्सितव्यं
मीमांसैषाऽङ्गना वा विलसति भुवने पाठशाला सुराज्ञः ॥

( ३ )

संदेहं तर्कवादैर्विघटयति सदा निर्णयोदर्करम्यै-
रौच्छृङ्खल्यं निरस्यत्यपि च समुदितैर्निग्रहैर्भावगर्भैः ।
पक्षे हेतुं विधत्ते परिहरति विपक्षानुगां रीतिमारा-
दुक्ताऽसौ पाठशाला जनयति हृदये नीतिमान्वीक्षिकीयाम् ॥

( ४ )

बुद्ध्याऽहङ्कारमात्रं नयति परिभवं शास्त्रतत्त्वैकजन्या
मोहोच्छेदं विधत्ते गुणगणविभवैः सर्वथैवाविवादम् ।
ख्यातीरुत्पाद्य शर्मोन्नतिमुपनयते सम्मुखायातमद्धा
लोकेऽसौ पाठशालाऽऽह्वयत इव मदात् कापिलीं प्रक्रियां नु ॥

( ५ )

क्वचिद् द्वैतं ब्रूते भणति परथा कुत्रचिदहो !
विशिष्टाद्वैतादि क्वचन वलयत्यन्यथयति ।
त्वणाद् भङ्गं वक्ति प्रवदति च नैकान्तसरणिं
ध्रुवं शालाऽस्त्येषा निगम इव नानापथजुषा ॥

( ६ )

द्वित्वं तु क्वापि धत्ते शिथिलयति च संधित्सुभावं प्रगृह्ये—
ष्वादेशं वाऽनुबन्धं घटयति फलदृक् सर्वलोपं तनोति ।
क्वापि व्यासं समासं समुचितविषये विग्रहं तद्धितं वा
राजाऽऽहो शब्दशास्त्रं स्थिरति न हि मतिः पाठशालेति नृणाम् ॥

( ७ )

कक्षाभागानुसाराद् ग्रहगतिवशतोऽभिन्नतां भिन्नतां वा
व्यक्ताव्यक्तत्वरीतिं प्रकृतिनियमगां सर्वतो लोचयित्वा ।
मत्वा तच्छ्लेषभागं भजनगुणफलं राति वा लाति सम्यग्
ज्योतिःशास्त्रोपमाना जगति विजयते भूपतेः पाठशाला ॥

( ८ )

संवादिनं भजति चोज्झति तद्विरुद्धं
न्यासं समाश्रयति चान्यमवस्तृणाति ।
शब्दश्रुतिं च विविनक्ति समादरेण
नादागमेन सदृशी खलु पाठशाला ॥

—-—

## काशिकराजकीयसंस्कृतमहाविद्यालयः

लेखकः—पं० नारायणशास्त्री खिस्ते

प्रालेयाचलवत् समुन्नतशिरा, गर्जन्महाध्यापक-
श्रेणीसन्तुलितप्रबुद्धनिनदत्कण्ठीरवोपक्रमः।
श्रीमद्भारतभारतीगुरुगणैः सानन्दमाराधितः
सम्राट्स्थापितकाशिकासुरगवीविद्यालयो द्योतताम् ॥१॥

श्रीमद्विष्णुपदप्रसारितशिरा दोधूयमानः शनै-
रुद्यानोत्थितपुष्परागमसृणैर्वातैः स्वभृत्यैरिव।
अज्ञानान्तकराध्वराहितजयस्तम्भायमानो ध्वजो
यन्मूर्ध्नि प्रविराजते स सुरगीर्विद्यालयो द्योतताम् ॥२॥

यस्योच्चैःशिखराणि कारुरचनाकौशल्यसाक्षीण्यहो
नीडान्तःस्थितमञ्जुमञ्जुविरुवत्पारावतानि क्षणम्।
विश्रामस्थलतां व्रजन्ति बहुधा वैमानिकानां चिरं
श्रान्तानां, स समेधतां सुरगवीसाम्राज्यविद्यालयः ॥३॥

मुख्यद्वारपुरःस्थितस्य मसृणग्रावोपबद्धाकृते—
र्धारायन्त्रवरस्य शीतलजलक्षोदान् मुहुर्वर्षतः।
व्याजात्तापहरस्तु पश्चिमदिशाधीशः प्रचेताः स्वयं
भक्त्या सेवत एव यं स सुरगीर्विद्यालयो द्योतताम् ॥४॥

रन्ध्रेष्विन्दुशरत्प्रपूर्तिमहितो वृद्धोऽपि सन्नाहवान्
सिद्धो यस्तरुणायते प्रतिदिनं प्रोद्यन्महाः सन्महैः।
श्रीमन्मङ्गलदेवशास्त्रिभिरिहाध्यक्षैः परं भूषितः
साम्राज्यश्रियमातनोतु विपुलां विद्यालयोऽयं चिरम् ॥५॥

उन्नतिपदसोपानं ज्ञानगवीदुग्धपूर्णमापीनम् ।
अधिकाशि जयतितमां प्राच्यं सारस्वतं धाम ॥६॥
विबुधप्रीणननिरता रसार्पणैर्भुवनदर्शनप्रयता ।
राजाश्रयाभिवृद्धिर्दीव्यतु सारस्वती सुषमा ॥७॥

—

# सारस्वती सुषमा

लेखकः—पं० नारायण शास्त्री खिस्ते

चतुर्मुख-मुखाम्भोज-शृङ्गाटक-विहारिणी । प्रगल्भा बुधजिह्वाग्रनर्तकी वाग्विजृम्भताम् ॥ १ ॥

सत्यधाम्नि परे व्योम्नि ब्रह्माणमभि सुस्थिता । महामुनिसभा नूनं वाग्देव्याः सुषमाऽऽदिमा ॥ २ ॥

वटवृत्ततटस्पष्टदक्षिणामूर्तिरूपिणी । मौनमुद्रावती वाचः सुषमा काऽप्यलौकिकी ॥ ३ ॥

स्वर्गधाम्नि सुरेन्द्रस्य सभायां गीष्पतेर्गुरोः । नृत्यन्ती रसनारङ्गे जयत्यमरभारती ॥ ४ ॥

यत्र यत्र बुधा यत्र शास्त्रचर्चा मनोहरा । तत्र तत्र सरस्वत्याः सुषमा कापि राजते ॥ ५ ॥

विक्रमादित्यनृपतेर्दोर्विक्रमजितक्षितेः । सभायां नवरत्नात्मा दीव्यति स्म सरस्वती ॥ ६ ॥

शङ्कराचार्यवपुषा वाग्विजृम्भणमद्भुतम् । लीलायितं सरस्वत्याः शारदापीठकैतवात् ॥ ७ ॥

ततः परं प्रतिप्रान्तं विद्वत्सङ्घे प्रतिष्ठिते । भारतीपीठगुर्वाज्ञा निर्बाधं विजहार ह ॥ ८ ॥

सर्वविद्याधिनाथस्य विश्वनाथस्य पूरियम् । वाराणसी सरस्वत्याः पीठमस्ति पुरातनम् ॥ ९ ॥

अत्रैव शङ्कराचार्याः कृष्णद्वैपायनाज्ञया । निर्ममुर्ब्रह्मसूत्रेषु भाष्यं विद्वद्रसायनम् ॥ १० ॥

अथ सर्वेऽपि विद्वांस आचार्या लोकविश्रुताः । सम्प्रदायप्रवृत्त्यर्थं काशीमेव समाश्रयन् ॥ ११ ॥

इयं हि विद्वद्रत्नानां शाणोल्लेखनपट्टिका । शुद्धपाण्डित्यमर्यादा—सुवर्णनिकषस्थली ॥ १२ ॥

भारते यवनाक्रान्ते श्रुतिघोषेऽपि मोषिते । स्वाहास्वधावषट्कारा अधिकाशि चकाशिरे ॥ १३ ॥

भट्टवंशपयोधीन्दुः साक्षाद् ब्रह्मेव मूर्तिमान् । भट्टनारायणः काश्यां तदात्वे प्रादुरास ह ॥ १४ ॥

प्रयोगरत्नप्रमुखान् ग्रन्थान् निर्माय नूतनान् । श्लथसन्धिः श्रौतधर्मस्तम्भो येन स्थिरीकृतः ॥ १५ ॥

ततः परं तु वंशेऽस्मिन् जज्ञिरे सप्त पूरुषाः । सरस्वत्या स्वयं येषु स्वकीया सुषमाऽऽहिता ॥ १६ ॥

इतः परं सत्यधामाधिकमा-मार्जनोज्ज्वला । विहारभूमिर्वाग्देव्याः काशिकैव व्यराजत ॥ १७ ॥

अथाङ्गलमहीपालच्छत्रच्छायामुपाश्रिता । सरस्वती प्रतिदिनं पुष्णाति स्म परां श्रियम् ॥ १८ ॥

विद्याविनोदरसिकैः प्रकृतिप्रीतिकामुकैः । महद्भी राजपुरुषैर्दूरदर्शिभिरादरात् ॥ १९ ॥

यवनोच्छिन्नमपि तत्पीठं सारस्वतं चिरम् । उदधारि पुनर्नव्यभव्याकारेण भासुरम् ॥ २० ॥

सम्राट्स्थापितकाशिकासुरगवीविद्यालयोऽयं ततः
सम्प्राप्तामितगौरवो गुरुनिभैर्विद्वद्भिरापूरितः ।
अत्रैव व्यधितास्पदं भगवती सर्वात्मना भारती
तत्प्रीत्यै परमेष्ठिनाऽत्र विहिता सत्यस्य धाम्नः स्थितिः ॥ २१ ॥

अव्यक्तेव पुरा स्थिता भगवतः शम्भोः शरीरे विय-
द्रूपिण्यप्यनुभावदर्शनधिया या प्रादुरासीमिति ।
पश्चाद्देवमहर्षिपण्डितमुखाम्भोजान्यलङ्कुर्वती
व्यक्ताऽद्य प्रतिभावतां सुरगवी वाग्देवता द्योतताम् ॥ २२ ॥

मातः ! सरस्वति ! चतुर्मुखकण्ठकूट-
शृङ्गाटकभ्रमणदूनमनाश्चिराय ।
मन्ये निवासपरिवर्त्तनहेतुनैव
विद्वज्जनस्य रसनासु करोषि वासम् ॥ २३ ॥

प्रतिरसनं प्रतिदिवसं सञ्चीयन्ते नवानि तत्त्वानि ।
अनुभावादम्ब ! तव प्रतिभा कस्यापि कापि विस्फुरति ॥ २४ ॥

सम्राट्स्थापितकाशिकविद्यासदने सरस्वतीभवने ।
विद्वन्मानससरसि स्वैरं विहरस्व देवि हंसीव ॥ २५ ॥

---

# काशिकराजकीय-संस्कृतमहाविद्यालयः

लेखकाः—नेपालदेशीयमहाकवि —पं० श्रीकुलचन्द्रगौतमशर्माणः

दिष्ट्या ! दृग्म्यां जयन्ती खशरविधु (१५०) शरत्पूर्तिहेतोर्भवन्ती
दृष्टा विद्यालयस्य स्थितिगतिमहतः क्वीन्सकालेजनाम्नः ।
यस्य प्राग्वर्ति वृत्तं भुवनमविकदं स्वानुभूतं स्मरन्तः
काये रोमाञ्चवन्तः सगिरि परवशे मानसे गद्गदाः स्मः ॥ १ ॥

पर्यन्तोद्यानवर्यद्रुमसमधिगमोत्फुल्लवल्लीमतल्ली-
संमर्दप्रासनानाविधगुणपवनप्रीणितप्राणिवर्गः ।
यस्तुङ्गः संगतश्रीः कुशलजनमनःकल्पनालङ्घिशिल्पः
क्ष्माभृत्प्रासादभङ्गीमुपनमितसुखः सम्यगङ्गीकरोति ॥ २ ॥

सर्वार्थानां विधात्रीं प्रकृतिमनुपमां साधु संस्थाप्य पुंसां
पुंभावं तात्त्विकं तं घटयितुमनघं यत्नतश्चेष्टमानः ।
यस्तत्त्वाख्यानसृष्टत्रिभुवनहितकृत्सूक्तिभृद्भित्तिरम्यः
साङ्ख्ये सख्यं दधानः स्थित इति पटुभिः श्रीयते शास्त्रविद्भिः ॥ ३ ॥

वृत्तीनां दानहेतोरधिसुधि विधिना संप्रणीतः सहस्रा-
स्योद्गीतः संश्रितेभ्यः पदमखिलजगद्वन्दनीयं ददानः ।
यः प्रव्यक्तक्रमः सन् शिशुभिरपि समासादनीयः सहर्षै-
र्योगाम्नायेन मैत्रीं गत इति कृतिभिः सेव्यते शर्मकामैः ॥ ४ ॥

तत्तत्स्थानव्यवस्थां समुचितरुचिरां दर्शयित्वा, प्रयत्नं
द्वेधा बोधाय तन्वन् परिणतिसुखदं बाह्यमाभ्यन्तरं च ।
सिद्धिं कुर्वन् बहूनां बहुविधविधिभिः सार्थकानां पदानां
योऽद्धा श्रद्धाय शब्दागम इति सकलैर्मन्यते धन्यधीभिः ॥ ५ ॥

दोषाणां सद्गुणानामपि च परिचयं कारयन् दर्शयँस्ता
रीती रम्याः सदालंकृतिजननकृतानेकरूपप्रयत्नः ।

अर्थान् गूढाननेकान् ध्वनिभिरुपनतैर्बोधयन् मोदहेतून्
साहित्यश्रीसनाथः सहृदयनिवहैः श्रीयते यः सतृष्णैः ॥ ६ ॥

तस्यैतस्यैव तत्तद्गुणविजितभवे वैभवे वर्णनीये
सिद्धार्था नामविष्याम न हृतहृदयैः सन्नियुक्ताः सुहृद्भिः ।
निर्बाधं चेदवर्त्स्यत् कथमपि विपुलं दिष्ट्युग्मानुकूल्यं
चित्तान्तश्चेदवर्त्स्यत् सुकृतशतकृतः सार्वभौमः प्रबोधः ॥ ७ ॥

माध्वीकं विनिगृह्णतैव वचसा योऽन्वग्रहीत् संगता-
नौदार्यात् कृतकर्मणामपि मनो नृणामहार्षीच्च यः ।
आर्यवेनिसनामधेयमतुलप्रज्ञं तमध्यत्तता-
भाजं कश्चिरमीक्षितं स्थिरमतिर्विस्मर्तुमीष्टे जनः ॥ ८ ॥

आकारे मृदुता मतौ प्रखरता माने समुत्तुङ्गता
ज्ञाने निर्भरता मनस्यमलता वाचि व्यथाहारिता ।
संख्यावन्तमसंख्यसद्गुणगणं तं वेनिसाख्यं विना
नैकत्रैक्षि जनेन केनचिदपि क्षोणीतले भ्राम्यता ॥ ९ ॥

नानालङ्कृतिमञ्जुलं ध्वनियुतैस्तैस्तैर्गुणैः संभृतं
येन प्राञ्जलमन्ववादि सकलं वाल्मीकिरामायणम् ।
तेनैवाखिलसंस्कृताङ्ग्लविदुषां धन्यां धियं धिन्वता
विद्वत्ता-गुणिता-गुणग्रहिलता अस्य प्रमाणीकृताः ॥ १० ॥

साध्यक्षस्य सपण्डितस्य महतो विद्यालयस्याऽस्य न
प्रस्तावाय बृहद्भियां मितधियां वाग्विस्तरः शोभते ।
पर्याप्तं किल गौरवाय गुरुणो संक्षिप्तसत्यं वचः
श्रीगङ्गाधरशास्त्रिणां चरणयोः सम्बन्ध आसीदिति ॥ ११ ॥

मन्दानेव समागतान् बहुविधान् कुर्वन्निलावल्लभान्
सर्वानेव बुधान् विधाय विसृजन् क्षेमोदयाय क्षितेः ।
श्रीगङ्गाधरसन्निभः खलु भवन्नत्यद्भुतः शक्तिमान्
नासीन्नास्ति न वा भविष्यति जनो विद्वज्जनग्रामणीः ॥ १२ ॥

अन्योन्यारुचिसाधिताधिकविरोधानि स्फुरन्माधुरीं
श्रीगङ्गाधरशास्त्रिवर्यरसनामध्यास्य सर्वाण्यपि ।

शास्त्राणि स्पृहणीयसख्यसुखितान्याश्रित्य नृत्योत्सवं
निर्मन्यूनि दिनानि निन्युरुचितैः सम्बाधजैर्जागरैः ॥ १३ ॥

प्रातः पूरय नित्यकृत्यमखिलं निर्याहि शालां प्रति
च्छात्रान् पाठय सिंहगर्जितजिता घोषेण सर्वानपि ।
प्रत्यायाहि गृहान् पुनर्विविदिषून् आसायमध्यापय
ग्रन्थान् प्रस्तुतमुद्रणान् बहुगुणान् संप्रार्थितः शोधय ॥ १४ ॥

इत्थं यः प्रतिवासरं श्रमकरं कर्माऽकरोत्प्राणिना-
मुद्धाराय निबद्धधीर्निरवधिः सौजन्यवारां निधिः ।
तस्यैतस्य तुलां बिभर्तु कतमः प्राज्ञोऽतिदुष्प्रापया
क्षान्त्या निश्चलया धिया विमलया संपन्नया विद्यया ॥ १५ ॥

धामाख्यापितशक्तयः सरसया रामाख्यया विश्रुता-
स्तेऽप्यत्र श्रुतशालिनः समभवन्नध्यापकाः शास्त्रिणः ।
वाञ्छन् कीर्तिमभीष्टसत्कविपदः शिष्टाग्रणीभ्यो मुदा
येभ्यो निर्भरमध्यगीष्ट निखिलं साहित्यशास्त्रं जनः ॥ १६ ॥

एतेषां तु कथा वृथैव सकला येषां पदाम्भोजयो-
र्धूलिः केवलमेकला कृतधिया मूर्धानमारोपिता ।
पुण्यां सत्वरगत्वरीं बहुपथां भागीरथीजित्वरीं
गम्भीरां रसनाञ्चलाद्रसवतीं प्रावीवहद् भारतीम् ॥ १७ ॥

अस्य क्ष्मातलविश्रुतस्य महतो विद्यालयस्योच्चकैः
सौभाग्यं मितवादितामुपगताः सन्तः कियद् ब्रूमहे ।
यत्राभ्येत्य दयामयान्तरतया मूर्तः स तर्कागम-
श्छात्रान् पाठयति स्म विस्मयकरः कैलासचन्द्राभिधः ॥ १८ ॥

पुण्यस्याऽस्य सतोऽपि हा ! बत ! महाविद्यालयस्य स्वयं
नैपुण्यप्रतिपादने कृतधियः संपद्य खिद्यामहे ।
यत्र व्याकृतिविन्मणिः पिपठिषून् निर्माय नव्याकृतीन्
सामोदानतनोन्मनोरमगुणग्रामोऽपि दामोदरः ॥ १९ ॥

धन्यः सोऽयमनेकसद्गुणगणाकीर्णो हि विद्यालयो
यस्मिन्पाठकतां श्रयन्ननुपमः श्रीराममिश्रः सुधीः ।

कैर्वा साधु न पूज्यतां ननु नरैर्दैवीं गिरं व्याहरन्
लेखैः प्रौढिमसंभृतैरपि च यः प्रापूजि यत्र स्थितैः ॥ २० ॥

यत्राध्यापकतां गतो बहुमतां स्वीयैर्यशोभिः शुभै-
र्दिग्भागान् समदिद्युतद् द्युतिमतां ज्योतिर्विदामग्रणीः ।
तस्यैतस्य सुधाकरस्य वसुधाव्याख्यानतानाप्तः स्वयं
राशीकृत्य गुणान् प्रशंसतु कथं काशीनिवासी जनः ॥ २१ ॥

यस्मिन् शाश्वतविश्वविश्रुतयशास्तात्यापराख्यः स्वया
भूत्या भूषयति स्म शिष्यनिवहान् श्रीरामकृष्णः सुधीः ।
यस्मिन् भागवताभिधोऽप्यधिकधीराचार्य आचारवा-
नाचार्यान् विदधे बहूनपि जनानौदार्यपाथोनिधिः ॥ २२ ॥

यस्मिन्नेव बभूवुरच्छमतयोऽन्येऽपि स्वया विद्यया
यैर्भूरिश्रमभृद्भिरद्भुतगुणैरुद्भासिता भूरियम् ।
अस्मिंस्तस्य मिलन्मनीषिनिवहे सन्दर्शनीये महे
विश्वेशस्य विभोर्निपत्य पदयोरौन्नत्यमाशास्महे ॥ २३ ॥

— —

# राजकीय-संस्कृत-महाविद्यालय के प्रति

लेखक :—देवपुरस्कारविजेता पं० श्रीश्यामनारायण पाण्डेय

( १ )

यह विशाल मन्दिर वाणी का,
जीवन - पथ प्राणी प्राणी का।
सदियों से निर्भीक खड़ा है,
चिर विनोद बन कल्याणी का॥

( २ )

दिग् दिगन्त में भुजा पसारे,
नभ तक अपना शीश उठाये।
युग युग से कुछ बोल रहा है,
उर में झंझावात छिपाये॥

( ३ )

इसके सम्मुख विनत हिमालय,
इसके सम्मुख नत विद्यालय।
इसके गौरव से लज्जित हैं,
तीर्थ तीर्थ के सब देवालय॥

( ४ )

मानव में देवत्व भर रहा,
निस्तत्त्वों में तत्त्व भर रहा।
दिव्य लोक से उतर धरा पर,
कण्ठ कण्ठ में सत्त्व भर रहा॥

( ५ )

नहीं हिन्द का ही प्रकाश से,
जग का भी तम दूर किया है।
तृषित भ्रान्त पथ श्रान्त पथिक का,
अचिर यहीं श्रम दूर किया है॥

( ६ )

चीन, स्याम, जापान, जर्मनी,
रूस, ब्रिटिश, फ़ारस, अमरीका।
अपने गौरव के प्रकाश से,
तम हर कर गुरु बना सभी का॥

( ७ )

किन्तु एक ही रूप विश्व को,
खटक रहा है इस नवयुग में।
नूतनता - प्रिय जग के हित रे,
परिवर्तन होता युग युग में॥

( ८ )

आज विश्व की सौ सौ आँखें;
तेरे पथ की ओर लगी हैं।
आज भावनाएँ हम सबके,
अन्तर की फुफकार जगी हैं॥

( ९ )

जग की अगणित भाषाओं पर,
जिस संस्कृति की छाप पड़ी है।
वही अङ्क में तेरे आकर,
सुख से अपने आप पड़ी है॥

( १० )

रंग बिरंगे वस्त्र पहन कर,
विचर रहीं जग की भाषाएँ।
बाँध रूढ़ि बन्धन से उसकी,
दबा रहा क्यों अभिलाषाएँ॥

( ११ )

बन्धन से कर मुक्त उसे तू,
अभय साँस लेने दे भाई।
गुरु-आसन से भाषाओं को,
ज्ञान-दान देने दे भाई॥

( १२ )

बड़े बड़े गिरि बह जाते हैं,
युग में वह प्रवाह होता है।
डूब ताड़ भी जाते हैं वह,
युग-सागर अथाह होता है॥

( १३ )

आज विनय कानों में पड़कर,
मचा रही तूफ़ान हृदय में।
संस्कृत भाषा विहँस रही है,
पाषाणों के भव्य निलय में॥

( १४ )

आज देव-भाषा का मन्दिर,
बिना बुलाये बोल रहा है।
आज मुक्ति-प्रद विद्यालय यह,
बिना डुलाये डोल रहा है॥

( १५ )

फुफकारों से विश्व हिलाकर,
शेषनाग सी करवट लेगा।
अब युग के हय पर सवार हो,
एड़ मार कर सरपट लेगा॥

---

## काशिकराजकीयमहाविद्यालयीया छात्रपरिषद्

एतत्तु सर्वेषां विदितचरमेव, यच्छिक्षणसंस्थासु छात्राणां वक्तृत्वशक्तिविकासार्थं विचारशक्तेः संवर्धनार्थं च नूनं काचन सभापेक्षिता भवति, या छात्र-परिषद्, छात्र-समितिः— इति विविधोपनामभिः समलंक्रियते। या न केवलं वक्तृत्वादिशक्तिविकासायैव प्रभवति, अपि तु एवंविधसमितीनामायोजन-व्यवस्था-सञ्चालनप्रभृतिव्यापारेष्वपि नैपुण्यं सम्पादयन्ती छात्रान् व्यवहारयोग्यान् विदधाति। एवङ्कारं सामाजिक-राजनैतिक-जातीय-नानाविधोद्देश्यपूर्त्यै संस्थापितानां समितीनां वास्तविकप्रकारानपि परिचाययति, यथा भविष्णवश्छात्रा भविष्यत्काले कार्यक्षेत्रावतारोत्तरं स्वस्वाभिरुच्यनुकूलमेवंविधसभासंस्थापनैः समाजस्य जातेर्देशस्य वा वास्तविकीं सेवामनुष्ठातुं समर्था भवेयुरिति।

काशीस्थ-राजकीयमहाविद्यालयीयेषु व्यतीतेष्वेषु सार्धशतसंवत्सरेषु, यावदहं वेद्मि, एतादृशी काऽपि संस्था, या पूर्वोक्तोद्देश्यसाधनाय सहायभूता स्यात्, नासीत्।

यद्यपि म० म० पं० श्रीबापूदेवशास्त्रिमहाभागानां साभापत्ये एतद्विद्यालयीयोपाध्यायधौरेया भारतविख्यात म० म० पं० श्रीगङ्गाधरशास्त्रि-तैलङ्गमहोदयास्तथा बालसरस्वतीत्युपपदधारिणः पं० श्री बालशास्त्रिणः, अथ तत्सामयिकाः म० म० पं० श्रीकेशवशास्त्रिमराठे, म० म० पं० श्रीगोविन्दशास्त्रिभारद्वाज, पं० श्रीरामकृष्ण-शास्त्रिपरांजपे प्रभृतयोऽन्येऽपि विद्वद्वरेण्याः समितिमेकां सुचारु समचालयन्। परमस्याः महाविद्यालयीयाध्यापकैकाश्रिताया अपि महाविद्यालयेन सह साक्षात्सम्बन्धविरहेण तदीयविद्यार्थिनां विदुषाञ्च पूर्वोक्तोऽपेक्षितो लाभो न जातः। अत एवोपेक्षिता सा किञ्चित्कालानन्तरमेव नाममात्रावशेषतामुपगता।

एषा न्यूनता सर्वतः प्रथमं वर्तमानविद्यालयाध्यक्षमहोदयैः डा० श्रीमङ्गलदेवशास्त्रि-[ एम० ए०, डी० फिल्० ] महाभागैरनुभूता। अथ चैतदपनुत्त्यै तैः १९३८ खिस्ताब्द-प्रारम्भे परिषदोऽनिवार्यतामावश्यकताञ्चाध्यापकानां विद्यार्थिनाञ्च हृदयेषु सम्यक् प्रतिबिम्बयद्भिस्तस्मिन्नेव वर्षे जनवर्ये मासि २६तमे दिवसेऽस्याः संस्थापनसमारोहो महतोत्साहेन सह सर्वैः सम्पादितः।

परिषदेषा "काशिक-राजकीय-महाविद्यालय-च्छात्र-परिषद्" इति नामभूषया व्यभूष्यत। अस्याश्च च्छात्रेषु तदुपयोगिनः साहित्यादिसम्बन्धिनो विषयानाश्रित्यैव भाषणशक्तेर्विशेषतश्च संस्कृतभाषणशक्तेर्लेखशक्तेर्विचारशक्तेश्च सम्पादनम्परिवर्द्धनञ्चेति उद्देश्यं निरधार्यत।

तदुपायाश्च—

१—कमपि विषयमवलम्ब्य पक्षविपक्षरीत्याऽन्यथा वा सम्भाषणम्, तद्विषयनिरूपक-निबन्धपाठो वा।

२—तत्तद्विषयपारदृश्वनां विशेषज्ञानां काशिकराजकीयमहाविद्यालयीयानामपरेषां वा-मन्त्रितानान्तत्तद्विषयपरिचायकभाषणानामायोजनम्।

३—वाचनालयस्थापनम्परिचालनञ्च।

४—हस्तलिखिताया अर्थप्राचुर्ये मुद्रिताया वा पत्रिकायाः संपादनम्।

—इमे निर्णीताः।

तदाप्रभृत्येवास्या एकाधिवेशनं प्रतिमासं सम्पाद्यते। यदधुनाऽपि अविच्छिन्नरूपेण प्रचलति। प्रथमतस्तु—अधिकांशश्छात्राणामेतां विघ्नरूपामेव मन्यते स्म। परंमद्यत्वे न केवलं विद्यार्थिवर्गः किन्तु उपाध्यायसमुदायोऽपि सविशेषमुत्साहेनाऽत्राभिरुचिं प्रदर्शयति। इतोऽधिकं किम्भविष्यत्यस्याः सफलतायाश्चिह्नम्।

अद्य यावदस्या विशेषाधिवेशनेषु अनेकेषां विदुषां नानाविषयानधिकृत्य गवेषणापूर्णानि भाषणानि विद्यालये संवृत्तानि। तेषु चाधोनिर्दिष्टानि विशेषतोऽत्र समुल्लेखमर्हन्ति, तद्यथा (१) पं० श्रीदीनानाथ-शास्त्रिचुलेट-महोदयानां "भारतीयं ज्योतिःशास्त्रम्" (२) श्रीमतां पण्डितप्रकाण्डानां हाराणचन्द्रभट्टाचार्यमहोदयानां "शिक्षापद्धतिः" (३) गतमहायुद्धे सैनिकत्वेन विहितसेवानां पं० श्रीगोविन्द-विष्णु-गाडगीळमहाशयानाम् "आर्याणां युद्धशास्त्रम्" (४) पं० श्रीरामावतारशर्मणां "भगवद्गीताव्याख्यानेऽभिनवा दृष्टिः"।

अथैका "शारदा" नाम्नी हस्तलिखिताऽन्तरङ्गबहिरङ्गसुभगा त्रैमासिकी पत्रिका विद्यार्थिभिः सम्पाद्यते।

इत्थङ्कारं महाविद्यालयीयेतिहासे परिषदप्येषा निजं महत्त्वपूर्णमंशमभिनयति।

आशास्ते श्रीमदध्यक्षमहोदयानां डा० श्रीमङ्गलदेवशास्त्रिमहाभागानां श्रीमतां पूज्य-वर्याणामाचार्यधुर्याणामाशीः-परम्पराभिरेषोत्तरोत्तरमभिवृद्धिं यास्यतीति

विदुषां वशंवदो

राजारामभट्टभट्टः

मन्त्री का० रा० म० वि० छात्र-परिषद्

——

# गवर्नमेंट संस्कृत कालेज, बनारस, के अध्यापक (मार्च १९५२)



बैठे हुए—पं० भगवत्प्रसाद मिश्र, पं० सूर्यनारायण शुक्ल, पं० गोपालशास्त्री नेने, पं० शिवनाथ झारखण्डी, डा० मङ्गलदेव शास्त्री, एम्० ए०, डी० (फ़िल्० प्रिंसिपल), पं० बालबोध मिश्र, पं० गणपति शास्त्री मोकाटे, पं० नारायण शास्त्री खिस्ते, पं० शिवदत्त मिश्र

खड़े हुए—पं० करुणापति त्रिपाठी, पं० उमाकान्त झा, पं० गणपतिदेव शास्त्री, पं० विद्याविलास शुक्ल, पं० द्विजेन्द्रनाथ मिश्र, पं० मुकुन्द शास्त्री खिस्ते, पं० अनन्तशास्त्री फडके, पं० रघुनाथशास्त्री, पं० अनूप मिश्र, पं० मुरलीधर मिश्र, पं० अलखनिरञ्जन पांडे, पं० वीरेन्द्र अग्निहोत्री

## पोस्ट-आचार्य तथा साधोलाल रिसर्च स्कालर्स,



[पहली पंक्ति (बाँई ओर से)—मुरारीलाल नागर, रामनाथ दीक्षित, रामभूषण दास, यमुनादत्त त्रिपाठी, परमहंस मिश्र, चन्द्रदेव त्रिपाठी, [दूसरी पंक्ति—देवीदत्त पन्त, मनोहरलाल द्विवेदी, तेजनारायण ठाकुर, रामव्यास द्विवेदी, व्रजनन्दन मिश्र, बदरीनाथ मिश्र, गोविन्दराव वैजापुकर, रामसेवक पाण्डेय, रामभागवत पाण्डेय, [तीसरी पंक्ति—विन्ध्येश्वरी प्रसाद त्रिपाठी, योगेश्वर झा, मन्नूलाल द्विवेदी, पं० शिवनाथ झारखंडी (पुस्तकालयाध्यक्ष), डा० मङ्गलदेव शास्त्री (प्रिंसिपल), पं० नारायण शास्त्री खिस्ते, पं० देवदत्तशर्मोपाध्याय, सच्चिदानन्द मिश्र, त्रिलोकधर द्विवेदी, [चौथी पंक्ति—भैरवनाथ चालीसे, राजाराम भट्ट भट्ट, रामजी मिश्र, ओंकारनाथ द्विवेदी, देवचन्द्र झा

गवर्नमेन्ट संस्कृत कालेज, बनारस, (मार्च, १९४२)

# काशिकराजकीयसंस्कृतमहाविद्यालये

## 'विद्वद्गोष्ठ्याः' समारम्भः

गीर्वाणवाण्याः समुन्नतिमभिलषतां विदुषां वृत्तमिदं नूनं मनस्तोषाय भविष्यति, यदस्मिन्नेव वत्सरे काशिकराजकीयमहाविद्यालयस्य समाश्रयेण विभिन्नशास्त्रनिष्णातैरुक्तविद्यालयीयैरन्यैश्च काशीस्थैर्विद्वद्भिः संभूय सौमनस्यपूर्वकं स्वशास्त्रीयविचारपरिपाटीम्पुरस्कृत्यैव तत्तच्छास्त्रीयगूढगम्भीरविषयाणां विवेचनात्मकदृष्ट्या विचारो विधेय इति समुद्दिश्यैका 'विद्वद्गोष्ठी' संस्थापिताभूत्। सेयमसामान्या विद्वद्गोष्ठी नानोपायैर्भारतवर्षे संस्कृतभाषायाः साम्प्रतिकसमुन्नत्यै नितरां समुद्यतस्यास्य महाविद्यालयस्य सर्वथा महत्त्वानुरूपा भविष्यतीति आशास्यते। तस्या एव प्रारम्भिकाधिवेशनस्य सूचना विवरणं चाधस्तात्प्रकाश्यते—

सम्पादकः

## राजकीयमहाविद्यालये 'विद्वद्गोष्ठ्याः' प्रारम्भः

प्रायेण नाऽविदितमेतत्प्राचीनानां वाराणसेयानां विदुषां, यत् डॉ॰ ग्रिफ़िथमहोदयस्याध्यक्षतासमये 'संस्कृतसमाज' इति नाम्ना सुप्रसिद्धैका विद्वद्गोष्ठी ई॰ सन् १८७५ प्रभृति राजकीयमहाविद्यालयाध्यापकैः प्रवर्त्तिताऽऽसीदिति। यस्याश्चाधिवेशनानां विवरणानि तात्कालिके 'पण्डित'-पत्रे प्रकाशितान्यद्यापि तात्कालिकविदुषां पाण्डित्यप्रकर्षपरिज्ञानविषये तदुपयोगितां प्रख्यापयन्ति।

तदीयादर्शमेव मनसि निधाय काशिकराजकीयसंस्कृतमहाविद्यालयस्याध्यक्षमहोदयैः पुनरप्येका विद्वद्गोष्ठी प्रवर्त्तनीयेति प्रस्तूयते। विभिन्नशास्त्रनिष्णातैर्विद्वद्भिः सम्भूय तत्तच्छास्त्रविषयकनिबन्धद्वारा तद्विषयकविमर्शव्याख्यानादिभिश्च सर्वथा सौमनस्यपूर्वकं शास्त्रचर्चा विधेया। यया विदुषां प्रौढच्छात्राणां च महानुपकारः सम्भवेत्। तद्विवरणं च राजकीयपत्रिकायां यथावसरं प्रकाश्येत। तस्याश्च प्राथमिकमधिवेशनं ( ता॰ २।२।४२ ) फाल्गुनकृष्णप्रतिपदि मध्याह्नोत्तरं २ वादनसमये सरस्वतीभवने भविता। तत्र सर्वेषां भवतां सादरमुपस्थितिरपेक्ष्यते। प्रथमाधिवेशने चास्याः स्वरूप-कार्यपद्धति-नियमादिविषये प्राधान्येन विचारः करिष्यते।

श्रीमत्प्रिंसिपलमहोदयानामाज्ञया

नारायणशास्त्री खिस्ते

विद्वद्गोष्ठी-संयोजकः

३०—१—४२

# सरस्वतीभवने 'विद्वद्गोष्ठी'सभायाः प्रथमाधिवेशनस्य विवरणम्

अथ (ता० २।२।४२) फाल्गुनकृष्णप्रतिपदि सोमवासरे मध्याह्नोत्तरं द्विवादनसमये सरस्वतीभवने पूर्वसूचनानुसारं श्रीमत्प्रिंसिपलमहोदयानां सभापतित्वे प्राथमिकं विद्वद्गोष्ठ्यधिवेशनं प्रारब्धम्। सभापतिमहोदयाज्ञानुसारं संयोजकेन प्रथमतः सभासूचनापत्रं पठित्वा, ई० सन् १८७६ 'पण्डित'पत्रे प्रकाशितस्य 'संस्कृतसमाज' सभाधिवेशनस्य विवरणं सभ्येभ्यः श्रावितम्। तदनु सभापतिमहोदया एतादृशविद्वद्गोष्ठ्याः परमावश्यकतां, तद्द्वारा विदुषां सम्मेलनं, तेन मिथो ज्ञानवृद्धिं च चेतोग्राहिण्या सरण्या निर्दिशन्तः साधारणजनोपकृतये सभाकार्यं यदा कदाचिद् हिन्दीभाषायामपि भवेच्चेन्न हानिरित्युक्त्वा विद्वद्गोष्ठीप्रस्तावविषये यदि केषांचन्न विप्रतिपत्तिस्तर्हि तैर्निःशङ्कं स्वाभिप्रायः प्रकाश्यतामिति चोक्त्वा व्यरमन्। तदनु म० म० पं० चिन्नस्वामिशास्त्रिभिः, पं० सभापत्युपाध्यायैः, पं० फडके अनन्तशास्त्रिभिश्च विद्वद्गोष्ठीप्रस्तावस्तदावश्यकतां दर्शयद्भिः सहर्षमनुमोदितः। विद्वद्गोष्ठ्याः संस्कृतमहाविद्यालयसम्बद्धत्वाद् गीर्वाणवाण्यैव विदुषां गौरवस्य सुरक्षितत्वाद् विद्वद्गोष्ठी-कार्यं संस्कृतभाषयैव भवितुमर्हतीत्यपि सूचितम्। सभापतिमहोदयैश्च विदुषां संस्कृतवाग्व्यवहार-पाटवाय संस्कृतेनैव निबन्धप्रवचनादिकमनुमन्यमानैरपि, सत्यामावश्यकतायां विशेषनिबन्धानां हिन्दीभाषायामपि प्रवचनं प्रस्तुतम्। सोऽयं प्रस्तावः सर्वैः सभ्यैः सहर्षादरमनुमतः। ततः परं सर्वानुमत्या ग्रीष्मावकाशविशेषपर्वानध्यायादिवर्जं प्रत्येकं कृष्णप्रतिपदि विद्वद्गोष्ठ्या मासिकमधिवेशनं भवेदिति निश्चितम्। प्रत्यधिवेशनं केनाऽपि शास्त्रविशेषविदुषा विदुषा निर्दिष्टविषये साङ्गोपाङ्ग-विवेचनं निबन्धः पठनीयः। स च निबन्धो यथासंभवमधिवेशनात्पूर्वस्मिन्सप्ताहे सभापतिमहोदय-निकटे प्रेषणीयः, यतोऽन्ये सदस्यास्तत्र स्वपरिगृहीतशास्त्रविशेषदृष्ट्या विचारयितुं शक्नुयुः, निबन्ध-पाठश्रवणोत्तरं प्रकटीकुर्युश्च स्वान् स्वान् विमर्शान्, इत्थमेकस्यैव विषयस्य सकलशास्त्रदृशा विमर्शनं भवेदिति महानयं लाभः सम्भवेत्सर्वेषां सचेतसामिति सभापतिमहोदयप्रस्तुतोऽर्थः सर्वैः सभ्यैः सहर्षमनुमोदितः।

ततः परं भाविष्वधिवेशनेषु कान् कान् विषयानधिकृत्य कैः कैर्विद्वद्भिः के के निबन्धाः पठिष्यन्त इत्यत्र सर्वैः सभ्यैर्मिथो विमृश्याधोलिखितानुसारेण व्यवस्थापितम्—

| निबन्धः | प्रवक्तारः | समयः |
|---|---|---|
| १—देवतास्वरूपविचारः | पं० भगवत्प्रसादाः | जुलाई १९४२ |
| २—पुराणलक्षणविमर्शः (विशेषतः सर्गस्वरूपनिरूपणम्) | पं० फडके-अनन्तशास्त्रिणः | अगस्त ,, |
| ३—पञ्चाङ्गविमर्शः | पं० बलदेवमिश्राः | सितम्बर ,, |
| ४—वेदापौरुषेयत्वम् | म० म० पं० चिन्नस्वामिशास्त्रिणः | अक्टोबर ,, |

| निबन्धः | प्रवक्तारः | समयः |
|---|---|---|
| ५--रसस्वरूपविचारः | पं० खिस्ते-नारायणशास्त्रिणः | नवम्बर १९४२ |
| ६--शब्दस्वरूपविमर्शः | पं० मोकाटे-गणपतिशास्त्रिणः | दिसम्बर ,, |
| ७--वेदान्तिमतेन ख्यातिविचारः | पं० सूर्यनारायणशुक्लाः | जनवरी १९४३ |
| ८--राजशास्त्रविषयविमर्शः | पं० इन्दिरारमणशास्त्रिणः | फरवरी ,, |
| ९--प्राच्यपाश्चात्यदृष्ट्या गणितशास्त्र-पर्यालोचनम्, | श्रीशिवनाथझारखण्डीमहोदयाः | |
| १०—गोत्रप्रवरविचारः | पं० हरिनाथशास्त्रिणः | |
| ११—मुक्तिस्वरूपविचारः | पं० शिवदत्तमिश्राः | |

इत्थं व्यवस्थाप्य सभापतिमहोदयाज्ञानुसारं सभा विसर्जिता ।

प्रथमाधिवेशन उपस्थिता विद्वांसः—

१--सभापतिमहोदयपुरस्सराः सर्वे राजकीयमहाविद्यालयाध्यापकाः
२--सरस्वतीभवनस्थाः पुस्तकालयाधिकृताः परीक्षाकार्याधिकृताश्च
३—म० म० पं० चिन्नस्वामिशास्त्रिणः
४—पं० सभापत्युपाध्यायाः
५—पं० हरिनाथजीशास्त्रिणः
६—पं० नारायणदत्तत्रिपाठिनः
७—पं० पट्टाभिरामशास्त्रिणः
८--पं० ढोलीबालकृष्णशास्त्रिणः
९—पं० इन्दिरारमणशास्त्रिणः
१०-प्रायः सर्वे पोस्ट-आचार्य-साधोलाल—छात्राः

नारायणशास्त्री खिस्ते
( संयोजकः )

---

# हा ! हन्त !! हन्त !!!

( १ )

विश्वविख्यातवैदुषीवैभवा मिथिलालङ्कारा अपि भारतवर्षीयवर्त्तमानप्राच्यविद्वच्छिरोमणयो महामहोपाध्याय डाक्टर सर गङ्गानाथ झा, एम्० ए०, डी० लिट्०, एल्एल्० डी०, केटी० महोदया वार्द्धकसुलभामयोपसर्गेण विगतेऽब्दे प्रयागक्षेत्रे शिवसायुज्यमगमन्निति नितरां चेखिद्यते चेतः। डा० झामहोदयाः कतिपयवर्षाणि काशिकराजकीयमहाविद्यालयस्य प्रधानाध्यक्षपदमध्य-लञ्चक्रुरिति घनिष्ठ आसीत्तेषां महाविद्यालयेन सह सम्बन्धः। तेषां निधनेन प्राच्यविद्यायाः,

प्राच्यविद्याविदुषां च या महती क्षतिः सञ्जाता, सा नूनं दुष्पूरैव। तेषां नैसर्गिकं गाम्भीर्यम्, मितसत्यवादित्वम्, अनवरतं विद्याव्यसनित्वम्, सहजं विद्वत्पक्षपातित्वम्, महाभाग्यवत्त्वं च स्मरन्तो वयं, डा० झामहोदयाः सर्वथाऽसामान्या एवासन्नित्येव निर्विचिकित्सं ब्रूमहे। तैर्विरचितोऽनूदितः सम्पादितश्च भूयान् ग्रन्थराशिरेव प्राच्यपाश्चात्यविद्वद्हृदयसिंहासने तेषां स्थानमक्षुण्णं रक्षिष्यतीति बाढं वयं विश्वसिमः।

( २ )

काशीविश्वविद्यालयधर्मविज्ञानविभाग-प्रधानाध्यक्षचराणां महामहोपाध्याय पं० विद्याधर-मिश्रगौड़महोदयानां विगतेऽब्दे आकस्मिकं निधनं दुनोति नश्चेतः। तेषां प्रगाढं स्वविषय-पाण्डित्यं सौजन्यं च नूनमनन्यसामान्यमेवासीदिति दुष्पूरैवेयं क्षतिस्तपस्विन्याः सुरभारत्याः।

( ३ )

महानैयायिकानां सर्वतन्त्रस्वतन्त्राणां पं० पद्मनाभशास्त्रिमहोदयानां निधनमपि प्राचीन-साम्प्रदायिक-स्पष्टवादि-गुणग्राह्य-विद्वद्वरेण्यवियोजनमिति तथाविधानां विदुषामभावो नितान्तं कृन्तन्ति नो मर्माणि।

( ४ )

वैयाकरणकेसरिणः शब्दशास्त्रेण सर्वाङ्गीणतादात्म्यमापन्नास्तपोमूर्त्तयो राजकीयमहा-विद्यालयाध्यापकचरास्त्रिपाठि-देवनारायणशर्माणोऽस्मिन्नेव वर्षे ६।२।४२ तिथ्यां प्रातर्जाह्नवीतीरे प्राणायामं कुर्वाणा एव सपदि शिवसायुज्यमवापुरिति पुण्यमूर्तीनां तेषां वियोगो विद्यालयेन तत्रत्यैर्विद्वद्भिर्विद्यार्थिभिश्च सखेदमनुभूयते।

सम्पादकः

---

## अशुद्धिशोधनम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७ | ६ | १८७६ | १८७५ |
| ४७ | २० | १८६२ | १८६४ |
| ,, | ,, | १८७७ | १८७६ |
| ४६ | १९ | १९३१ | १९३२ |
| ,, | २२ | १९३४ | १९३६ |

काशिक-राजकीय-संस्कृत-महाविद्यालय-पत्रिका

# आवश्यकी सूचना

(१) पत्रिकेयं षाण्मासिकी प्रतिवर्षम्-एप्रिल-मासस्य अक्टोबर-मासस्य च प्रारम्भे सरस्वतीभवनात् प्रकाशयिष्यते।

(२) अस्याः खलु सरस्वतीभवनस्थैर्विद्वद्भिर्विद्यालयीयाध्यापकैरन्यैश्च स्वोपज्ञविचार-विचारकैर्निबद्धानामनुसन्धानमूलकानामन्येषाञ्चोपयोगिनां निबन्धानां प्रकाशनेन संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः सम्यगालोचनाप्रवृत्तेश्चोत्पादनं प्रोत्साहनं चैव मुख्यमुद्देश्यम्।

(३) उपरिनिर्दिष्टगुणविशिष्टानामेव लेखानामस्यां प्रकाशनविषये,

"डा० मङ्गलदेवशास्त्री, एम० ए०, डी० फ़िल० (ऑक्सन),
प्रिंसिपल,
गवर्नमेंटसंस्कृत-कालेज,
बनारस"

इति संकेतेन पत्रव्यवहारो विधेयः।

(४) पत्रिकाया ग्राहकत्वमभिलषद्भिः,

सुपरिन्टेन्डेन्ट,
प्रिंटिंग ऐण्ड स्टेशनरी,
संयुक्तप्रान्त, इलाहाबाद

इति संकेतेनैव पत्रव्यवहारो विधेयस्तन्मूल्यं च प्रेषणीयम्।

संपादकः

---

## समुत्कृष्टसंस्कृतवाङ्मयस्य प्रकाशनम्

### प्रिंसेस ऑफ़ वेल्स सरस्वतीभवन ग्रन्थमाला

प्रधान-संपादकः

डा० मङ्गलदेवशास्त्री, एम० ए०, डी० फ़िल० (आक्सन),
प्रिंसिपल, गवर्नमेंट-संस्कृत-कालेज, बनारस,

वेद-दर्शन-साहित्य-ज्यौतिष-तन्त्र-धर्मशास्त्रादिविषयकान् अद्य-यावदमुद्रितान् प्राचीनानुत्कृष्टग्रन्थान् विवेचनापुरःसरं तत्तच्छास्त्रनिष्णातैर्विद्वद्भिः संपाद्य प्रकाशयन्ती ग्रन्थमालेयं १९२०तमखिस्तवत्सरात्प्रभृति संयुक्तप्रान्तीयशासकानामाज्ञया प्रचरति। अस्यां चाद्य यावत् प्रायेणाशीतिसंख्यापर्यन्तं ग्रन्थाः प्रकाशिताः। तस्याः सूची संयुक्तप्रान्तीयगज़टपत्रे प्रायेण प्रकाश्यते। ग्रन्थमालायाः प्राप्तिस्थानम्—

सुपरिन्टेन्डेन्ट,
प्रिंटिंग ऐण्ड स्टेशनरी,
संयुक्तप्रान्त, इलाहाबाद

Printed by A. Bose, at the Indian Press, Ltd., Benares Branch.